Sheth Devchand Lalbhai Jain Pustakoddhar Fund Series. No. 84

# ŚRĪ BHĀVAPRABHA SŪRI'S

## Jainadharmavara-stotra, Godhūlikārtha and Sabhā-chamatkāra

ALONG WITH

His own Commentaries



EDITED WITH

INTRODUCTION IN SANSKRIT

BY

Prof. HĪRĀLĀL RASIKDĀS KĀPADIĀ, M. A.

EDITOR OF TATTVARTHADHIGAMASUTRA, ETC

PUBLISHED

BY

JIVANCHAND SĀKERCHAND JAVERI,

ONE OF THE HONORARY TRUSTEES OF

SHETH DEVCHAND LĀLBHĀI JAIN PUSTAKODDHAR FUND

First Edition ] A D 1933 [ 1250 Copies

*Price Rs. 3-0-0*

# समर्पणम्

सुविहितनामधेयाः सर्वानुयोगधराः श्रीजैनशासनप्रभावकाः
परमपूज्यास्तपोनिधय आचार्यप्रवराः

## श्री १००८ श्रीमद्विजयदानसूरीश्वराः !

भवत्पादानामगाधज्ञानस्य 'उपाध्यायश्रीमद्वीरविजयजीशास्त्रसङ्ग्रहा'-
दमूल्यपुस्तकानामविश्रान्तसंशोधनादिप्रयासानां चात्यनुप-
मसहायं मुहुर्मुहुर्लभमानाऽस्माकं

## श्रेष्ठि देवचंद लालभाइ जैनपुस्तकोद्धारसंस्था

पूज्यगुरुदेवाः !

तस्यैतादृगल्पोल्लेखो भवत्पादानामुपकारप्रदर्शने नालं

त-

था-

पि

अस्य विश्वप्रदीपकज्ञानस्यैकमिमं लघुं मयूखं भवादृशां
विमलकरकमले समर्प्याशतः कृतार्था भवामः ।

भवतां विनम्राः सेवकाः—

सुरत-गोपीपुरा,
वि स १९८९
शरद्पूर्णिमा
ऑ क्टोबर सन् १९३३

जीवणचंद साकरचंद जवेरी

अन्ये मानदाः कार्यवाहकाश्च ।

# સમર્પણ

સુવિહિતનામધેય, સર્વ અનુયોગધર, શ્રીજૈનશાસનપ્રભાવક
પરમ પૂજ્ય, તપોનિધિ, આચાર્યપ્રવર,

## શ્રી ૧૦૦૮ શ્રીમદ્ વિજયદાનસૂરીશ્વરજી !

અમારી આ સંસ્થાને, આપ પૂજ્યપાદના અગાધ જ્ઞાનની, અને
આપના દ્વારા "ઉપાધ્યાય શ્રીમદ્ વીરવિજયજી શાસ્ત્રસંગ્રહ"–
માંથી કિંમતી પુસ્તકોની તેમજ આપના સંશોધનાદિ
પ્રયાસોની અનુપમ મદદ વારંવાર મળતી રહી છે

તેની આટલી ટુંકી નોંધ, આપ પૂજ્ય મહર્ષિના ઉપકાર
પ્રદર્શન માટે પૂરતી નથી

તથાપિ

આ વિશ્વ-પ્રકાશક જ્ઞાનના એક આ લઘુ ગ્રંથને આપના
વિમલ કરકમળમાં સમર્પણ કરી
અંશતઃ કૃતાર્થ થઇયે
છિયે.

આપના વિનમ્ર સેવકો,
જીવણચંદ સાકરચંદ જવેરી
અને
અન્ય માનદ મંત્રીઓ.

સુરત-ગોપીપુરા,
વિ સ ૧૯૮૯,
શરદ્પૂર્ણિમા
ઑક્ટોબર સને ૧૯૩૩.

શ્રીશાંતિમ્.

# ➳ આમુખ ➳



શેઠ દેવચંદ લાલભાઇ જૈનપુસ્તકોદ્ધારે ગ્રંથાંક ૮૪ મા તરીકે **શ્રીભાવપ્રભસૂરિવરવિરચિત** (૧) શ્રીજૈનધર્મવરસ્તોત્ર, (૨) ગહુંલિકાર્થ અને (૩) સભાચમત્કાર પ્રો. **હીરાલાલ રસિકદાસ કાપડિયા** M. A દ્વારા તૈયાર કરાવી બહાર પાડવામાં આવ્યાં છે.

સદર ગ્રન્થ **શ્રીમતી આગમોદયસમિતિ** તરફથી પ્રસિદ્ધ કરવા વિચાર હતો, પરતુ ત્યાં અન્ય ગ્રંથો ચાલુ હોવાથી શેઠ દે૦ લા૦ જૈન પુ૦ ફંડમાંથી આ ગ્રથ બહાર પાડ્યો છે, અને તેવી અનુમતિ આપવા બદલ અમો આગમોદયસમિતિના કાર્યવાહકોનો આભાર માનિયે છિયે.

શ્રીયુત **હીરાલાલ**ભાઇએ ગ્રન્થાદિ તથા કવિ આદિ સંબધે પોતાના લેખમાં ઉલ્લેખ કર્યો હોવાથી અત્ર તે સંબંધે કાંઇ લખવાપણું રહેતુ નથી.

શ્રીયુત **હીરાલાલ**ભાઇનો લેખ સંસ્કૃતમય હોવાથી કવિશ્રીના જીવનચરિત્ર આદિના જીજ્ઞાસુ ગૂજરાતી વાચકવૃન્દને **શ્રીમતી આગમોદય સમિતિ** તરફથી બહાર પડેલ **શ્રીભક્તામર-સ્તોત્રની પાદપૂર્તિરૂપ કાવ્યસંગ્રહ** (ભાગ ૧-૨)ની પ્રસ્તાવના વાંચવા વિનતિ છે

વિદ્વાન્ મુનિ મહારાજાઓએ તથા ભંડારોના કાર્યવાહક મહાશયોએ હસ્તલિખિત પ્રતો આપવાની ઉદારતા દાખવી છે તે બદલ તેઓનો તેમજ અન્ય મદદ કરનારાઓનો અંત કરણથી આભાર માનિયે છિયે

**સુરત**–ગોપીપુરા.
સ. ૧૯૮૯ શરદ્પૂર્ણિમા.
ઑક્ટોબર સને ૧૯૩૩.



લિ૦
**જીવણચંદ સાકરચંદ જવેરી**
તથા
અન્ય માનદ ટ્રસ્ટીઓ.



# विषयानुक्रमणिका





# प्रस्तावना

"पूर्णानन्दमयं महोदयमयं कैवल्यचिद्दृग्मयं
रूपातीतमयं स्वरूपरमणं स्वाभाविकीश्रीमयम् ।
ज्ञानोद्द्योतमयं कृपारसमयं स्याद्वादविद्यालयं
श्रीसिद्धाचलतीर्थराजमनिशं वन्देऽहमादीश्वरम् ॥"

प्रसिद्धिं नीयमानेऽस्मिन् ग्रन्थे मुख्यतया विराजति कृतित्रितयं श्रीभावप्रभसूरिवराणाम् । तत्रैकैकां कृतिमुद्दिश्य यथासाधनं प्रस्तूयते परामर्शः । तावत् आरम्भे तार्किकचक्रचूडामणि-[1]श्रीसिद्धसेनदिवाकरै रचितस्य कल्याणमन्दिरस्तोत्रस्य चतुर्थस्य चरणस्य [2]पूर्तिरूपेण

---

१ साम्प्रदायिकोऽयमुल्लेख. ।

२ जैनसाहित्ये विविधानि पादपूर्तिरूपाणि काव्यानि सन्ति, यथाहि—

(१) वीरभक्तामरम्, (२) नेमिभक्तामरम्, (३) सरस्वतीभक्तामरम्, (४) शान्तिभक्तारम्, (५) पार्श्वभक्तामरम्, (६) ऋषभभक्तामरम्, (७) प्राणप्रियप्रारम्भिकाक्षरमय नेमिभक्तामरम्, (८) दादापार्श्वभक्तामरम्, (९) श्रीजिनभक्तामरम्, (१०) वल्लभभक्तामरम्, (११) सूरीन्द्रभक्तामरम्, (१२) आत्मभक्तामरम्, (१३) श्री-ऋषभदेवजिनस्तुतय , (१४–१५) कालुभक्तामरस्तोत्रे ( कानमल्लप्रणीत सोहनलालप्रणीतं च ) ।

एतेषु प्रथमे द्वे भक्तामरपादपूर्तिरूपकाव्यसङ्ग्रहस्याद्ये विभागे प्रसिद्धिं नीते, तत्त्रिकं तु द्वितीये विभागे । षष्ठाष्टमनवमानि तृतीये विभागे प्रसिध्यमानानि । एतानि सर्वाण्युद्दिश्य किमपि वक्तव्यं निवेदित मया भक्तामर–कल्याणमन्दिरनमिऊणस्तोत्रत्रयस्य प्रस्तावनायां ( पृ. १३–१५ ), अत. पिष्टपेषणेनात्र किम् ? । नवकल्लोलपार्श्वभक्तामर-मपि समस्तीति केचित् ।

(१६–१७) ससारदावानलेतिस्तुते. समस्तानां पादानां पूर्तिरूप श्रीप्रथमजिनस्तवनं श्रीपार्श्वजिनस्तवनं च.। एतदर्थं समीक्ष्यतां जैनस्तोत्रसङ्ग्रहस्य प्रथमो विभाग ( पृ. ६५–६९ ) ।

(१८) ससारदावानलेत्याद्यपद्यस्य समस्तानां चरणानां पूर्तिरूपाः श्रीवीरजिनस्तुतयः ।

(१९) कल्याणमन्दिराद्यपद्यचरणचतुष्टयपूर्तिरूपा वीरजिनस्तुति· ।

(२०) सकलकुशलेति पद्यस्य सकलपादपूर्तिरूपा श्रीशान्तिजिनस्तुतय ।

(२१) श्रेय श्रियां मङ्गलेति काव्यस्य समग्रपादपूर्तिरूपा श्रीपार्श्वजिनस्तुतयः ।

(२२) स्नातस्येति पद्यस्य सम्पूर्णत. पादपूर्तिरूपा. श्रीवीरजिनस्तुतय ।

(२३) श्रीनेमि पञ्चरूपेत्यादिज्ञानपञ्चमीस्तोत्रस्य तुरीयस्य चरणस्य पादपूर्तिरूपा ज्ञानपञ्चमीस्तुतय ।

एतेषामन्तिमानां षण्णां जिज्ञासुभि. प्रेक्ष्यतां जैनस्तोत्रसङ्ग्रहस्य द्वितीयो विभाग. ।

संसारदावानलेतिस्तुते· प्रत्येकपादपूर्तिरूपं काव्यम् । 'माडवगढका मन्त्री अथवा पेथडकुमारका परिचय'-सञ्ज्ञकस्य पुस्तकस्य परिशिष्टेऽस्ति ।

उवसग्गहरस्तोत्रस्य सर्वेषां पादानां पूर्तिरूपं श्रीपार्श्वस्तोत्रम् । एतदर्थं निरीक्ष्यतां श्रेष्ठिदेवचन्दलालभाई जैन-पुस्तकोद्धारसंस्थाया ८० तमो ग्रन्थ ( पृ ४५–४८ ) ।

प्रवर्तकश्रीमत्कान्तिविजयविनेयै श्रीचतुरविजयै प्रणीते कल्लाणकदेतिस्तुतिपादपूर्तिरूपे काव्ये । एतज्जिज्ञासु-भि प्रेक्ष्यतामात्मकान्तिप्रकाशः ( पृ. ११०–१११ ) ।

अयोगव्यवच्छेदद्वात्रिंशिकाया पादपूर्तिरूप काव्यं वर्तत इति मे श्रुतिपथमागतम्, न तु नयनगोचरतां गतम् ।

गुम्फितं श्रीजैनधर्मवरस्तोत्रं लक्ष्यीक्रियते । अस्य समस्यारूपस्य स्वोपज्ञवृत्तिविभूषितत्वं च समर्थ्यते निम्नलिखितेन पद्ययुगलेन टीकाग्रगतेन—

"नत्वा पार्श्वजिनेन्द्राय, गुरवे वाणयेऽपि च ।
'कल्याणमन्दिरा'न्त्याङ्घ्रि—समस्यारचनाश्रितम् ॥ १ ॥
'जैनधर्मवरस्तोत्रं', कृतं यन्मयका मुदा ।
तस्य च क्रियते वृत्तिः, श्रीभावप्रभसूरिणा ॥ २ ॥"—युग्मम्

इदं स्तोत्रं मूलमात्रं प्राकाश्यं नीतं काशिकश्रीयशोविजयजैनपाठशालया जैनस्तोत्रसङ्ग्रहस्य प्रथमे भागे । तत्र २३तमे पृष्ठेऽस्य 'श्रीजैनधर्मवरसंस्तवन'मिति नाम सन्दर्शितम् । तदपि समीचीनमित्यवसीयतेऽस्य प्रान्तस्थेन प्रशस्तिरूपेण निम्नलिखितेन पद्येन—

"भावप्रभाख्यवरसूरिगणाधिपेन
'श्रीजैनधर्मवरसंस्तवनं' सुरम्यम् ।
शिष्यस्य कौतुककृते रचितं सुबोधं
'कल्याणमन्दिर'सदन्तिमपादलग्नम् ॥ ४५ ॥"

( अभिनव )'कल्याणमन्दिर'रूपेण जैनग्रन्थावल्यां २१५ तमे पृष्ठे यस्य निर्देशः समस्ति स एतत्परत्वे एवेति सम्भावना । निश्चयस्तु प्रतिदर्शनं विना कथं स्यात् ? ।

जैनधर्मवरस्तोत्रस्य पद्धतिः—

उपर्युक्तविवेचनेन स्पष्टीभवति यदुतास्य स्तोत्रस्य आद्यचरणत्रयं कविराजैः स्वयं निरमायि, अवशिष्टमतुर्थचरणस्तु सुप्रसिद्धजैनस्तोत्ररत्नस्यान्तिमः ।[१] एतादृशानि काव्यानि वर्तन्ते, यथाहि—

---

नैषधीयचरितपादपूर्तिरूपं श्रीशान्तिनाथचरित्रम् ।
शिशुपालवधपादपूर्तिरूपं श्रीदेवानन्दाभ्युदयकाव्यम् ।
मेघदूतपादपूर्तिरूपाणि विविधानि काव्यानि ।
'जिनसहित'स्तोत्रपादपूर्तिरूपं श्रीजयपद्मसिंहाख्यस्तोत्रम् । जैनस्तोत्र तथा स्तवनसंग्रह नामेनावित सम्बन्धे पुस्तके १९ तमे पेसलीभावे प्रसिद्धिं नीतम् ।

१ एतस्य पञ्चसमरूप सादृश्यं दरीदृश्यते श्रीनेमिभक्तामरस्य अवतरणिकागतयोर्निम्नलिखितयोः पद्ययोः—

"नत्वा श्रीपार्श्वनाथाय गुरवे वाग्देव्येऽपि च ।
भक्तामर'स्यान्त्याङ्घ्रि—समस्यारचनाश्रितम् ॥ १ ॥
नेमिस्तोत्रसं काव्यं कृतं यन्मयका मुदा ।
तस्य च क्रियते वृत्तिः श्रीभावप्रभसूरिणा ॥ २ ॥"

२ अनेन समस्यापूर्ति स्वरूपाकारणम् ।

३ पूर्वनिर्दिष्टानां पादपूर्तिरूपाणां काव्यानां प्राचुर्यं विद्यते जैनसाहित्ये । तत्र भक्तामरपादपूर्तिरूपाः कृतयो निर्दिष्टा मया नामोल्लेखेन भक्तामरपूर्तिकायाम् । मेघदूतसमस्यारूपाणां काव्यानां नामानि सूचितानि वीरभक्तामरस्य प्रस्तावे (पृ १) ।

(१) श्रीकान्तिविजयगणिकृतं श्रेष्ठिप्रेमचंद रतनजी भाण्डागारसत्कम् । (२) लींबडी भाण्डागारसत्कं १६१३ क्रमाङ्कलक्षितम्

(३) प्रवर्तकपुङ्गवश्रीमत्कान्तिविजयसत्कं श्रीप्रेमजीमुनिवरविरचितम् । अत्र प्रथमं तु नोपलब्धं, स्वर्गस्थशास्त्रविशारदश्रीविजयधर्मसूरिसङ्कलिते प्रशस्तिसङ्ग्रहे उल्लेखेऽपि सति । तृतीयं तु मुद्रितमस्मिन् ग्रन्थे परिशिष्टरूपेण ।

अस्मिन् श्रीजैनधर्मवरस्तोत्रे प्रसङ्गोपात्ता विविधा: [1]कथा मनोरञ्जकशैल्या गुम्फिता दरीदृश्यन्ते । न केवलं गीवार्णगिरायां प्राकृतभाषायां च साक्षिरूपा: पाठा: सन्ति, किन्तु गूर्जरायां 'डिंगळ'(?)सञ्ज्ञकायां च । अपरञ्च स्तोत्रकर्तृणां गूर्जरभाषाया: पाण्डित्यं किंविधमिति जिज्ञासा तृप्यति [2]गूर्जरोल्लेखावलोकनेन । किञ्च कतिपयानां गूर्जरशब्दानां संस्कृतरूपेण परिवर्तनमपि ग्रन्थकारैरकारीति तर्क्यते । यथाहि—

| पृष्ठाङ्क: | संस्कृतपरिवर्तनम् | गूर्जररूपम् |
|---|---|---|
| ११४ | गान्छिक | घांची |
| ५० | घोटक | घोडो |
| ४२ | चोप्पडक | चोपडा |
| ४२ | झोलक | झोळी |
| ४२ | थकित | थाकेल |
| ६१ | नीभाडक | नीभाडो |
| ४८ | मण्डक | मांडो |
| ११ | मनो दत्त्वा | मन दइने |
| ५,१२ | विचाल | वच्चे |
| ४२ | हाक-हीक-हकोठा: | हाकोटा |

हिन्दीभाषानैपुण्यमीमांसार्थं विद्यन्ते चतस्र: पङ्क्तय: ९८तमे पृष्ठे । दिग्यानामधिकार: (पृ. ११४–११५), श्रीपाशचन्द्रमतखण्डनं (पृ. ६६–६७), श्रीनेमिनाथस्य महादेवेन सह सन्तुलनं (पृ. ६८–६९), 'ॐभूर्भुव:स्व:' इत्यादिवैदिकगायत्र्या नमस्काररूपमहागायत्र्या: प्रतिच्छायारूपत्वं, सिद्धपुत्रेति प्राचीनपन्थप्रदर्शनमित्यादिका विविधा विषया वर्तन्तेऽस्यामाद्यकृतौ ।

---

१ एका तु वसुदेवहिण्ड्या समुद्धृता । समीक्ष्यतां द्वात्रिंशसमं पृष्ठम् ।

२ प्रेक्ष्यतां ४, ५, २९, ३०, ७७, ८२–८६ अङ्काङ्कितानि पृष्ठानि ।

गुम्फितं श्रीजैनधर्मवरस्तोत्रं स्पष्टीक्रियते । अस्य समस्यारूपत्वं स्वोपज्ञवृत्तिविभूषितत्वं च समर्थ्येते निम्नलिखितेन पद्ययुगलेन टीकाप्रगतेन—

"नत्वा पार्श्वजिनेन्द्राय, गुरवे भावयेऽपि च ।
'कल्याणमन्दिरा'न्त्याङ्घ्रि—समस्यारचनाश्रितम् ॥ १ ॥
'जैनधर्मवरस्तोत्रं', कृतं यन्मयका मुदा ।
तस्य च क्रियते वृत्तिः, श्रीभावप्रभसूरिणा ॥ २ ॥"—युग्मम्

इदं स्तोत्रं मूलमात्रं प्राकाश्यं नीतं काशिकश्रीयशोविजयजैनपाठशालया जैनस्तोत्रसङ्ग्रहस्य प्रथमे भागे । तत्र २३तमे पृष्ठेऽस्य 'श्रीजैनधर्मवरसंस्तवन'मिति नाम सन्दर्शितम् । तदपि समीचीनमित्यवसीयतेऽस्य प्रान्तस्थेन प्रशस्तिरूपेण निम्नलिखितेन पद्येन—

"भावप्रभाख्यवरसूरिगणाधिपेन
'श्रीजैनधर्मवरसंस्तवनं' सुरम्यम् ।
शिष्यस्य कौतुककृते रचितं सुबोध
'कल्याणमन्दिर'सदन्तिमपादलग्नम् ॥ ४५ ॥"

( अभिनव )'कल्याणमन्दिर'रूपेण जैनग्रन्थावल्यां २१५ तमे पृष्ठे यस्य निर्देशः समस्ति स एतत्परत्वे एवेति सम्भावना । निश्चयस्तु प्रतिदर्शनं विना कथं स्यात् ? ।

जैनधर्मवरस्तोत्रस्य पद्धतिः—

उपर्युक्तविवेचनेन स्पष्टीभवति पद्धतास्य स्तोत्रस्य आद्यचरणत्रयं कविराजैः[2] स्वयं निरमायि, अवशिष्टचतुर्थचरणस्तु सुप्रसिद्धजैनस्तोत्ररत्नस्यान्तिमः ।[3] एतावन्ति काव्यानि पर्यन्ते, यथाहि—

नैषधीयचरितपादपूर्तिरूपं श्रीशान्तिनाथचरितम् ।
शिशुपालवधपादपूर्तिरूपम् श्रीदेवानन्दाभ्युदयमहाकाव्यम् ।
मेघदूतपादपूर्तिरूपाणि विविधानि काव्यानि ।

शिवमहिम्न'स्तोत्रपादपूर्तिरूपं श्रीजिनमहिम्नःस्तोत्रम् । जैनस्तोत्र तथा स्तवनसंग्रह अर्थसहित सम्पूर्ण पुस्तके १९ तमे पृष्ठे प्रसिद्धिं नीतम् ।

१ एतस्य पद्यद्वयस्य सादृश्यं वरीवर्त्यते श्रीनेमिभक्तामरस्य अवचूरिकाप्रान्तयोर्निम्नलिखितयोः पद्ययोः—

"नत्वा श्रीपार्श्वनाथाय गुरवे भावयेऽपि च ।
'भक्तामर'स्याङ्घ्रि—समस्यारचनाश्रितम् ॥ १ ॥
नेमिभक्तामरं काव्यं कृतं यन्मयका मुदा ।
तस्य च क्रियते वृत्तिः श्रीभावप्रभसूरिणा ॥ २ ॥"

२ अनेन समस्यापूर्ति रचनाकारणम् ।

३ पूर्वनिपाती पादपूर्तिरूपाणां काव्यानां प्राचुर्यं विद्यते जैनसाहित्ये । तत्र भक्तामरपादपूर्तिरूपाः कृतयो निर्दिष्टा मया नामोल्लेखेन भक्तामरभूमिकायाम् । मेघदूतसमस्यारूपाणां काव्यानां नामानि सूचितानि वीरभक्तामरस्य उपोद्घाते ( पृ. १ ) ।

एतेषां लक्ष्मीरत्ननामा ज्येष्ठगुरुबन्धुरिति समवगम्यते अम्बडतापसरासकस्य प्रान्तभागगतेन निम्नलिखितेन काव्येन—

"वडा गुरुभ्राता तेहना कहीहं लक्ष्मीरतन इंणें नांमें हे
तिणे श्रीपूज्यनइ वीनती कीधी रास रच्यो प्रकांमें हे"

समर्थ्यते चेदं श्रीराजविजयसत्कायाः 'सप्तपदार्थी'प्रतेः प्रान्तस्थेन उल्लेखेन । स चायम्—

"संवत् १७५२ वर्षे शुक्लपक्षे पोस सुदी १५ वाररवौ ॥ तद्दिने श्रीपाटणमध्ये कृतचातुर्मासके श्रीपूर्णिमापक्षे । प्रधानशापायां ॥ भट्टारक १०८ श्रीश्रीमहिमाप्रभसूरि ॥ तत्शिष्यसुविनेयी ॥ मुनिलक्ष्मीरत्नलिवीकृत्य" ।

लालजीत्याह्वयोऽपरो गुरुबन्धुरिति ज्ञायते प्रो० पिटर्सन् (१८८६–९१)रिपोर्टसञ्ज्ञकपुस्तकस्थेनोल्लेखेन । स च यथा–

"तत्पट्टे भट्टारकश्रीश्रीश्रीश्रीमहिमाप्रभु(भ)सूरिः । तत्सि(च्छि)ष्य सुविनेयी(यि)मुनिलालजीकेनेयं पुस्तिका लिखिता"

भाणरत्ननामधेय एको विनेय इति प्रतीयते 'जैनधर्मवरस्तोत्र'स्य स्वोपज्ञवृत्तेः प्रान्तस्थेन निम्नसूचितेन पाठेन—

द्वितीयो ज्योतीरत्नाह्वय इति ज्ञायते प्रतिमाशतकस्य लघुवृत्तिगतेन निम्नलिखितेन पाठेन—

"इति श्रीमत्पूर्णिमागच्छीयभट्टारकश्रीभावप्रभसूरिसमुद्धृता 'प्रतिमाशतक'लघुवृत्तिरियं शिष्यज्योतीरत्नस्य हेतवे सम्पूर्णा"

हेमचन्द्राभिधस्तृतीयश्छात्र आसीदित्यनुमीयते सभाचमत्कारस्य निम्नोल्लिखितया पङ्क्त्या—

"महिमाप्रभसूरीश तेहना विनेयी भावे कह्या
एक एकथी करी दुगुणा हेमचंद हेते वह्या"

सूरिवराणां गुरुपरम्परा—

एतेषां कविवराणां गुरुपरम्पराऽवगम्यते वुद्धिलविमलासतीरासगतेनोल्लेखेन[1] । स चायम्–

"'प्रधान' सापा जीहां सोभति पूनिंम गच्छ हो जगमांहि प्रसीद्ध
श्रीविद्याप्रभ सूरीसरा भट्ट जीति हो वादि पद लीध शी० ८
तस पट उदयाचल रवि भट्टारक हो ललीतप्रभसूरींद
ललीत वाणी जेहनी सूंणी भवि भाजें हो भव भवना फंद शी० ९

[1] पूर्वनिर्दिष्टस्य सङ्कलितस्य प्रशस्तिसङ्ग्रहस्याधारेण कृतोऽयमुल्लेखो मया । लेखकदोषपरिहारार्थं न क्रियते प्रयासोऽत्र ।

श्रीमावप्रभसूरीश्वराणां परिचितिः—

के इमे श्रीमावप्रभसूरयः कर्हि कं मण्डल मण्डयाञ्चक्रिवांसः केषां सन्निधौ पारमेश्वरीं प्रव्रज्यां जगृहुः कांस्कान् ग्रन्थान् जग्रथुरिति जिज्ञासावृन्दे विमर्शपथपान्थतां प्राप्ते सति यथास्पर्श क्रियते साधनानुसारं प्रयासोऽयं मया मन्दमेधसा। तावत् श्रीजैनधर्मवरस्तोत्रस्य स्वोपज्ञवृत्तेः प्रान्तसे-नोल्लेखेनावगम्यते यदिमे सूरिवराः श्री'ऊकेश'वंशज्ञातीय'वाघी' गोत्रसाहाश्रीमाणक्षणपत्नीबा लिमदेवीकुक्षेः समुत्पन्नाः। एतेषां जन्मस्थलसमयादिवृत्तान्तो न मे दृष्टिपथं श्रुतिमार्गं वाऽऽगतः।

दीक्षासमयेऽभिधानम्—

एतेषां सूरिपदप्राप्तिपूर्वं 'भावरत्न'ेति नामासीत्। तत्र एभिर्विरचितस्य श्रीनेमिभक्तामरस्य स्वोपज्ञटीका( पृ १६३ )गता निम्नलिखिता पङ्क्तिः प्रमाणम्—

"एतद्विशेषणेन शिष्यावस्थायां 'भावरत्न' इति निजनाम कविना दर्शितम्। सूरिपदप्राप्तौ तु 'भावप्रभ' इति नाम लब्धमिति।"

सूरिपदम्—

एतेषां सूरिपदवीप्रदानमहोत्सवोऽकारि १७७२समवैक्रमीयहायनस्य माघमासस्य शुक्ले पक्षे भावसारश्रीतेजसीश्रेष्ठिवरेण स्वद्रव्यव्ययेनेति ज्ञायते श्रीजैनधर्मवरस्तोत्रस्य स्वोपज्ञवृत्तेः प्रान्त भागावलोकनेन। समर्थ्यते चेदं न्यायाचार्य-न्यायविशारद-वाचकपुङ्गव-श्रीमद्यशोविजय गणिगुम्फितस्य प्रतिमाशतकस्य लघुवृत्तेः प्रशस्तिगतेन निम्नलिखितेन पद्ययुगलेन—

"श्री'श्रीमालि'सुवीरवंशकमले श्रीराजहंसोपमो
रामाकुक्षिसमुद्भवो जयवतीदेहाङ्गजो दीप्तिमान्।
जातो योऽखिलसाधुकारतिलकः श्रीतेजसी श्रेष्ठिराट्
तेन भावधरेण यत्पदमहो द्रव्यव्ययैर्निर्मितः ॥ ६ ॥

सूरिभावप्रभेणाख्यो, तेनानाभोगतो मया।
वृत्तौ पृथक्कृतायां यत्, तच्छोध्यं विबुधैरसत् ॥ ७ ॥"

सूरिवरपरिवारः—

कैः कैर्गुरुवान्धवैः शिष्यैः प्रशिष्यैश्च सार्धमिमे पूर्णिमागच्छीयाः सूरिशार्दूलाः सौधपाद पद्मैः पावयामासुः पृथ्वीपीठमिति पर्यालोचने प्रवृत्ते यदवगतं तृप्तिवेयत, यथा—

१ अनेन समाननामधेयेन वा 'देवधर्मपरीक्षाप्रतिः समस्ति' याऽधुना पाटीतान्यगत'श्रीआनंदजीकल्याणजी पेढी'भाण्डागारे वर्तते।

२ अथवा रचनासमयोऽप्यवगम्यते निम्नलिखितपद्येनानेन—

'व्योमाष्ट( १७११ )मिते वर्षे ... ।
... देवगुरौ ... पूर्णेयं वृत्तिरुत्तमा ॥ ८ ॥"

एतेषां लक्ष्मीरत्ननामा ज्येष्ठगुरुबन्धुरिति समवगम्यते अम्बडतापसरासकस्य प्रान्तभागगतेन निम्नलिखितेन काव्येन—

"वडा गुरुभ्राता तेहना कहीइं लक्ष्मीरतन इंणं नामें हे
तिणे श्रीपूज्यनइ वीनती कीधी रास रच्यो प्रकामें हे"

समर्थ्यते चेदं श्रीराजविजयसत्कायाः 'सप्तपदार्थी'प्रतेः प्रान्तस्थेन उल्लेखेन । स चायम्—

"संवत् १७५२ वर्षे शुक्लपक्षे पोस सुदी १५ वाररवौ ॥ तद्दिने श्रीपाटणमध्ये कृतचातुर्मासके श्रीपूर्णिमापक्षे । प्रधानशापायां ॥ भट्टारक १०८ श्रीश्रीमहिमाप्रभसूरि ॥ तत्शिष्यसुविनेयी ॥ मुनिलक्ष्मीरत्नलिवीकृत्य" ।

लालजीत्याह्वयोऽपरो गुरुबन्धुरिति ज्ञायते प्रो० पिटर्सन् (१८८६-९१) रिपोर्टसञ्ज्ञकपुस्तकस्थेनोल्लेखेन । स च यथा-

"तत्पट्टे भट्टारकश्रीश्रीश्रीश्रीमहिमाप्रभु(भ)सूरिः । तत्सि(च्छि)ष्य सुविनेयी(यि)मुनिलालजीकेनेयं पुस्तिका लिखिता"

भाणरत्ननामधेय एको विनेय इति प्रतीयते 'जैनधर्मवरस्तोत्र'स्य स्वोपज्ञवृत्तेः प्रान्तस्थेन निम्नसूचितेन पाठेन—

द्वितीयो ज्योतीरत्नाह्वय इति ज्ञायते प्रतिमाशतकस्य लघुवृत्तिगतेन निम्नलिखितेन पाठेन—

"इति श्रीमत्पूर्णिमागच्छीयभट्टारकश्रीभावप्रभसूरिसमुद्धृता 'प्रतिमाशतक'लघुवृत्तिरियं शिष्यज्योतीरत्नस्य हेतवे सम्पूर्णा"

हेमचन्द्राभिधस्तृतीयश्छात्र आसीदित्यनुमीयते सभाचमत्कारस्य निम्नोल्लिखितया पङ्क्त्या—

"महिमाप्रभसूरीश तेहना विनेयी भावे कह्या
एक एकथी करी दुगुणा हेमचंद हेते वह्या"

सूरिवराणां गुरुपरम्परा—

एतेषां कविवराणां गुरुपरम्पराऽवगम्यते बुद्धिलविमलासतीरासगतेनोल्लेखेन[1] । स चायम्-

"'प्रधान' सापा जीहां सोभति पूर्निम गच्छ हो जगमांहि प्रसीद्ध
श्रीविद्याप्रभ सूरीसरा भट्ट जीति हो वादि पद लीध शी० ८
तस पट उदयाचल रवि भट्टारक हो ललीतप्रभसूरींद
ललीत वाणी जेहनी सूंणी भवि भाजें हो भव भवना फंद शी० ९

---

१ पूर्वनिर्दिष्टस्य सङ्कलितस्य प्रशस्तिसङ्ग्रहस्याधारेण कृतोऽयमुल्लेखो मया । लेखकदोषपरिहारार्थं न क्रियते प्रयासोऽत्र ।

तस पट कुवलयचंद्रमा भट्टारक हो विनयप्रभ नाम
सननें देइ देसना सीपवीनें हो करें विनयनुं धाम श्री० १०
तस पट पद्म प्रभाकरा भट्टारक हो महिमाप्रभ सूर
महिमा महियल जेहनो उतार्यो हो जिणे वादि नुर श्री० ११
गच्छ चोरासीई जेहनी किर्ति विस्तरी हो नीरमल गोपीर
सकल आगम वेचा चरू गितारथ हो बहु गूणें गभीर श्री० १२
चित्कोस बहुल लिखावीया जेणें भाविया हो सूक्ष्म नयभग
ते गूरुना सुप्रसादथि विद्या वासीत हो मुज्ज गति सुरंग श्री० १३
श्रीमहिमाप्रभ सूरीना पट्टधारी हो भावप्रभसूरीस
रास रचो(च्यो) रलीयामणो सांभलितां हो लहिइ सुजगीस श्री० १४
संवत नव नव चोसलो चंद्र समीत हो जांणो नरह सुजांण
मगसीर संद दिन बीजनी गूरुवारें हो संदर सुपखांण श्री० १५
अणहिल्लपुर पाटणें ढंढेरवाडे हो वसति सुविसाल
दिपें मनोहर देहरां पेषतां हो जाइ पापनी जाल श्री० १६
तिहां ए रास रच्यो भलो मति सारू हो आंणी नुतन ढाल
बुद्धिलसति विमला तणो भीतो रुडो हो संबंध रसाल श्री० १७
त्रिजें पदें सोलमी पुरण थइ हो एह सुंदर ढाल
श्री भावप्रभसूरी कहें सांभलतां हो होई मंगलमाल श्री० १८"

श्रीलब्धिप्रभसूरिशेखरैः १६४८तमे वैक्रमीये वर्षे आश्विनशुक्लचतुर्थ्यां रविवासरे निर्मितायाः 'पाटणचैत्यपरिपाटेः' प्रशस्तिना ज्ञायते विशेषोऽयम्–

अतः सद्गुरूणां पट्टपरम्परा यथा–

श्रीसुवनप्रभसूरय"
श्रीकमलप्रभसूरयः
श्रीपुण्यप्रभसूरयः
श्रीविद्याप्रभसूरयः
श्रीललितप्रभसूरयः
श्रीविनयप्रभसूरयः
श्रीमहिमाप्रभसूरयः
श्रीभावप्रभसूरयः

सूरिवराणां कृतिकलापः—

| ग्रन्थनाम | भाषा | स्थानम् | रचनासमयो वैक्रमीयः |
|---|---|---|---|
| झांझरियामुनिस्वाध्यायः | गौर्जरी | | १७५६ |
| श्रीशान्तिनाथस्तुतिटीका | संस्कृता | | १७६५ |
| हरिवलमच्छीरासकः | गौर्जरी | रूपपुरम् | १७६९ |
| अम्बडरासकः | ,, | | १७७५ ( ज्येष्ठमासि कृष्णपक्षे द्वितीयायाम् ) |
| जैनधर्मवरसंस्तवनम् ( स्वोपज्ञटीकासमलङ्कृतम् ) | संस्कृता | | १७९१ ( मार्गशीर्षशुक्लाष्टम्याम् ) |
| सुभद्रासतीरासकः | गौर्जरी | पाटणनगरम् | १७९१ |
| होलिरजः(हुताशिनी)कथा | संस्कृता | | १७९२ |
| प्रतिमाशतकस्य लघुवृत्तिः | ,, | | १७९३ ( माघशुक्लाष्टम्यां गुरुवासरे ) |
| बुद्धिलविमलासतीरासकः | गौर्जरी | | १७९९ |
| आध्यात्मिकस्तुतिः ( 'उठी सवेरे'त्याद्याक्षरात्मिका ) | गौर्जरी | | |
| [1]आषाढभूतिस्वाध्यायः | ,, | | |
| 'किंकर्पूरमय'मित्याद्याक्षरात्मकस्य स्तोत्रस्य बालावबोधः | गौर्जरी | | |
| गहुंलिकार्थः | संस्कृता | | |
| ज्योतिर्विदाभरणटीका ( सुखबोधिकानाम्नी ) | ,, | | |
| [1]त्रयोदशकाठियास्वाध्यायः | गौर्जरी | | |
| नयोपदेशावचूरिः | संस्कृता | | |
| नववाडस्वाध्यायः | ,, | | |
| [2]नेमिनाथमासद्वादशकम् | गौर्जरी | | |

१ प्रेक्ष्यतां सज्झायमालासञ्ज्ञकस्य ग्रन्थस्य प्रथमो विभाग॰ ( पृ० ७७ ) ।

२ एतदन्ते उल्लेखोऽयम्–श्रीपुनिमगच्छ गुणनिलो आपरे प्रधानशाखा कहिवाय.
श्रुत अभ्यास परंपरा रे पुस्तकनो समुदाय रे
गुरु श्रीमहिमाप्रभसूरिनो भावरतन सुजगीसो रे
विचक्षण श्रावक श्राविका रे सांभले सुनिशदीसो रे

| ग्रन्थनाम | भाषा |
|---|---|
| नेमिभक्तामरम्[1] (स्वोपज्ञटीकाऽलङ्कृतम्) | संस्कृता |
| पर्युषणाष्टाह्निकाव्याख्यानम् | ” |
| महावीरस्तोत्रवृत्तिः | ” |
| मातृकाप्रकरणम् | ” |
| समाधमस्कारः | गौर्जरी |

एवं मयासाधनं सम्पादितेऽस्मिन् कृतिकलापे मम प्रयासस्य साफल्यमापादयितु प्रयतन्तां प्रेक्षावन्तः सद्गुणसागरा द्रव्यविज्ञाननागरा मम क्षमयन्तु समीक्षकाः सहृदयाश्च छद्मस्थसुलभाः स्खलनाः । अपरञ्च—

"प्रमाणसिद्धान्तविरुद्धमत्र
यत् किञ्चिदुक्तं मतिमान्द्यदोषात् ।
मात्सर्यमुत्सार्य तदार्यचित्ताः
प्रसादमाधाय विशोधयन्तु ॥"[2]

इदं प्रार्थनापुरस्सरं विरमत्यस्मात् प्रस्तावात् कापडियेत्युपाह्व श्रीयुतरसिकदासतनुजो हीरालालः ।



---

१ मदीयभाषान्तरसटीकत्वादिपूर्वकं मुद्रापितमिदं काव्यं श्रीमानतुङ्गसूरीश्वरविरचितभक्तामरस्तोत्रपादपूर्तिरूपकाव्यसङ्ग्रहस्य प्रथमे विभागे । अत्र अवतरणरूपे द्वितीये पद्ये नेमिभक्तामरमिति नाम निरदेशि ग्रन्थकारैः (प्रेक्ष्यतां ११तमं पृष्ठम्) ।

२ श्रीमल्लिषेणसूरिकृतस्याद्वादमञ्जरीमध्यस्थमन्त्यमिदं पद्यम् ।



**શ્રીમજ્જિનદત્તસૂરિ-જ્ઞાનભંડાર.** **શીતલવાડી, ગોપીપુરા-સુરત.**

શ્રીમજ્જિનકૃપાચન્દ્રસૂરીશ્વરના ઉપદેશથી સુરતવાસ્તવ્ય ઝવેરી ભગુભાઇસુત પાનાચંદ તથા મોતીચંદ ભાઇઓએ સ્વદ્રવ્યવડે વિ૦ સં૦ ૧૯૭૫ ના વૈશાખ શુદિ ૬ ના રોજે સ્થાપ્યો.

આનંદ પ્રેસ-ભાવનગર.

श्रीभावप्रभसूरिवर्यविरचितं

श्री'कल्याणमन्दिरा'न्त्यपादसमस्यामय'मभिनवकल्याणमन्दिरा'परनामकं

# ॥ श्रीजैनधर्मवरस्तोत्रम् ॥

(स्वोपज्ञटीकासमलङ्कृतम्)

---

श्रीशारदायै नमः ॥ श्रीमहिमाप्रभसूरिगुरुभ्यो नमः ॥

नत्वा पार्श्वजिनेन्द्राय, गुरवे वाणयेऽपि च ।
कल्याणमन्दिरान्त्याङ्घ्रि-समस्यारचनाश्रितम् ॥ १ ॥-अनुष्टुप्[1]
जैनधर्मवरस्तोत्रं, कृतं यन्मयका मुदा ।
तस्य च क्रियते वृत्तिः, श्रीभावप्रभसूरिणा ॥ २ ॥-युग्मम्[2]

सूत्रम्—

कल्याणमन्दिरमिमं कुरु दानमुख्यं
धर्मं चतुर्विधमनश्वरसौख्यहेतुम् ।
सम्यक्त्वभूषिततमं भवभृद् ! भवाब्धौ
पोताय[3]मानमभिनम्यजिनेश्वरस्य ॥ १ ॥-वसन्ततिलका[4]

हिंसादिदोषरहितं सहितं शमाद्यै-
र्घातिक्षयान्निगदितं महितं महेन्द्रैः ।
स्वर्गापवर्गफलितं कलितं विवेकै-
स्तस्याहमेष किल संस्तवनं करिष्ये ॥ २ ॥-युग्मम्

---

१ अनुष्टुप्-लक्षणम्—
"श्लोके षष्ठं गुरु ज्ञेयं, सर्वत्र लघु पञ्चमम् ।
द्विचतुःपादयोर्ह्रस्वं, सप्तमं दीर्घमन्ययोः ॥ १ ॥"

२ युग्म-लक्षणम्—
"द्वाभ्यां युग्ममिति प्रोक्तं, त्रिभिः श्लोकैर्विशेषकम् ।
चतुर्भिः कलापकं स्यात्, तदूर्ध्वं कुलकं स्मृतम् ॥ १ ॥"

३ 'पोताय ! मानमभिनम्य जिनेश्वरस्य' 'पोताय ! मानमभिनम्यजिनेश्वर ! स्य' चेत्यपि पदच्छेदः ।

४ वसन्ततिलका-लक्षणम्—
"उक्ता वसन्ततिलका तभजा जगौ गः ।"

व्याख्या—आचार्य इति कथयति तदाह—हे भवभृत् !—हे भव्य ! त्वं अभिनन्दजिनेश्वरस्य इमं धर्मं कुरु इत्यन्वयः। कथंभूतं धर्मम् ? दानमुख्यं—दानादिकम् । पुनः कथंभूतं धर्मम् ? चतुर्विधम्—चतुःप्रकारम्, दान-शील-तपो-भावरूपमित्यर्थः । पुनः कथंभूतं धर्मम् ? कल्याणमन्दिरं—श्रेयसां गृहम् । अनेन विशेषणेन मङ्गलशब्दोपन्यासः स्तोत्रस्यादौ कृतः शिष्टाचारत्वात् । पुनः क० धर्मम् ? सम्यक्त्वभूषितवरं—सम्यक्त्वेनातिशोभितम् । पुनः क० धर्मम् ? भवाब्धौ—संसारसमुद्रे पोतायमानं—यानपात्रोपमानम् । पुनः क० धर्मम् ? अनश्वरसौख्यहेतुं—अविनाशिमोक्षसुखस्य कारणम् । पुनः क० धर्मम् ? 'हिंसादिदोषरहितं' प्राणातिपात-मृषावादा ऽदत्तादान-मैथुन परिग्रहादिभिः सर्वविरति-देशविरतिदोषैः रहितं—त्यक्तम् । पुनः क० धर्मम् ? क्षमाद्यैः—क्षान्त्यादिगुणैः सहितं—युक्तम् । पुनः क० धर्मम् ? 'घातिक्षयात्' ज्ञानावरणीय-दर्शनावरणीय मोहनीया-ऽन्तरायाणां चतुर्णां घातिकर्मणां क्षयात् उत्पन्नवरकेवलज्ञानदर्शनैः चतुर्विधदेवरचितसमवसरणस्थितैः अष्टादशदोषरहितैः चतुस्त्रिंशदतिशयविराजमानैः अष्टमहाप्रातिहार्यशोभितैः श्रीतीर्थंकरैः पञ्चत्रिंशद्गुणयुक्तया वाण्या निगदितं—कथितम् । अत्र घातिक्षयादिति पदेन अन्यशासनछद्मस्थकज्ञान निरस्तम् । यतः—

'देवागमनभोयान—चामरादिविभूतयः ।
मायाविष्वपि दृश्यन्ते, नातस्त्वमसि नो महान् ॥ १ ॥'—अनु०

इति सामन्तभद्रा आप्तमीमांसारूपाम् । पुनः—

"यथास्थितं वस्तु दिशन्नधीश !
न तादृशं कौशलमाश्रितोऽसि ।
तुरङ्गशृङ्गाण्युपपादयद्भ्यो
नमः परेभ्यो नयपण्डितेभ्यः ॥ १ ॥"—उपेन्द्रवज्रा[1]

इति श्रीहेमचन्द्रविरचितायामयोगव्यवच्छेदद्वात्रिंशिकायां (श्लो०५) । पुनः—

"पक्षपातो न मे वीरे, न द्वेषः कपिलादिषु ।
युक्तिमद् वचनं यस्य, तस्य कार्यः परिग्रहः ॥ १ ॥"—अनु०

इति हरिभद्राचार्याः । पुनः क० धर्मम् ? महेन्द्रैः—सुरनरनायकैः महितं—पूजितम् । पुनः क० धर्मम् ? 'स्वर्गेति' स्वर्गे—देवालये अपवर्गे—मुक्तौ फलं जातं अस्य इति फलितम्, स्वर्गमोक्षप्राप्तिरूपजातफलम् । पुनः क० धर्मम् ? विवेकैः—अयं पुद्गलधर्मः पृथक्, अयं शुद्धचिदानन्दजीवधर्मः इत्यादि भेदज्ञानैर्हेयोपादेयरूपैः अपि कलितं—ज्ञातं सहितं इति । किलेति सत्यम् । एष भद्रं—भा

---

१ उपेन्द्रवज्रा-लक्षणम्—
"उपेन्द्रवज्रा जतजास्ततो गौ ।"

वप्रभनामाचार्यः तस्य–धर्मस्य संस्तवनं–स्तुतिं करिष्ये । यत् किञ्चित् गुरुभ्यो ज्ञातं मम बुद्धिस्थं तत् संस्तवनं यथाशक्ति किञ्चित् प्रकटीकरोमीत्यर्थः । अतो न दूषणं दातव्यं मयि विषये । यतः–

"अन्तर्व्राणि मन्यमानः कवीनां
पौरोभाग्यं युक्तिपूक्तासु दत्ते ।
सर्वानिन्द्येऽप्यङ्गके कामिनीना-
मीर्मामार्गं शोधते भर्म(ॅम्भ)राली ॥ १ ॥"–शालिनी

तस्य इति तच्छब्दः पूर्वपरामर्शी । अन्यथा यत्तदोर्नित्यः सम्बन्धः स्यात् । अभिनम्यते इति अभिनम्यः, जिनानां–सामान्यकेवलिनां ईश्वरो जिनेश्वरः, अभिनम्यश्चासौ जिनेश्वरश्च इति कर्मधारयः तस्य । यतः—

"पूजार्हः स्वगुणैरेवा–ऽर्हत्पूजानिरतो हि यः ।
भक्त्या मुनींश्च नमति, नम्योऽपि रिपुपार्थिवैः ॥ १ ॥"–अनु०

इति शत्रुञ्जयमाहात्म्ये ॥ नम्यः–अभिनम्य इति शिष्टप्रयोगः । दानं मुख्यं–प्रधानं यस्मिन् स तम् इति दानमुख्यम् । इति मूलार्थः ॥

अथ प्रकारान्तरमर्थयोजनमाह— हे भवभृत् ! अभिनम्य एवंविधो यो जिनः स ईश्वरः–स्वामी यस्य स तस्य सम्बोधने हे अभिनम्यजिनेश्वर ! त्वं मानं–गर्वं–चित्तोन्नतिं स्य–घातय । षो धातुः अन्तकर्मणि 'दिवादेर्यः' ( सारस्वते सू० ९६२ ) पञ्चमी हि रूपम् । त्वं इमं धर्मं कुरु इति द्वितीयोऽन्वयः । शेषं तथैव इति । अथवा हे भवभृत् ! भवाब्धौ हे पोताय ! पोतस्य आयो–लाभो यस्य तस्य सम्बोधनमिति । त्वं इमं धर्मं कुरु । शेषं तथैव । इति प्रथमोऽन्वयः ॥

एष अहं तस्य–धर्मस्य संस्तवनं करिष्ये । किं कृत्वा ? जिनेश्वरस्य मानं–ज्ञानं अभिनम्य–नत्वा । यदुक्तं जैनतर्कभाषायाम्–"स्वपरव्यवसायिज्ञानं प्रमाणम्" । इति द्वितीयोऽन्वयः ॥

अथ सम्यक्त्वलक्षणमाह–

"सद्देवे सुगुरौ शुद्ध–धर्मे या वासना स्थिरा ।
सम्यक्त्वं तदिदं सम्यक्, मिथ्यात्वं तद्व्यतिक्रमात् ॥ १ ॥–अनु०

---

१ विचार्यतां पद्यपद्यप्रारम्भसादृश्यम्—

"अन्तर्व्राणि मन्यमानः खलोऽयं
पौरोभाग्यं सूक्तिमुक्तासु धत्ते ।
सर्वानन्दिन्यङ्गके कामिनीना-
मीर्मं मार्गत्येष व यम्भरालि. ॥ १ ॥"

२ पण्डितम् ३ दोषदर्शित्वम् ४ व्रणमार्गम् ५ मक्षिका.

६ शालिनी–लक्षणम्—

"मात्तौ गौ चेच्छालिनी वेदलोकैः ।"

संवेग १ निर्वेद २ शमा ३ ऽनुकम्पा—
  ४ऽऽस्तिक्यानि ५ पञ्चास्य तु लक्षणानि ।
संसारवैरस्य विमर्शनेन
  संवेग उक्तो विषयेऽप्यसक्तिः ॥ २ ॥—इन्द्रवज्रा[1]
संसारवासः स्फुटमेष कारा
  दारादिवर्गो निगडानुबन्धः ।
मोक्षं विना नैव सुखानि याऽसौ
  चिन्ता स निर्वेद इति प्रतीतः ॥ ३ ॥"—इन्द्र०

संवेग ते संसार माहिं कोइ रसस्वाद नथी अने विषयने विषे आसक्तिपणु धरइ नहि निर्वेद ते ए संसारवास बंदीखाणु छे, कलत्रादिक ते पगे बेडीरूप छे, एहवी जे चिन्ता तेहने निर्वेद कहिइ बीजा लक्षणु प्रसिद्ध छे

इति । अथ धर्मो जिनेन एव उक्तः । यतः—

"दानं शीलं च तपो, शुभभावना देशनाविधौ भगवान् ।
  धाम्ना ख्यापयत्यौ स, ग्राम्यामे ग्रान्त्ययामे च ॥ १ ॥"—आर्या[2]

इति पद्मानन्दमहाकाव्ये चतुर्दशसर्गे ॥

अथ धर्मशब्दस्यार्थमाह—

"देहस्पृशां दुर्गतिपातकानां
  धर्ता ततो धर्म इति प्रतीतः ।
दानादिभेदैः स चतुष्प्रकारः
  संसारविस्तारहरश्चतुर्धा ॥ १ ॥"—इन्द्र०

अर्थात् दुर्गति नइ विषइ पडता जीवने धारी लीइ अने संसार—समुद्रने विषइ प्रव-हणु सरिषो धर्म छइ

यदा एकाग्रमनसाऽसौ धर्मः क्रियते, तदा फलं लभ्यते; अन्यथा न । यतः—

'रे रे किं ग्रहिलाऽसि नष्टनयने ! किं कोटपालप्रिया
  किं पश्यन्त्यपि धान्यलोपपतिता त्वं दिक्करी कस्य रे ।

---

१ इन्द्रवज्रा-लक्षणम्—
  'स्यादिन्द्रवज्रा यदि तौ जगौ गः ।
२ आर्या लक्षणम्—
  'लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः ।
  षष्ठोऽयं न लघुर्वा प्रथमेऽर्धे नियतमार्यायाः ॥ १ ॥

हस्त्यारूढपिता निपीतमदिरा किं क्रीतलोकस्त्वया
किं सत्त्राणसुता क्व लग्नहृदया पादोऽर्पितो यन्मयि ? ॥ १ ॥"–शार्दूल०

अथोत्तरम्—

"भूतग्रस्तमलीनशून्यहृदयो नित्यं पठस्यत्र किं
किं ध्यानं प्रकरोषि निष्फलतरं ज्ञातो मदंह्रिर्यतः ।
तद् त्यक्त्वेदमथ प्रयाहि जड ! रे लग्नो लयो नेश्वरे
पश्येदृङ् मम मानसं कैमितरि ज्ञातो न यस्त्वं मया ॥ १ ॥"–शार्दूल०

इति यवनशास्त्रेऽपि ॥

તે ધર્મનો ઇહાં દ્રવ્ય–દૃષ્ટાન્ત ભાવ–દૃષ્ટાન્ત દેખાડઇ છઇ.

'वेनातट'नगरे धर्मप्रियनामा कश्चिद् वणिग्वरोऽस्ति । परं स च कीदृशः ? जैनधर्मरत उदारचित्तो गुणज्ञः सदा दानादिचतुर्विधं धर्मं करोति । एकदा केनचिद् व्यन्तरेण गलं गृहीत्वा धर्मप्रियः कूपमध्ये पातितः । अप्राप्तजलात् कूपविचालात् केनचिदुद्धृत्य कूपबहिर्मुक्तः । पुनः पातितः पुनर्बहिर्मुक्तः, एवं सप्त वारान् कूपे पातितोऽपि बहिरेव दृष्टः, ततः क्रुद्धेन समुद्रे प्रक्षिप्तः । तस्मिन् समये तत्र प्रवहणं आगतम् । यानपात्रनरैर्गृहीत्वा तीरं प्रापितः, ततो गृहमागतः, पुनः समुद्रे प्रक्षिप्तः प्रवहणनरैः स्थानं प्रापितः, एवं सप्त वारान् समुद्रे क्षिप्तः कुशलेन गृहं गत एव दृष्टः, ततोऽतीव कुपितो धर्मप्रियस्य मारणोपायं व्यन्तरश्चिन्तयति । यतः—

"मृगमीनसज्जनानां, तृणजलसन्तोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना, निष्कारणवैरिणो जगति ॥ १ ॥–आर्या

मांसं मृगाणां दशनं गजाना-
मत्यन्तरूपं युवतीजनानाम् ।
अर्थो नराणां फलितं द्रुमाणां
गुणाधिका वैरकरा भवन्ति ॥ २ ॥"–उपजातिः

इतश्च वसन्तमासे समागते तन्नगराधिपो राजा पौरजनैः सह वने क्रीडितुं गतः । धर्मप्रियोऽपि तत्र गत उचितक्रीडां करोति । अकस्मात् तत्रैको व्याघ्र आगतः । यावद् धर्मप्रियं गले

१ शार्दूलविक्रीडित–लक्षणम्—
"सूर्याश्वैर्यदि मस्सजौ ससतगा शार्दूलविक्रीडितम् ।"

२ कामुके. ३ 'नलसन्तोपविहित०' इति पाठ श्रीभर्तृहरिकृते नीतिशतके ( श्लो० ५० ) ।

४ विचार्यताम्—
"मांस मृगाणा दशनौ गजानां, मृगद्विपा चर्म फल द्रुमाणाम् ।
स्त्रीणां सुरूप च नृणां हिरण्य-मेते गुणा वैरकरा भवन्ति ॥ १ ॥"

५ उपजाति–लक्षणम्—
"स्यादिन्द्रवज्रा यदि तौ जगौ ग, उपेन्द्रवज्रा जतजास्ततो गौ ।
अनन्तरोदीरितलक्ष्मभाजौ, पादौ यदीयावुपजातयस्ता. ॥ १ ॥"

गृह्णाति, तावत् पृष्ठानुगामिना शशकेन व्याघ्रो गले गृहीत्वा पातितः । चतुःपादैराक्रम्य व्याघ्रोपरि शशकः स्थितः । सर्वेऽपि लोकाः कौतुकं भयं च प्राप्ताः । शशकाक्रान्तो व्याघ्रो दीनस्वरं करोति । इतश्चैकेन नरेणागत्य प्रोक्तम्—भो शशक ! अत्र प्रदेशे आचार्याः चतुर्ज्ञानशालिनस्तिष्ठन्ति । ते त्वां समाह्वापयन्ति, एहि एहि शीघ्रम् । एतद् वचनं श्रुत्वा शशको गृहीतगलव्याघ्रेण सह सूरीणां समीपे विनयं कृत्वा स्थितः । सर्वलोकैः सह भूपोऽपि तत्रागतः । अहो महदाश्चर्यं किं जायते ? एतत् किम् ?। अथ सूरयः शशकं कथयन्ति—भो शशक ! मुञ्च मुञ्च एनं वराकं व्याघ्रम्, त्वं दयापरोऽसि, ज्ञातजैनधर्मतत्त्वोऽसि, निजरूपं प्रकटीकुरु । यतः—

"क्षान्तितुल्यं तपो नास्ति, न सन्तोषात् परं सुखम् ।
नास्ति तृष्णापरो व्याधि-र्न च धर्मो दयासमः ॥ १ ॥—अनु०
मक्षिकाः व्रणमिच्छन्ति, क्षतमिच्छन्ति वायसाः ।
दुर्जनाः कलिमिच्छन्ति, सन्धिमिच्छन्ति साधवः ॥ २ ॥"—अनु०

ततः सूरिगिरं श्रुत्वा चलत्कुण्डलाभिरामः देवपुञ्जविजितकामः सुरो जातः । इतरोऽपि व्याघ्ररूपं त्यक्त्वा व्यन्तरः स्वाभाविकरूपो जातः । तदा भूपेन सूरयः पृष्टाः—एतदिदानीं कथयन्तु । ततो मधुरध्वनयः सूरयः प्रोचुः—भो राजन् ! पूर्वभवे 'अवन्ती'नगरे जम्भनामा वणिक्सुतः मिथ्यात्वी । (स) अटिलनाम्नो जटिलस्य सेवां करोति । इतश्च तस्मिन्नेव नगरे कुम्भनामा व्यवहारी बभूव । तेन जम्भस्य जैनधर्मो दत्तः । जम्भः परमजैनः श्रावको बभूव । त्यक्ता अटिलजटिलभक्तिः । तेनाटिलस्तस्य मारणोपायं विचारयति । यतः—

"का प्रीतिः सह मार्जारैः ?, का प्रीतिरवनीपतौ ? ।
गणिकाभिश्च का प्रीतिः ?, का प्रीतिर्भिक्षुकैः सह ? ॥ १ ॥—अनु०
यथा दृष्टिः समक्षेषु, भुक्तस्योपरि भोजनम् ।
एवं प्रीतिः खले सार्धं—मुत्पन्नेऽर्थेऽवसीदति ॥ २ ॥—अनु०
मा गाः पिशुनविश्रम्भं, ममायं पूर्वसंस्तुतः ।
चिरकालोपचीर्णोऽपि, दशत्येव भुजङ्गमः ॥ ३ ॥—अनु०
त्रिजिह्वमुद्वेगकरं, क्रूरमेकान्तदारुणम् ।
खलस्याहेश्च वदन—मपकाराय केवलम् ॥ ४ ॥"—अनु०

परं नावसरो लब्धः । अज्ञानकष्टं कृत्वा मरणं प्राप्य अटिलो जटिलो व्यन्तरो जातः । जम्भस्तु मृत्वा जैनधर्मप्रभावात् धर्मप्रियोऽयं समुत्पन्नः । कुम्भस्तु सौधर्मदेवलोकेऽयं देव उत्पन्नः । अतो देवोः पूर्ववैरानुबन्धेनाटिलेन धर्मप्रियः एवं कदर्थितः । कुम्भदेवेन सर्वप्रास कृपायामुपसर्गो निवारितः । व्यन्तरस्तु धर्मप्रियस्योपसर्गं(र्गान्) न मुञ्चति । व्याघ्ररूपं विधाय

भक्षणार्थं समागतो यावत्, तावत् शशकरूपं विधाय कुम्भदेवेन व्यन्तरन्याघ्रस्यैवं शिक्षा दत्ता । इति सूरिवचः श्रुत्वा भूपादयः सर्वेऽपि जैना जाताः । व्यन्तरोऽप्युपशमं प्राप्तः । गुरून् प्रणम्य सर्वेऽपि स्वस्थानं गताः । धर्मप्रियोऽपि सूरिसमीपे चारित्रं गृहीत्वा निरतिचारं प्रतिपाल्य केवलज्ञानं प्राप्य मोक्षं जगाम । इति द्रव्यकष्टतो भावकष्टतो धारणाद् धर्मस्तस्योपरि दृष्टान्तोऽयं लिखित इति ॥

अथास्मिन् दुरन्ते चतुर्गतिकेऽसारे संसारे दशदृष्टान्तैर्दुर्लभं मनुष्यभवत्वं दर्शयति । यतः—

"न्याग्रोधं दुर्लभं पुष्पं, दुर्लभं स्वातिजं पयः ।
दुर्लभं मानुषं जन्म, दुर्लभं देवदर्शनम् ॥ १ ॥"—अनु०

अथ दशदृष्टान्तगाथा ( उत्तराध्ययनटीकायाम् )—

"[1]चुल्लग १ पासग २ धन्ने ३, जूए ४ रयणे य ५ सुविण ६ चक्के य ७ ।
चम्म ८ जुगे ९ परमाणू १०, दस दिट्ठंता मणुअलंभे ॥ १ ॥"—आर्या

दशदृष्टान्तानां काव्यान्याह—

"विप्रः प्रार्थितवान् प्रसन्नमनसः श्रीब्रह्मदत्तात् पुरा
क्षेत्रेऽस्मिन् भरतेऽखिले प्रतिगृहं मे भोजनं दापय ।
इत्थं लब्धवरोऽथ तेष्वपि कदाऽप्यश्नात्यहो द्विः स चेद्
भ्रष्टो मर्त्यभवात् तथाप्यसुकृती भूयस्तमाप्नोति [2]नो ॥ १ ॥—शार्दूल०
स्तम्भानां हि सहस्रमष्टसहितं प्रत्येकमष्टोत्तरं
कोणानां शतमेषु तानपि जयन् द्यूतेऽथ तत्सङ्ख्यया ।
साम्राज्यं जनकात् सुतः स लभते स्याच्चेदिदं दुर्घटं
भ्रष्टो मर्त्यभवात् तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ २ ॥
वृद्धा काऽपि पुरा समस्तभरतक्षेत्रस्य धान्यावलिं
पिण्डीकृत्य च तत्र सर्षपकणान् क्षिप्त्वाऽऽढकेनोन्मितान् ।
प्रत्येकं हि पृथक् करोति किल सा सर्वाणि चान्नानि चेद्
भ्रष्टो मर्त्यभवात् तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ ३ ॥
सिद्धद्यूतकलाबलाद् धनिजनं जित्वाऽथ हेम्नां भरै—
श्चाणक्येन नृपस्य कोशनिवहः पूर्णीकृतो हेलया ।

---

१ छाया—

चुल्लक(भोजन)पाशकौ धान्य द्यूत रत्न च स्वप्नं चक्रं च ।
चर्म युग परमाणुर्दश दृष्टान्ता मनुजलाभे ॥

२ 'न' इति पाठोऽध्यात्मकल्पद्रुमटीकायाम् ।

दैवादाक्षवशेन तेन स पुनर्जीयेत मन्त्री कथित्
भ्रष्टो मर्त्यभवात् तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ ४ ॥

रत्नान्याढ्यसुतैर्वितीर्य वणिजां देशान्तरादीयुषां
पश्चात्तापवशेन तानि पुनरादातुं कृतोपक्रमे[1] ।
लभ्यन्ते निखिलानि दुर्घटमिदं दैवाद् घटेत कथित्
भ्रष्टो मर्त्यभवात् तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ ५ ॥

राधाया वदनादध[2] क्रमवशाच्चक्राणि चत्वार्यधो
भ्राम्यन्तीह विपर्ययेण तदधो यन्त्री स्थितोऽप्याशुगः ।
तस्या वामकनीनिकामिषुमुखेनैवाशु विध्यत्यहो
भ्रष्टो मर्त्यभवात् तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ ६ ॥

स्वप्ने कर्पटिकेन रात्रिविगमे श्रीमूलदेवेन च
प्रेक्ष्येन्दुं सकलं कुनिर्णयवशादल्पं फलं प्राप्यते ।
स्वप्नस्तेन पुनः स तत्र शयितेनालोक्यते कथचित्
भ्रष्टो मर्त्यभवात् तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ ७ ॥

यद्वत् कोऽपि हि कच्छपो ह्रदमुखे शैवालरन्ध्रच्युते
पूर्णेन्दुं मुदितः कुटुम्बमिह तं द्रष्टुं समानीतवान् ।
शैवाले मिलिते कदापि स पुनस्तत्र किं तालोकते
भ्रष्टो मर्त्यभवात् तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ ८ ॥

शम्या पूर्वपयोनिधौ निपतिता भ्रष्टं युगं पश्चिमा-
म्भोधौ दुर्धरवीचिभिश्च सुचिरात् संयोजितं तद् द्वयम् ।
शम्या सा प्रविशेद् युगस्य विवरे तस्य स्वयं क्वापि चेत्
भ्रष्टो मर्त्यभवात् तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ ९ ॥

चूर्णीकृत्य पराक्रमात् मणिमयस्तम्भं सुर[5] क्रीडया
मेरौ सन्नलिकासमीरवशत[6] क्षिप्त्वा रजो दिक्षु चेत् ।
स्तम्भं तैः परमाणुभि[6] सुमिलितैः कुर्यात् स चेत् पूर्ववद्
भ्रष्टो मर्त्यभवात् तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ १० ॥"

---

१ पुत्तलिकायाः । २ 'धैर्ये' इत्यप्यध्यात्मकल्पद्रुमवृत्तिकायां पाठः । ३ 'प्राप्य च' इत्यपि पाठोऽप्यध्यात्मकल्पद्रुमवृत्तिकायाम् । ४ 'समालोक्यते' इत्यप्यध्यात्मकल्पद्रुमवृत्तिकायां पाठः । ५ सुपर्वीकः । ६ सा कन्या इति पाठान्तरमध्यात्मकल्पद्रुमवृत्तिकायाम् ।

इति । तथापि च आर्यदेशत्वं दुर्लभम् । सुकुले जन्म पञ्चेन्द्रियपटुता दीर्घायुः सुगृहस्थता सद्गुरुसंयोगः श्रद्धा मेधा धृतिर्धारणेत्यादिकं च दुर्लभम् । परं च पुण्योदयवशात् सम्यक्त्वपूर्वकदेशविरतिसर्वविरतिधर्मौ टाकसञ्चयक्रमेलकाविव यदि प्राप्येते, तदा वाञ्छितसुखप्राप्तिर्भवति । कौ टाकसञ्चयक्रमेलकौ (तत्) कथानकद्वारेण दर्शयति—

स्वच्छ'कच्छ'देशे धनधान्यर्द्धिसमृद्धिसदनं सदासुखिलोकधनं धृतजिनचैत्यमण्डनं कृतकुग्रहखण्डनं 'सेलडी'त्यभिधानं ग्रामं बभूव । तत्र सङ्ग्रामसिंहो नृपतिर्विजयते स्म । तस्य बहुसुन्दरमन्तःपुरमभूत् । तत्र जैनधर्मरताः श्राद्धा दानशालिनः संयतभक्ता आसन् । पुनस्तत्र बहवो विप्राः सदा वेदाध्ययनविधायिनस्तिष्ठन्ति स्म । तेषु धवल इत्याख्यया एको विप्रो बहुविद्याभृद् भूपतेः प्राप्तवर्षासनो लक्ष्मीपूर्णः सकर्ण उवास । तस्य कल्लूकावल्लूकाभिधे द्वे भार्येऽभूताम् । कल्लूकायाः कुक्षिसमुद्भूतो हरिसंज्ञकः पुत्रोऽस्ति । अपरस्या वेल्लकनामा पुत्रो वर्तते । एवं स सुखेन कालं गमयति स्म । परं ते सपत्न्यौ परस्परं कलहं चक्रतुः । तदा पृथक् पृथग् गृहं काराप्य सन्मुखं स्थापिते । वारकेण तयोर्गृहे भुङ्क्ते ॥

एकदा एकस्या गृहे भुक्त्वा यावदुत्थितः, तावत् संमुखस्थितया प्रतियुवत्या निजगृहे भर्तुराकर्षणार्थं पदं प्रोक्तम्—भुक्त्वा शतपदं गच्छेत्, तदा अनया प्रोक्तम्—यदि शय्या न लभ्यते, तदा पुनः प्रतियुवत्या प्रोक्तम्—शय्यायां जायते रोगः, तदा पुनस्तया प्रोक्तम्—शयनं सुन्दरीं विना । इत्यहो सपत्नीत्वं स्त्रीणां दुःसहम् । यतः—

"वरि हलिउवि हु भत्ता अनन्नभज्जो गुणेहिं रहिओवि ।
मा सगुणो बहुभज्जो, जइ राया चक्कवट्टीवि ॥ १ ॥—आर्या
वरि गब्भंमि विलीणा, वरि जाया कंतपुत्तपरिहीणा ।
मा ससवेत्ता(वत्ती?) महिला, हविज्ज जम्मेवि जम्मेवि ॥ २ ॥
जइवि हु भत्ता सरिसो, होइ कलत्तेसु सवकज्जेसु ।
तहवि हु ताण मणेसुं, अत्ताणे थोवपरिहावो ॥ ३ ॥

१ उष्ट्रौ. २ पण्डितः ३ सपत्न्या. ४ 'दिवसे दोषपोपाय' इत्यपि पाठ. । ५ 'सन्निधौ कामिनीं विना' इति पाठान्तरम् ।

६ छाया—

वर हालिकोऽपि हि भर्ताऽनन्यभार्यो गुणै रहितोऽपि ।
मा सगुणो बहुभार्यो यदि राजा चक्रवर्त्यपि ॥ १ ॥
वरं गर्भे विलीना वर जाता कान्तपुत्रपरिहीणा ।
मा ससपत्नी महिला भवतु जन्मन्यपि जन्मन्यपि ॥ २ ॥
यद्यपि हि भर्ता सदृशो भवति कलत्रेपु सर्वकार्येपु ।
तथापि हि तेपां मनस्स्वात्मनि स्तोकपरिभाव ॥ ३ ॥

संकरहरिबंहा(मा)णं, गोरी लच्छी जहेव बंभाणी ।
तह जइ पउणो हुज्ञा, तो महिला इयरहा छे(छा?)ली ॥ ४ ॥

पायेण सवत्तिजणो, दुट्ठा सासुनणंदमाईया ।
धम्मेण अनिकटो, परवासो(परिवारो?) होइ महिलाणं ॥ ५ ॥

धण्णा ता महिलाओ, जाण न वायइ कोवि खोजाइं (?) ।
सासुनणंदसवत्ती, ससुरो जिट्ठो य दियरो वा ॥ ६ ॥

सन्त्यन्यान्यपि दुःखानि, दुःसहानि परं भवेत् ।
सपत्नीभवदुःखाग्रे, निःस्वानध्वानडम्बरः ॥ ७ ॥"—अनु०

"न सुख निर्धन नैं धनवंत न सुख, राजा राज्य करेत न सुख, गर्भिश्च न सुख, चोर न सुख, धणु वस्सते चोर न सुख, अध नारी भरतार न सुख (कय सुख) जे घर बांध्या 'टार, कय सुख राजाको पूत, कय सूख जोगी अवधूत."

इति ॥

एवं कियत्यपि गते काले कल्हूका विपन्ना । यतः—

"हा शोचन्ति धनं नश्यत्–मृता नायुः सदा गलत् ।
त्रैलोक्यैश्वर्यदानेऽपि, यच्छेषोऽपि न लभ्यते ॥ १ ॥—अनु०

आयुर्वायुचलं सुरेश्वरधनुर्लोलं बलं यौवनं
विद्युद्भ्रमसमं धनं गिरिनदीकल्लोलवच्चञ्चलम् ।
स्त्रेहं कुञ्जरकर्णतालचपलं देहं च रोगाकुलं
ज्ञात्वा भव्यजना[1] ! सदा कुरुत भो धर्मं महानिश्चलम् ॥ २ ॥"—शार्दूल०

ततः क्रमेण सकलं मृतकार्यं कृत्वा निःशोको धवलो जातः । अथ गतसपत्नीकत्वात् वहूकया धवलो वशीकृतः । सा यत् कथयति स तत् करोति । यतः—

"संमोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।

---

शङ्करहरिब्रह्मणां गौरी लक्ष्मी यथैव ब्रह्माणी ।
तथा यदि प्रगुणिता ततो महिलेतरथा क्षयी ॥ ४ ॥
प्रायेण सपत्नीजनो दुष्टः श्वश्रूननान्दृयातृकाः ।
धर्मेण च निष्कम्पकः परिवारो भवति महिलानाम् ॥ ५ ॥
धन्यास्ता महिला यासां न वदति कोऽपि दुर्वाक्यानि (?) ।
श्वश्रूननान्दृसपत्न्यः श्वशुरो ज्येष्ठश्च देवरो वा ॥ ६ ॥

१ बोध्य

एताः प्रविश्य सदयं हृदयं नराणां
किं नाम वामनयना न समाचरन्ति ? ॥ १ ॥–वसन्त०
द्रौपद्या वचनेन कौरवशतं निर्मूलमुन्मूलितं
सुग्रीवस्य वधाय मोहमतुलं (?) वाली हतस्तारया ।
सीतासक्तमनास्त्रिलोकविजयी प्राप्तो वधं रावणः
प्रायः स्त्रीवचनप्रपञ्चनिरतः सर्वः क्षयं यास्यति ॥ २ ॥"–शार्दूल०

ततोऽयं ज्येष्ठपुत्रं हरिं तथाविधं मनो दत्त्वा न पाठयति, वेल्लकं तु सम्यक् पाठयति । विमाता हरौ भोजनादि शुश्रूषां तथाविधां न करोति । यतो लौकिकाभाणकम्—

ઓરમાનમા, માથઇ ધા(ધા), ભાવઇ તો પા, નહી તો ઉઠીનઇ જા.

इति ॥

ततो हरिणा चिन्तितम्–मया ह्यत्र न स्थेयम्, विदेशं गमिष्यामि । यतः—

"विरक्तचित्तेषु रतिं न कुर्याद्
दग्धाऽपि शाखा न विलम्बनीया ।
गन्तव्यमन्यत्र विचक्षणेन
पूर्णा मही सुन्दरसुन्दरेण ॥ १ ॥–उपजातिः
त्यजेदेकं कुलस्यार्थे, ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे, आत्मार्थे पृथिवीं त्यजेत् ॥ २ ॥"–अनु०

ततो हरिणा पिता अभाणि–विद्यार्थं विदेशं गच्छामि । जनकेन प्रोक्तम्–अहं पाठयामि त्वाम् । तेनोक्तम्–विशेषतो विद्यां मठे पठिष्यामि । इत्युक्त्वा तुम्बकं गृहीत्वा हरिः शुभशकुनेन पूर्वदेशं चचाल । क्रमेण स 'वाराणसीं' प्राप्तः । तत्र महामहोपाध्यायः श्रुतशर्मा नाम विप्रो वसति व्याकरण-तर्क-च्छन्दःशास्त्रादीनां ज्ञाता । तस्य गृहगतो हरिः सम्यग् विनयं कृत्वाऽग्रे स्थितः । तेन संभाषितः–किमर्थमागतोऽसि ? कुत्योऽसि ?। यथोक्तं तेन निवेदितम्–पठनार्थमिति । ततः सोऽध्यापकः सुविनयसमुद्रं समीक्ष्य तमध्यापयामास । कियता कालेनाध्यापकस्य तदुपरि परमः स्नेहोऽजायत । स्वयं निष्पुत्रत्वात् पुत्रीयति तं शिष्यं सः । पाठकाग्रे स्वकीयं विमातुः पितुश्चाचरणापमानं प्रोक्तम् । तेनोक्तम्–तिष्ठात्रैव, किं तव मातृपितृभ्याम् ? । ततः स पठति शास्त्राणि, क्रमेण सकलशास्त्रपारिणो जज्ञे । ततो हरिर्मनसि दध्यौ–एकशो विमातुः पितुश्चाग्रे मदीयां विद्यासमृद्धिं दर्शयामि । ततः स्वमातरपितरयोर्मिलनगमनार्थं पाठकोऽभाणि । ततोऽध्यापकेन प्रोचे–किमर्थं तत्र गमनं यत्र तव जनकस्य कुभार्या वर्तते ? । यतः—

"चण्डी दुर्विनया स्वयं कलहिनी तृष्णातुरा तन्द्रिणी
निद्रालुः प्रथमाशिनी कपटिनी ह्रीवर्जिता तस्करी ।

देहल्याद्युपवेशिनी विकथिनी दन्तैः पटत्कारिणी
निःश्रेयोऽर्थिविकर्तिनी परिगृहस्याशुभं सुगेहिनी ॥ १ ॥"—शार्दूल०

इति । तथा अपत्येषु स्नेहहीनाभ्यां पितृभ्यां किम् ? । तदा हरिणा प्रोक्तम्—तत्र गत्वाऽहमस्य मया समागन्तव्यमत्रेति कथयित्वा गमनाय सज्जो बभूव । तदा तेनोक्तम्—हे हरे ! हे पुत्र ! त्वं दक्षिणस्यां दिशि उत्तरस्यां दिशि च मार्गे मा गाः, विषमः पन्था अस्ति, तयोर्विचालमार्गे गच्छेः । ततः शिक्षां गृहीत्वा हरिश्चचाल पन्थानम् । दैवादुत्तरस्यां दिशि स१ स्यायामेकं ग्रामं ययौ । तत्रत्येन मूर्खेण केनचित् पृष्टः—कस्त्वम् ? । तेनोचे—पठितशास्त्रो विप्रोऽस्मि । तदा स तं प्राह—कण्टकमर्दकस्य नाम निगदतु । तेन पुस्तकं प्रविलोकितम् । तस्यार्थो न लब्धः । चिन्तितं च धिक् मां खण्डपण्डितम् । यतः—

"खण्डखण्डेषु पाण्डित्यं, क्रयविक्रयमैथुनम् ।
भोजनं च पराधीनं, त्रयं पुंसां विडम्बना ॥ १ ॥"—अनु०

तूष्णीं स्थितः । प्रातरुत्थाय पश्चादुपाध्यायसमीपमाजगाम । तेनागमनकारणं पृष्टम् । ततो हरिः कण्टकमर्दकस्यार्थं प्रपच्छ । मा भूः पठितमूर्खः । यतः—

"काव्यं करोतु परिजल्पतु संस्कृतं वा
सर्वाः कलाः समधिगच्छतु वाच्यमानाः ।
लोकस्थितिं यदि न वेत्ति यथाऽनुरूपं
सर्वस्य मूर्खनिकरस्य च (स हि) चक्रवर्ती ॥ १ ॥"—वसन्ततिलका

इत्युक्त्वा अध्यापकेन तस्यार्थो गदित—उपानदिति । पुनः सम्भ्रान्त्या यामीं दिशं चचाल । मार्गे मुक्तजैनवेष एकः सिद्धपुत्रो मिलितः । तेन सह गोष्ठिर्जाता । सिद्धपुत्रेण सौहार्दवशात् तस्मै परमेष्ठिमन्त्रोऽर्पितः । कथितं च सातिशय एषोऽस्ति । उच्चारणमात्रतः सर्वा भीतयो नाशं यान्ति । इयमेव महती गायत्री, इतरा तु ॐ भूर्भुवः सवितुर्वरेण्यमित्यादिरूपा२ प्रतिच्छायारूपा वर्तते । इत्युक्त्वा सिद्धपुत्रः स्वस्थानं शिश्राय । ततो हरिर्मार्गे गच्छन् सहसा व्याघ्रं ददर्श । ततो भीतः सन् परमेष्ठिमन्त्रं सस्मार । व्याघ्रस्तु तत्कालं पलायत, चमत्कारं प्राप । ततोऽग्रेऽप्यग्नि गच्छन् भ्रान्तः सन् वटवृक्षच्छायायां निद्रां गतः । स्वोऽजगरेण४ गृहीतो जाग्रत् 'नमो अरिहंताणं'३ इति अजल्प सः । तत्कालमेव नष्टो सोऽहस्त एनं मुक्त्वा । ततो हृष्टो हरिरग्रे गच्छन्नेकं तापसं जटाधारिणं मस्तकगुम्फितजटं रक्ताक्षमद्राक्षीत् । ततः प्रणामो विहितः । सोऽपि हरिममाषिष्ट—भो वत्स ! अत्र गिरिणदीसमीपगिरिगुहायां रसकूपिका वर्तते येन रसेन स्वर्णसिद्धिर्भवति । अतः एहि । अत्र आवां रसं निष्कासयाव । त्वदारिद्र्यं हरामि । हरिणा चिन्तितम्—धूर्तोऽयम् । यतः—

---

१ दक्षिणाम्. २ इत्यादिपदेन भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् इति ग्रैवम् ।
३ नमोऽर्हद्भ्यः । ४ अजगरः.

"मुखं पद्मदलाकारं, वाचा चन्दनशीतला ।
हृदयं कर्तरीयुक्तं, त्रिविधं धूर्तलक्षणम् ॥ १ ॥"—अनु०

धूंता हुइ सुलक्ष(क्ख)णा, वेश्या(सा) हुइ सलज्जा ।
पारां पाणी शीअलां, वहुफल फले अकज्ज ॥ २ ॥"—अनु०

स्वस्य कार्यं कृत्वा मां दुर्दशां प्रापयिष्यति। ततो मौनालम्बितो गमनं कुर्वाणः। ततस्तापसेन सैंहीं तनुं विकुर्व्य स गले ग्रस्तः, ततः स महामन्त्रं पपाठ। तत्क्षणमेनं मुक्त्वा स पलायाञ्चक्रे। ततो हरिर्निर्विघ्नीभवन् पन्थानं जगाम। इत उल्लालितशुण्डादण्डं प्रचण्डहस्तिनं समायान्तं वीक्ष्य नमस्कारमन्त्रेण दूरीचकार। ततो महाभोगभोगिनं क्रोधकरालं जङ्गमयमकरवालमिवायान्तं समीक्ष्य परमेष्ठिध्यानेन पुच्छेन गृहीत्वा दूरमुच्चिक्षेप। एवं तस्य हरेर्गच्छतः सतोऽपराह्णे एकं 'कनकपुर'मागतम्। स तत्र सुवर्णसोपानपङ्क्तिविराजितं स्वच्छजलपरिपूर्णं गुञ्जन्मधुकरनिकरसेव्यमानकमलं सरोवरं दृष्ट्वा प्रौढपालिपादपालिच्छायायां स्थितः सर्वतः शोभां पश्यति स्म। नगरस्य स्वर्णमयो वप्रः, रत्नमयानि कपिशीर्षाणि, सप्तभूमाः प्रासादा गवाक्षादिशोभमानाः, देवस्वरूपा नराः, देवीसमाना नार्यः, शिरसा धृतस्वर्णकुम्भाः स्तननिर्जितहस्तिकुम्भाः पानीयहारिण्य इत्यादीनि विलोक्य मनसि विचारयति—अहो! यद्यत्र नागमिष्यं, तदा लोचनवञ्चितो भविष्यम्; परं न ज्ञायते यन्मदीयोपाध्यायेनायं मार्गो निषिद्धः। इतश्च भूपतेरमात्यो बहुपरीवारसहितः स्त्रीभिर्धवलमङ्गलं गीयमानकारयंस्तत्रागत्य हरेर्हारिललाटपट्टे कौङ्कुमं तिलकं विधाय हे नररत्न! अस्मदीयनरसिंहनृपस्य कमलाभिधानायाः कुमार्यास्त्वया सह विवाहो मेलितः, गम्यतां नृपौकसि। इत्युदित्वा हरिमादाय नृपान्तःपुरे कुमारीसमीपे निधाय लग्नवेलायां पाणिग्रहणं भविष्यतीत्युक्त्वा च स्वस्थानं जग्मिवान्। हरिः कमलां कमलामिव सुरूपां मृगीदृशं विलोक्य जहर्ष। अथ कमला प्राह—भोऽमररत्न! किं स्वस्थचित्तस्तिष्ठसि? यतो मदीयजनको मानवभक्षको राक्षसोऽस्ति, तत ईदृग्विधानेन मायामुद्भाव्य त्वमत्रानीतोऽसि, रात्रेः पश्चिमयामे शेषे सोऽत्रागत्य त्वद्भक्षणं करिष्यति। इति निशम्य किंकर्तव्यतामूढः स समजायत, परं परमेष्ठिमन्त्रस्मरणेन धीरत्वं दधार। ततस्तया पुनरभाणि—अहं यौवनस्था वर्ते, मया त्वमेव भर्ता हृदि धृतः, अतो मा भैषीः। तेनाप्युक्तम्—मम जीवितगतिस्त्वमेवासि। ततो निशि कुमार्या तदानीं संक्षेपतो विवाहसामग्रीं प्रच्छन्नं कृत्वा स परिणीतः। उक्तं च—हे भर्तः! मम जनकस्य द्वौ क्रमेलकौ स्तः। तयोर्मध्ये एक उष्ट्रः टाक इति नाम्ना यामार्धेन क्रोशशतं गच्छति, अन्यस्तूष्ट्रः

१ तात्पर्यम्—

धूर्ता भवन्ति शतलक्षणा वेश्या भवति सलज्जा ।
क्षाराणि पानीयानि शीतलानि बहुफलैः फलन्ति अकार्याः (वृक्षाः) ॥

सञ्चय इति नाम्ना एकया घटिकया क्रोशशतं व्रजति । तत्र इतः स्थानादमुष्य मदीयस्थाने गम्यते । इत्युक्त्वा उत्तालतया सम्भ्रमेण सञ्चयदीर्घग्रीवं विमुच्य टाकं सज्जीकृत्य रत्नादिबहुमूल्यवस्तूनि गृहीत्वा तमारुह्य तौ दम्पती पलायनं चक्राते । कञ्चुकिना वञ्चनकामं ज्ञापितम् । राक्षसोऽपि सञ्चयं स्थितं विलोक्य हर्षितोऽस्याग्रे क यास्यतीति विचिन्त्य तमेनमारुह्य तन्मार्गमनुययौ । इतश्च कुमार्या पश्चादवलोकनेन दृष्टो जनक आगतो विभीतम्, भो भर्तः ! अमुं वटं शीघ्रं समारोह । तेनापि तथैव कृतम् । ततो मतिमत्या कमलया प्रोक्तम्—भो तात ! अत्र एहि एहि । मया पलायमानः पुरुषः सादरं रुद्धोऽस्ति । ( तत् ) श्रुत्वा हृष्टोऽसौ वटाधस्तादागत्य सञ्चयक्रमेलकरज्जुं पुच्छे दत्त्वा वैभमणालयमारुरोह । राक्षसो यावदुत्पतन् हरे' शाखायां ग्रहणार्थमायाति, तावद् हरिरन्यशाखां याति । एवं तन्नीत्या शाखान्तरं गच्छन् यस्याः शाखाया अधः सञ्चयोऽस्ति तां शाखामधितिष्ठति । तदुपा(स्था)व च ऊर्ध्वदृष्ट्या विलोकयति हरिः । तदा कुमार्या प्रोक्तम्—भो जीवितेश ! मूढ इव किं विलोकयसि ? अधुना टाकसञ्चयौ मिलितौ । आवयोः कार्यसिद्धिर्जाता । शाखातः उत्प्लुत्य सञ्चयमारोह । तेनापि तथैव कृतम् । तत' स्थानात् ताभ्यां ताबुभौ चालितौ । स्तोकमध्वानं गताभ्यां तावत् सुरभिप्रफुल्लपुष्पपल्लवादिसम्भृतं सतत' सहस्रांशुकिरणपुञ्जैरिद्धमिव दीप्यमानं वनं ददृशे । ततोऽग्रे गच्छद्भ्यामेकतो हस्तिन एकतो व्याघ्रा मृगाः शशकाः शूकरा चीरका अहयो नकुला मूषका मार्जाराः पक्षिण इत्याद्यनेकजीवाः सस्नेहं सादरं संमिलिता उपशान्ता गतवैरा दत्तकर्णास्तिष्ठन्तो दृष्टाः । तदनन्तरं पद्मकाञ्चनकमलाधिष्ठितः प्राप्तकेवलज्ञानः सुरासुरनरसेव्यमान' प्रधानधर्मोपदेशं ददान' सुसाधुर्दृश्यते स्म । ततः प्राप्तचमत्कारौ तौ झटिति भैमाभ्यामवतीर्य सादरं तं नत्वोपविष्टौ । केवली धर्मोपदेशं विदधे । यतः—

"छिन्नमूलो यथा वृक्षो, गतशीर्षो यथा भटः ।
धर्महीनो धनी तावत्, कियत्कालं प्रलसते ? ॥ १ ॥—अनु०
यस्य धर्मविहीनानि, दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव, श्वसन्नपि न जीवति ॥ २ ॥—अनु०
नाच्छादयति कौपीनं, न दंशमशकापहम् ।
शुनः पुच्छमिव व्यर्थं, पाण्डित्यं धर्मवर्जितम् ॥ ३ ॥"—अनु०

पुन' पापण्डिभि' प्रकल्पिते धर्मे परमार्थतः शून्ये जगत्यपि तत्त्वं परीक्षतीति । यथा वन्ध्यापुत्रो मरुमरीचिकाजलस्नातगात्रो गगनारविन्दविनिर्मितमालाधर' शशकशृङ्गनिर्मापितधन्वाऽऽढ्यहस्तो याति । काव्यम्—

---

१ कञ्चुक, २ हस्त ३ 'आहतके पाशपाशोषी' इति हैमः ( का० ४ श्लो० १९८ ), सेको' इति कोके ।
४ तद्राभ्याम्

“[1]अस्य क्षोणिपतेः परार्धपरया लक्षाधिका संख्यया
प्रज्ञाच[2]क्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरान्-
मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे! रोधसि ॥ १ ॥”–शार्दूल०

इत्यादि सर्वं वाङ्मात्रमेव । तथा जैनधर्मं विना सर्वमपि वस्तु शून्यम् । अतो जैनधर्मे नित्यमादरः कर्तव्यः । पुनः पापोदयाज्जनस्तं नाभिलषति । यतः—

“[3]तीर्णे सङ्कीर्णजीर्णे दिशि दिशि विलुलत्कोकिलावद्धजाले
गेहे दूरूपकान्तारटनविनटितः कन्यकाभारभग्नः ।
नानाधिव्याधिविद्धः कदशनशयनैः कष्टचेष्टानुजीवी
क्रीडापात्रं जनानां तदपि हि सततं मोदते पापसक्तः ॥ १ ॥”–स्रग्०

एवंविधोऽपि मोहात् पापकुटुम्बं पोषयति । परं दुःखोदये न कोऽपि रक्षति तम् । दृष्टान्तमाह—

“पीयूषेण सुराः श्रिया मुररिपुर्मर्यादया मेदिनी
स्वर्गः कल्परुहा शशाङ्ककलया श्रीशङ्करस्तोषितः ।
मैनाकादिनगा नगारिभयतो यत्नेन संरक्षिता
मच्चूलूकरणे घटोद्भवमुनिः केनापि नो वारितः ॥ १ ॥”–शार्दूल०

अतो धर्मतः सुखं भवति । यतः—

“सुकुलजन्म विभूतिरनेकधा
प्रियसमागमसौख्यपरम्परा ।
नृपकुले गुरुता विमलं यशो
भवति धर्मतरोः फलमीदृशम् ॥ १ ॥–द्रुतविलम्बितम्

सविनयास्तनया दयिता हिता
नयभवा विभवोऽनुगुणा गुणाः ।
वपुरनाधि समाधिरतिर्नृणां
शुभतरोः प्रथमेऽङ्कुरका इमे ॥ २ ॥”–द्रुत०

---

१ इदं पद्य सुभाषितरत्नभाण्डागारेऽपि दृश्यते, किन्तु तत्र प्रथमचरणद्वये पाठान्तरं तु यथा—
“अस्य क्षोणिपते पराधंपरया लक्षीकृता. सख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्या किलाकीर्तय ”

२ ‘वद्दुर०’ इति क–पाठ । ३ तृणनिर्मिते.

४ इद पदं सुभाषितरत्नभाण्डागारेऽप्युपलभ्यते, परन्तु तत्र तृतीयतुरीयचरणौ तु यथा—
‘मैनाकाहिनगा निजोदरगताः संस्थानत. स्थापिता–
स्वचूलीकरणे घटो०’

५ इन्द्रभयात्.

को धर्मः ? । तमाह—

"कर्तव्या देवपूजा शुभगुरुवचनं नित्यमाकर्णनीयं
दानं देयं सुपात्रे प्रतिदिनममलं शीलनीयं च शीलम् ।
तप्यं शुद्धं स्वशक्त्या तप इह महती भावना भावनीया
श्राद्धानामेष धर्मो जिनपतिगदितः पूतनिर्वाणमार्गः ॥ १ ॥"—स्रग्०

तत्र प्रथमं पूजायाः फलमाह—

"पूजया भवति राज्यमूर्जितं
पूजया भवति निर्मला मतिः ।
पूजया भवति नाकवैभवं
पूजया भवति निर्वृतिः क्रमात् ॥ १ ॥"—रथोद्धता[1]

अथ दानम्—

"वसुधाभरणं पुरुषः, पुरुषाभरणं प्रधानतरलक्ष्मीः ।
लक्ष्म्याभरणं दानं, दानाभरणं सुपात्रं च ॥ १ ॥"—आर्या०
श्रेयांसेन यदर्जितं सुकृतिना पुण्यं युगादर्जिनात्
श्रीवीराद् दधिवाहनस्य सुतया यद्यापि तत्त्वक्षया ।
मासान्ते मुनिसत्तमाद् यदमलं श्रीसङ्गमेनाधुना
तत् ते भद्र ! विशुद्धशासन ! सदा श्रेयः समागच्छतु ॥ २ ॥—शार्दूल०
राज्यश्रीर्भवताऽर्जितार्थिनिवहस्त्यागैः कृतार्थीकृतः
संतुष्टोऽपि गृहाण दानमधुना तन्वन् दयां दानिषु ।
इत्यब्दं प्रतिबोध्य दक्षिणकरं श्रेयांसतः कारयन्
प्रत्यग्रक्षुरसेन पूर्णमृषभः पायादपायाज्जिनः ॥ ३ ॥—शार्दूल०
साकं स्वानपदैः समं परिजनैः सार्धं कुटुम्बेन च
श्रेयांसे घटकोटिभिः सुरसरित्पूरोत्तरं वर्षति ।
पायादिक्षुरसः प्रभोः करतलं कल्लोलकोलाहलं
नोचिः प्रत्युत संस्थितोऽमृतमयः साक्षादिवाम्भोनिधिः ॥ ४ ॥—शार्दूल०
अपि यदि रविबिम्बचुम्बिचूल-
स्तदपि न बिन्दुरपि समस्यपसात् ।

---

[1] रथोद्धता—लक्षणम्—
"रान्नराविह रथोद्धता ।"

[2] आदि प्राकृतिमार्गे.

इति मनसि न माति यः स एष
सृजतु मुदं चुलुको युगादिभर्तुः॥ ४ ॥–पुष्पिताग्रा (औपच्छन्दसिकेत्यपरनाम्नी)

कारणं जगति सर्वसम्पदां
हारणं च विपदां गरीयसाम् ।
अष्टकर्मकरिणां विदारणं
पारणं हरतु तद् दुरितं वः ॥ ५ ॥"–रथोद्धता

अथ शीलमाह—

"हरति कुलकलङ्कं लुम्पते पापपङ्कं
सुकृतमुपचिनोति श्लाघ्यतामातनोति ।
नमयति सुरवर्गां(र्गं) हन्ति दुर्गोपसर्गं
रचयति शुभशीलं स्वर्गमोक्षौ सुलीलम् ॥ १ ॥–मालिनी

तोयत्यग्निरपि स्रजत्यहिरपि व्याघ्रोऽपि सारङ्गति
व्यालोऽप्यश्वति पर्वतोऽप्युपलति क्ष्वेडोऽपि पीयूषति ।
विघ्नोऽप्युत्सवति प्रियत्यरिरपि क्रीडातडागत्यपां-
नाथोऽपि स्वगृहत्यटव्यपि नृणां शीलप्रभावाद् ध्रुवम् ॥ २ ॥"–शार्दूल०
–( सिन्दूर० श्लो० ४० )

अथ तप आह—

"यस्माद् विघ्नपरम्परा विघटते दास्यं सुराः कुर्वते
कामः शाम्यति दाम्यतीन्द्रियगणः कल्याणमुत्सर्पति ।
उन्मीलन्ति महर्द्धयः कलयति ध्वंसं चयः कर्मणां
स्वाधीनं त्रिदिवं शिवं च भजते श्लाघ्यं तपस्तन्न किम् ? ॥१॥–शार्दूल०
–( सिन्दूर० श्लो० ८२ )

---

१ पुष्पिताग्रा–लक्षणम्—

"अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा ।"

२ श्रीसोमप्रभसूरिकृते सिन्दूरप्रकरे ( श्लो० ३९ ) इद पद्यमुपलभ्यते, परन्तु तत्र तृतीयचतुर्थचरणौ तु यथा—

"नमयति सुरवर्गं हन्ति दुर्गोपसर्गं
रचयति शुचि शील स्वर्गमोक्षौ सलीलम् । "

३ 'सुरवर्गां' इति क-ख-पाठ. ।  ४ 'दुर्गोपसर्गां' इति क-पाठ. ।

५ मालिनी–लक्षणम्—

" ननमयययुतेयं मालिनी भोगिलोकैः ।"

६ समूह ।

तप सर्वाक्षसारङ्ग–वशीकरणवागुरा ।
कषायातापमृद्वीका, कर्माजीर्णहरीतकी ॥ २ ॥"–अनु०

अथ भावनामाह—

"कृपौ सुवात' किल वृद्धिहेतुः
शिशौ समातुर्गुरुपक्षपात ।
राज्ये सुनीतिः प्रणये प्रतीति'
तथाहि धर्मे शुभभावना तु ॥ १ ॥–उपजातिः
भावण सा का भावीइ, जा भावी भरहेण ।
रज्ज करंतइ संयरद्धर (?) किउ कम्मखउ जेण ॥ २ ॥"

अथो क्रोधमाह—

"क्रोध' परितापकर', सर्वस्योद्वेगकारकः क्रोध ।
वैरानुषङ्गजनकः, क्रोधः क्रोधः सुगतिहन्ता ॥ १ ॥"–आर्या
–(प्रशमरतौ श्लो० २६)

अथ मानमाह—

"वर्षं यावत् केवलज्ञानलक्ष्मी
लाभं नमो बाहुबल्याप पूर्वम् ।
रामाद् [२]संख्ये यत्र लङ्केश्वरेण
प्रापे मृत्युः कारण तत्र मान' ॥ १ ॥–शालिनी
विमुञ्च मान मनसाऽपि दुष्टं
मानेन लङ्काधिपतिर्विनष्टः ।
पैरासुरासीच्च सुयोधन' किं ?
दु'खं स्थितो बाहुबलिर्न वर्षम् ? ॥ २ ॥"–उप०

अथ मायामाह—

"तिर्यक्षु क्षामकुक्षिर्वदति गुरुमरं भाजनादिप्रणुन्नो
योपित्सु भूरिदुःखं भजति नरगतौ पङ्गुतां कुब्जतां वा ।

---

१ यथा—
भावना सा का भाव्येत या भाविता भरतेन ।
राज्य कुर्वता ... कृतः कर्मक्षयो येन ॥

२ 'समरसङ्गरे'त्यादौ समर स्यात् । ३ युद्धे । ४ परागता असवो यस्य सः, गतप्राणः ।

द्वेष्यः प्रेष्यो दरिद्रो विगतसुखलवो निष्फलारम्भकर्ता
भूयो भूयश्चिराय भ्रमति भववने शाठ्यदोषेण देही ॥ १ ॥–स्रग्धरा

विधाय मायां विविधैरुपायैः
परस्य ये वञ्चनमाचरन्ति ।
ते वञ्चयन्ते त्रिदिवापवर्ग-
सुखान्महामोहसखाः स्वमेव ॥ २ ॥"–उप०
–( सिन्दूरप्रकरे श्लो० ५४ )

अथ लोभमाह—

"यद् दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं
गाहन्ते गहनं समुद्रमथनं क्लेशं ( समुद्रमतनुक्लेशां ? ) कृषिं कुर्वते ।
सेवन्ते कृपणं पतिं गजघटासङ्घट्टदुःसञ्चरं
सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ १ ॥"–शार्दूल०
–( सिन्दूरप्रकरे श्लो० ५७ )

अथ दीक्षामाह—

"एकाहमपि यो दीक्षा-मादत्ते पारमेश्वरीम् ।
अनन्यमनसा धन्यः, सोऽपि याति सुरालयम् ॥ १ ॥"–अनु०

अथ शुद्धव्यवहारं विना एकान्तनिश्चयनैरर्थक्यमाह—

"जइ जिणमयं पवज्जह, ता मा ववहारमोयणं कुणह ।
ववहारनउच्छेए, तित्थुच्छेओ कओ तेण ॥ १ ॥–आर्या

ववहारोवि हु वलवं जं छउमत्थंपि वन्दए अरिहा ।
आहाकम्मं भुंजइ सुयनयमयं पमाणंतो ॥ २ ॥"–आर्या

---

१ दास. । २ मायापराधेन ।

३ स्रग्धरा–लक्षणम्—
"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।"
इदं संयोजनीयं पष्ठेऽपि पृष्ठे ।

४ युद्धम् ।

५ छाया—
यदि जिनमत प्रपद्यध्व तर्हि मा व्यवहारमोचन कुरुत ।
व्यवहारनयोच्छेदे तीर्थोच्छेद. कृत. तेन ॥
व्यवहारोऽपि खलु बलवान् यत् छद्मस्थमपि वन्दतेऽर्हन् (केवली) ।
आधाकर्म भुङ्क्ते श्रुतनयमत प्रमाणयन् ॥

अथ सामायिकमाह—

"पुण्यानामिह नायकं शुभमतेर्भव्याय यद् दायकं
श्रामण्यस्य विधायकं सुमनसः[1] श्रियस्य पाठायकम् ।
षट्कायस्य च नायकं रतिपतेः[1] कुण्ठीभवत्सायकं
दूरत्रासितमायकं शुचितरं कुर्वीत सामायिकम् ॥ १ ॥–शार्दूल०

कर्म जीवं च संश्लिष्टं, परिज्ञातात्मनिश्चयः ।
विभिन्नीकुरुते साधुः, सामायिकशलाकया ॥ २ ॥–अनु०
–( योगशास्त्रे प्र० ४, श्लो० ५२ )

[2]सामाइअंमिवि कए, [3]सुहभावो सावओ अ घडियदुग ।
आउं सुरेसु च बंधइ, इत्तियमित्ताइं पलियाइं ॥ ३ ॥–आर्या

[4]बाणवइ कोडीओ, लक्खा अडसट्ठि सहस्स पणवीसा ।
नव य सया वासीया (पणवीसाए),सतिअडभागपणवीसा (पलिअस्स)॥४॥–आर्या

[6]दिवसे दिवसे लक्खं, जो देइ सुवण्णखंडिय एगो ।
इयरो प(पु)ण सामइयं, करेइ न पहुप्पए महिमा ॥ ५ ॥–आर्या

अथ प्रतिक्रमणमाह—

"संसारापक्रमणं, प्रमादरिपुगाढकन्धराक्रमणम् ।
मुक्तिपथे संक्रमणं, कर्तव्यं तत् प्रतिक्रमणम् ॥ १ ॥"–आर्या

---

१ सज्जनस्य ।

२ छाया—

सामायिकेऽपि कृते शुभभावः श्रावकश्च घटिकाद्वयम् ।
आयुः सुरेषु बध्नाति इयन्मात्राणि पल्यानि (पल्योपमानि) ॥

३ 'सामाइयं कुणंतो समभावं सावओ घडियदुग' इति पाठ उपदेशरत्नाकरे (पत्र० १११) धर्मसङ्ग्रहस्य प्रथमे विभागे च ।

४ छाया—

द्विनवतिः कोट्यः लक्षाणि अष्टषष्टिः सहस्राणि पञ्चविंशतिः ।
नव च शतानि पञ्चविंशतिः त्र्यष्टभागपल्यस्य ॥

५ बाणउइं कोडीओ लक्खा गुणसट्ठि सहस्स पणवीसं ।
नवसय पणवीसाए, सतिहा अडभाग पलिअस्स ॥

इति पाठ उपदेशा० ।

६ छाया—

दिवसे दिवसे लक्षं यो दद्यात् सुवर्णखण्डिकम् एकः ।
इतरः पुनः सामायिकं कुर्यात् न प्रभवति महिमा ॥

अथ केनचिदल्पबहुत्वजीवसंख्याप्रश्ने कृते केवली प्राह—

"नृभ्यो नैरयिकाः सुराश्च निखिलाः पञ्चाक्षतिर्यग्गणा
द्व्यक्षाद्या ज्वलना यथोत्तरममी संख्यातिगा भाषिताः ।
तेभ्यो भूजलवायवः समधिकाः प्रोक्ता यथाऽनुक्रमं
सर्वेभ्यः शिवगा अनन्तगुणितास्तेभ्योऽप्यनन्तांशगाः (?) ॥१॥"

—शार्दूल०

इत्यादि देशनां निशम्य कमलया सह हरिः प्रतिबुद्धो जैनधर्मं जग्राह । अभक्ष्यानन्तकायरात्रिभोजनादिकेभ्यो विरमितौ । यतः—

"येऽश्नन्त्यशक्ताः पशुवन्निशायां
भवन्ति ते हन्त भवान्तरेषु ।
उलूका कोरगशूकरालि(ली)-
गोधोतुगृध्राः कथितं जिनेन्द्रैः ॥ १ ॥—"उपजातिः

ततः पूर्वं दृष्टमाहात्म्यात् स हरिः परमेष्ठिस्वरूपं पप्रच्छ । ततः केवलिसाधुराह—

"पञ्चादौ यत्पदानि त्रिभुवनपतिभिर्व्याहृता पञ्चतीर्थी
तीर्थान्येवाष्टषष्टिर्जिनसमयरहस्यानि यस्याक्षराणि ।
यस्याष्टौ सम्पदो वाऽनुपमतममहासिद्धयोऽद्वैतशक्ति-
र्जीयाल्लोकद्वयस्याभिलषितफलदः श्रीनमस्कारमन्त्रः ॥ १ ॥—स्रग०

सारा वाङ्मयवारिधेरघहरी पुण्यप्रबन्धोद्धुरा
वेतालानलकालकूटसलिलव्यालादिदोषापहा ।
निर्वाणादिषु सुप्रदानचतुरा कामार्थसम्पादिका
ध्याता पञ्चनमस्कृतिः शुभधिया सर्वार्थसंसाधिका ॥ २ ॥—शार्दूल०

सङ्ग्राम-सागर-करीन्द्र-भुजङ्ग-सिंह-
दुर्व्याधि-वह्नि-रिपु-बन्धनसम्भवानि ।
चौर-ग्रह-भ्रम-निशाचर-शाकिनीनां
नश्यन्ति पञ्चपरमेष्ठिपदैर्भयानि ॥ ३ ॥—वसन्ततिलका

किं मन्त्रयन्त्रौषधिमूलिकाभिः
किं गारुडोड्डीशमणीन्द्रजालैः ।
स्फुरन्ति चित्ते यदि मन्त्रराज-
पदानि कल्याणपदप्रदानि ॥ ४ ॥—उपजातिः

---

१ निर्दया ।

कृत्वा पापसहस्राणि, हत्वा जन्तुशतानि च ।
अर्हं मन्त्रं समाराध्य, तिर्यञ्चोऽपि दिवं गता[1] ॥ ५ ॥—अनु०

नवकारइकअक्खर, पाव फेडइ सत्त अइराणम् ।
पन्नासं ५० च पएणं, पच सयाई समग्गेण ॥ ६ ॥—आर्या

जे केवि गया मुक्खं, गच्छन्ति य (जंति गमिस्सति ?) कम्ममलमुक्का ।
ते सव्वेवि य जाणसु, जिणनमुक्कारप्पभावेण ॥ ७ ॥—आर्या

जो गुणइ लक्खमेगं, पूएइ विहो(इ) जिणनमुक्कारो ।
तित्थयरनामगुत्त, सो बधइ नत्थि संदेहो ॥ ८ ॥—आर्या

तावादेशवशादपीह नृभवे न त्वं मयाऽऽराधित-
तेनाहं भवसिन्धौ निपतितोऽम्भोधौ महापातकी ।
तत् त्रायस्व विभो ! ममाद्य शरणं सर्वज्ञ ! बिम्बाकृते !
मीनो मीनवराभमस्कृतिपरो जातस्मृति स्वर्ययौ[2] ॥ ९ ॥—शार्दूल०

पञ्चपरमेष्ठिनामष्टोत्तरशत १०८ गुणा[3], तेन मालायामष्टोत्तरशतं मणिकाः । तान् दर्शयति—

“बारस १२ गुण अरिहंता, सिद्धा अट्ठेव ८ सूरि छत्तीसम् ३६ ।
उज्झाया पणवीस २५, साहु सगवीस २७ अट्ठसयम् १०८ ॥ १ ॥—आर्या

अशोकवृक्ष[1] १ सुरपुष्पवृष्टि २—
दिव्यध्वनि ३ चामर ४ आसन ५ च ।

---

१ छाया—

नमस्कारकाक्षरं पापं स्फेटयति सप्त अतराणां ( सागरोपमाणाम् ) ।
पञ्चाशता पदेन पञ्च शतानि समग्रेण ॥
ये केऽपि गता मोक्षं गच्छन्ति च कर्ममलमुक्ताः ।
ते सर्वेऽपि च जानीहि जिननमस्कारप्रभावेण ॥
यो गुणयति लक्षमेकं पूजयति विधिना जिननमस्कारम् ।
तीर्थंकरनामगोत्रं स बध्नाति नास्ति सन्देहः ॥

२ जिनार्चायां प्रयुक्त श्रीसिद्धसेनदिवाकरनमस्कारमाहात्म्यसप्तमप्रकाशे—

“ भूतले भरमाम्भोधौ जिनबिम्बाकृतेर्विभोः ।
नमस्कृतिपरो मीनो जातस्मृतिर्दिवं ययौ ॥ १ ॥”

३ छाया—

द्वादश गुणा अर्हतां सिद्धानामष्ट सूरीणां षट्त्रिंशत् ।
उपाध्यायानां पञ्चविंशतिः साधूनां सप्तविंशतिरष्टोत्तरशतम् ॥

भामण्डलं ६ दुन्दुभि ७ रातपत्रं ८
सत्प्रातिहार्याणि जिनेश्वराणाम् ॥ २ ॥"–उपजातिः

अपायापगमातिशयः ९ ज्ञानातिशयः १० पूजनातिशयः ११ वाचनातिशयः १२ इति जिनगुणाः १२ ॥

अथ सिद्धगुणाः—

"[1]नाणं च १ दंसणं चिय २, अव्वाबाहं ३ तहेव संमत्तम् ४ ।
अक्खयठिई ५ अरूवी ६, अगुरुलहू ७ वीरियं ८ हवइ ॥ १ ॥"–आर्या

इति ॥

अथ आचार्यगुणाः ३६—

"[2]पंचिंदियसंवरणो ५, तह नवविहबंभचेरगुत्तिधरो ९ ।
चउविहकसायमुक्को ४, इअ अठारसगुणेहिं १८ संजुत्तो ॥ १ ॥–आर्या
पंचमहव्वयजुत्तो ५, पंचविहायारपालणसमत्थो ५ ।
पंचसमिओ ५ तिगुत्तो ३, छत्तीसगुणो ३६ गुरू मज्झ ॥ २ ॥"–आर्या

इति ।

अथोपाध्यायगुणाः पञ्चविंशतिः २५—

[3]एकादशाङ्गानि [4]द्वादशोपाङ्गानि पठति पाठयति एवं त्रयोविंशतिः २३ [5]चरणसित्तरि १ करणसित्तरि १ सर्वमीलने २५ ।

---

१ छाया—
ज्ञानं च दर्शनमेवाव्याबाधं तथैव सम्यक्त्वम् ।
अक्षयस्थितिररूप्यगुरुलघु वीर्यं भवति ॥

२ छाया—
पञ्चेन्द्रियसंवरणस्तथा नवविधब्रह्मचर्यगुप्तिधरः ।
चतुर्विधकषायमुक्त इत्यष्टादशभिर्गुणैः संयुक्तः ॥
पञ्चमहाव्रतयुक्तः पञ्चविधाचारपालनसमर्थः ।
पञ्चसमितः त्रिगुप्तः षट्त्रिंशद्गुणो गुरुर्मम ॥

३ आचार–सूत्रकृत–स्थान–समवाय–भगवती–ज्ञाताधर्मकथा–उपासकदशा–अन्तकृद्दशा–अनुत्तरोपपातिकदशा–प्रश्नव्याकरण–विपाकश्रुतेति एकादश अङ्गानि ।

४ औपपातिक–राजप्रश्नीय–जीवाजीवाभिगम–प्रज्ञापना–जम्बूद्वीपप्रज्ञप्ति–चन्द्रप्रज्ञप्ति–सूर्यप्रज्ञप्ति–निरयावली (कल्पिका)–कल्पावतंसिका–वृष्णिदशेति द्वादश उपाङ्गानि ।

५ चरणसप्ततिकरणसप्ततिविवरणाभिलाषिणा द्रष्टव्या ओघनिर्युक्ति–श्राद्धदिनकृत्यटीका–प्रवचनसारोद्धार( द्वा० ६६, ६७ )वृत्तिप्रमुखग्रन्थाः ।

चारित्रस्य सप्ततिभेदगाथा—

“वय ५ समणधम्म १० संजम १७, वेयावच्चं १० च बंभगुत्तीओ ९ ।
नाणाइतियं ३ तव १२ कोहनिग्गहाई ४ चरणमेयम् ॥ १ ॥”—आर्या

अथ क्रियायाः सप्ततिभेदगाथा—

“पिंडविसोही ४ समिई ५, भावण १२ पडिमा १२ य इंदियनिरोहो ५ ।
पडिलेहण २५ गुत्तीओ ३ अभिग्गहा ४ चेव करणं तु ॥ १ ॥”—आर्या

इति ॥

---

१ छाया—

व्रतश्रमणधर्मसंयमवैयावृत्त्यं च ब्रह्मगुप्तयः ।
ज्ञानादित्रिकं तपः क्रोधनिग्रहादि चरणमेतत् ॥

२ अहिंसा सत्यम् अस्तेयं ब्रह्मचर्यम्, अपरिग्रह इति पञ्च व्रतानि ।

३ क्षान्तिः, मुक्तिः आर्जवं मार्दवं शौचं, सत्यं संयमः, तपः, आकिञ्चन्यं ब्रह्मचर्यम् इति दशविधः श्रमणधर्मः ।

४ पृथ्वीकाय-अप्काय-तेजस्काय-वायुकाय-वनस्पतिकाय-द्वीन्द्रिय-त्रीन्द्रिय-चतुरिन्द्रिय-पञ्चेन्द्रिय-अजीवकाय-प्रेक्षा-उपेक्षा-परिष्ठापन-प्रमार्जन-मनः-वचन-कायविषयकः संयमः । प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहरूपपञ्चाश्रवविरमणं स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपपञ्चेन्द्रियनिग्रहः, क्रोधमानमायालोभरूपकषायजयः, मनोवाक्कायदण्डत्रयविरतिः इति सप्तदशविधो वा संयमः ।

५ दशविधं वैयावृत्त्यं यथा—आचार्य-उपाध्याय-तपस्वि-शैक्षक-ग्लान-गण-कुल-संघ-साधु-समनोज्ञविषयकम् ।

६ सस्त्रीकवसतित्याग-स्त्रीकथाविरतता-स्त्रीनिषद्योपवेशनत्याग-स्वाङ्गावलोकनपरिहार-कुड्यान्तर-पूर्वक्रीडित-प्रणीताहारातिमात्राहारविभूषणवर्जनानि इति नवविधा ब्रह्मगुप्तयः ।

७ ज्ञानं दर्शनं चारित्रं च ।

८ अनशनम् अवमौदर्यं वृत्तिसंक्षेपः रसपरित्यागः, कायक्लेशः संलीनता इति षड्विधं बाह्यं तपः, आभ्यन्तरमपि षड्विधं तद्यथा—प्रायश्चित्तं विनयः वैयावृत्त्यं स्वाध्यायः व्युत्सर्गः ध्यानम् ।

९ छाया—

पिण्डविशुद्धिः समितयः भावनाः प्रतिमाः च इन्द्रियनिग्रहः ।
प्रतिलेखनं गुप्तयः अभिग्रहाश्चैव करणं तु ॥

१० आहारः उपाश्रयः वस्त्रं पात्रम् इति एतद्विषयिका चतुर्विधा पिण्डविशुद्धिः ।

११ सम्यक् प्रकारेण ईर्या भाषा एषणा आदाननिक्षेपौ उत्सर्गः इति पञ्च समितयः ।

१२ अनित्य अशरण-संसार-एकत्व-अन्यत्व-अशुचित्व आश्रव संवर-निर्जरा-लोक-बोधिदुर्लभता-धर्मस्वाख्याततत्त्वानुचिन्तना इति द्वादश भावनाः ।

१३ एकमासिकी द्विमासिकी त्रिमासिकी यावत् सप्तमासिकी इति सप्त प्रतिमाः सप्ताद्यो प्रतिमास्वप्युपरि प्रथमा द्वितीया तृतीया सप्तरात्रिन्दिवा प्रत्येका इति अष्टमी नवमी दशमी अहोरात्रिकी एकादशी एकरात्रिकी द्वादशी प्रतिमा ।

१४ मुखपोतिका १ चोलपट्टः २ कल्पत्रिकम्—एक ऊर्णामयो द्वौ सूत्रमयौ ३-४-५ द्वे निषद्ये रजोहरणस्य एका सूत्रमयी अभ्यन्तरनिषद्या ६ द्वितीया बाह्या पादप्रोञ्छनरूपा ७ रजोहरणं ८ संस्तारकः ९ उत्तरपट्टः १० । एतेषां दशानामपि स्थानानां प्रतिलेखनायां प्रभातानुपूर्व्यामिति सूत्रम् । अन्ये तु एकादशं दण्डकमाहुः । दिवसस्य महत्त्रिभागेऽपि प्रान्ते सति उपकरणचतुर्दशकं प्रत्युपेक्ष्यते तद्यथा—मुखवस्त्रिका चोलपट्टः गोच्छकः पात्रप्रतिलेखनिका पात्रबन्धः पटलानि रजस्त्राणं पात्रस्थापनं मात्रकं पतद्ग्रहः, रजोहरणं कल्पत्रिकम् । अनुपात्रौपध्यां सप्तविधपात्रनिर्योगानुप्रेक्षा भवति । तत्रासने समुपविष्टः प्रथमं मुखवस्त्रिकां प्रत्युपेक्ष्य गोच्छकं प्रत्युपेक्षते ततः पटलानि ततः पात्रकेसरिकां ततः पात्रबन्धनं ततो रजस्त्राणं, ततः पात्रं ततः पात्रस्थापनमिति ।

१५ मनोगुप्तिः वचनगुप्तिः कायगुप्तिः । १६ द्रव्य-क्षेत्र-काल-भावभेदात् चतुर्धा ।

अथ साधुगुणाः २७—

[1]"छव्वय ६ छकायरक्खा १२, पंचेंदिय १७ लोहनिग्गहो १८ खंती १९ ।
भावविसुद्धी २० पडिले-हणाइ करणे विसुद्धी अ २१ ॥ १ ॥–आर्या
संजमजोए जुत्तो २२, अकुसलमण २३ वयण २४ कायसंरोहो २५ ।
सीआइपीडसहणं २६, मरणंतुवसग्गसहणं च २७ ॥ २ ॥"–आर्या

इति अष्टोत्तरशतगुणान् हृदि निधाय पञ्चपरमेष्ठिमन्त्रस्मरणं क्रियते, महालाभाय भवति नामस्कारिको वाणिज इव ।

यथा सवैयो तेवीसो २३—

[2]बैठत ऊठत सोवत वातमें सेठीपुत्तो परमेठी पठंतो
द्वादश वर्ष समुद्द मज्झे सो और रत्न छुपाय गोगंथि गहंतो ।
आवत नीरमैं खूटत वालण नाविककौ ज्यौं उद्धार दियंतो
तैसें नो करीउ पीछे सो मागत भूप समीप ते जैन करंतो ॥ १ ॥

तथा शीलालङ्कारहारस्य रत्नसिंहासनीभूतशूलिकाकीलकस्य श्रेष्ठिनः सुदर्शनस्य पूर्वभवः–शु(सु)भग इति नाम्ना गोपालकः, साधुमुखात् 'नमो अरिहंताणं' इति पदं लब्धं पपाठ; तत्पाठप्रभावात् मृत्वा सोऽयं जात इति निःसंदेहो जातो हरिः । इतश्च सोऽपि राक्षसो वटादवतीर्य यानं विना इतस्ततः परिभ्रमन् केवलिसदसि स्थितः धर्मं श्रुत्वा मांसभक्षणनियमं कृत्वा जैनो जातः । जामातरं हरिं पप्रच्छ–भवतां का ज्ञातिः ? । स प्राह—

अहं च त्वं च राजेन्द्र!, लोकनाथावुभावपि ।
बहुव्रीहावहं सिद्धः, षष्ठीतत्पुरुषे भवान् ॥ १ ॥–अनु०

---

१ छाया—

षड् व्रतानि षट्कायरक्षा पञ्चेन्द्रियलोभनिग्रहः क्षान्ति ।
भावविशुद्धि प्रतिलेखनादि करणे विशुद्धिश्च ॥
संयमयोगे युक्त अकुशलमनोवाक्कायसरोध. ।
शीतादिपीडासहन मरणान्तोपसर्गसहन च ॥

२ तात्पर्यम्—

उपविशन्नुत्तिष्ठन् स्वपन् समापसाण श्रेष्ठिपुत्र परमेष्ठिन पठन्
द्वादश वर्षाणि समुद्रमध्ये स च रत्नानि गोपयन् गोमयग्रन्थिषु गृह्णन् ।
आगच्छता समुद्रे त्रुटितानि इन्धनानि नाविकाना यादृशानि उद्धारकेण दत्तानि
तादृशानि न कृतानि पश्चात् स मार्गयन् भूपसमीप गत तान् जैनानकरोत् ॥ १ ॥

३ नमोऽर्हद्भ्य । ४ लोका नाथा यस्य स इति विग्रह', लोकेभ्यो भिक्षावृत्तिर्नर ।
५ लोकाना नाथ इति विग्रह , नरपति ।
जैन० स्तो० ४

लोकनाथपुत्री लोकनाथपुत्राय योग्या भवतीति लोकोक्तिसमाना युक्तिरुक्ता । परं श्वशुरेण प्रार्थ-कमलावतिविप्रो महान् पण्डितो वर्तते । योग्योऽयं मम दुहितुर्भर्ता । यतः—

"विद्वत्त्वं च नृपत्वं च, नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते ॥ १ ॥"—अनु०

ततः केवलिनं वन्दित्वा सञ्जातहर्षोत्कर्षो नृपो जामातरं दुहितरं (च) पश्चात् स्वगृहं नीत्वा सविशेषं विवाहोत्सवं कृत्वा बहीर्लक्ष्मीस्तातुष्टौ च समर्प्य मम पुण्याऽऽज्ञया त्वं सुम(?) इत्याशिषं ददौ । यतः—

"जैनो धर्मः सुमति (?) दयया न्याय्यलक्ष्म्या विवेकः
शुद्धो बोधः परिणतगिरा तत्त्वरुच्या च मोक्षः ।
क्षान्त्या साधुः स्फुरति नृपतिः सेनया धैर्ययुक्त्या
वीरस्तद्वत् त्वमिह सुचिरं नन्द विप्रप्रबोधाम् ॥ १ ॥"—मन्दाक्रान्ता

हे पुत्रि ! त्वं कुलशीलत्वं भज, यतः—

"शयिते दयिते शेत, तस्मात् पूर्वं तु बुध्यते ।
सक्त भुक्तवति भुङ्क्ते, सत्कुल्या स्त्रीमतल्लिका ॥ १ ॥"—अनु०
कुलस्त्रिया न गन्तव्य-गुरुत्व चत्वरे पथि ।
देवयात्रा कथास्थाने, न तथा राजसागरे ॥ २ ॥"—अनु०
लिङ्गिन्या वेश्यया दास्या, स्वैरिण्या कारुकस्त्रिया ।
युज्यते नैव सम्पर्कः, कदापि कुलयोषिताम् ॥ ३ ॥—"अनु०

ततो हरिः कमलया सह श्वशुरादीनापृच्छ्य मातापितृगृहं जगाम । कति(चित्) दिनानि तत्र नीत्वा पश्चात् 'वाराणसीं' निजपाठकालङ्कृतां जगाम । तेन पाठकेन गृहस्वामी कृतः । पाठकः परलोकं प्राप्तः । हरिः कमलया सह भोगान् भुङ्क्ते । एवं कियति काले गते हरिर्मनसि चिन्तयति-इमे दुष्टा भोगाः । यतः—

"भुक्त्वाऽऽह्वानं स्त्रियास्तामनुसरति रसो हंसकोऽप्यादपादे-
नाशोकः स्पृष्टमात्रस्तिलककुरवकौ शुभ्रनालिङ्गनाभ्याम् ।
पुष्पेषु वक्त्राब्जवासाधिकरससुरया केसरश्चेद् विकारो-
ऽप्येषां तत् सत्यकीचाधिकविषयरतिर्यासु किं नो भयार्तिम् ? ॥१॥—स्रग्०

वृद्धत्वमपि जायमानम् । यतः—

"अङ्गं गलितं पलितं मुण्डं
दशनविहीनं जातं तुण्डम् ।

१ धर्मोऽसुमति' इति प्रतिभाति । २ मन्दाक्रान्ता-लक्षणम्—
"मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गुरू चेत् ।"

वृद्धो याति गृहीत्वा दण्डं
तदपि न मुञ्चत्याशा पिण्डम् ॥ १ ॥"–पादाकुलकम्[1]

मुखं लोलल्लालं विगतदशनास्तेऽपि दशना
न विस्पष्टा दृष्टिर्जितसितकरः केशनिकरः ।
गतप्राणः पाणिर्वपुरुपचितास्थिस्थपुटितं
न मृग्यं वैराग्यं तदपि कपिलोलेन मनसा ॥ २ ॥–शिखरिणी

पुरीषशूकरः पूर्वं, ततो मदनगर्दभः ।
जराजरद्गवः पश्चा–न्न कदापि पुमान् पुमान् ॥ ३ ॥"–अनु०

ततो विषयान् मुक्त्वा नित्यमर्हन्तमेव ध्यायति स । यतः—

"नागो भाति मदेन कं[3] जलरुहैः[4] पूर्णेन्दुना शर्वरी
शीलेन प्रमदा जवेन तुरगो नित्योत्सवैर्मन्दिरम् ।
वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः
सत्पुत्रेण कुलं नृपैर्वसुमती लोकत्रयं चार्हता ॥ १ ॥"–शार्दूल०

इति । प्रान्ते समाधिना कालं कृत्वा सौधर्मे द्वौ देवौ जातौ, क्रमेण सिद्धिं गमिष्यत इति धर्मसामग्रीप्राप्त्यधिकारे हरिटाकलञ्चयकथा सम्पूर्णा ॥

॥ इति वृत्तद्वयसार्थः सम्पूर्णः ॥ २ ॥

अथ दानद्वारमाह—

सूत्रम्—

**दानं द्विधाऽभयसुपात्रगतं सुपोष्यं**
**मुक्त्यै कृपादिपदतस्त्रिविधं तु भुक्त्यै ।**
**जैनोऽत्र वेत्ति न परो नहि नष्टनेत्रो**
**रूपं प्ररूपयति किं किल धर्मरश्मेः? ॥ ३ ॥**

व्याख्या—अभयसुपात्रगतं द्विधा दानं कर्तृपदं सुपोष्यं सत् मुक्त्यै–मोक्षाय भवति । अभयं च सुपात्रं च तयोः समाहारः अभयसुपात्रम्, तद् गतम्–आश्रितं, कर्तरि क्तः । अभयदानं सुपा-

---

१ पादाकुलक–लक्षणम्—

"यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम् ।
अनियतवृत्तपरिमाणसहितं प्रथितं जगत्सु पादाकुलकम् ॥ १ ॥"

२ विगतचर्वणा. । ३ जलम् । ४ कमलैः ।

प्रदानमित्यर्थः । तु–पुनः कृपादिपदतः त्रिविधं दानम्–अनुकम्पादानम् उचितदान कीर्तिदान इति त्रिकं भुक्त्यै–भोगाय भवति । अत्र–लोके जनो–जैनगीतार्थो वेत्ति । एतत् विवेचन सर्वं जानाति । परो मिथ्यात्वी न वेत्ति । अत्र दृष्टान्तेन द्रढयति । किलेति सत्ये । नत्र्यनेत्र –ग्रन्थस्थः सुगत' धमरश्म'–श्रीधर्मस्य रूपं किं नहि प्रस्पयति ? अपि तु कथयत्येव । नहि इति मकारमखण्डमव्ययम् । इति वृत्तार्थः ॥

अथाभयदानलक्षणमाह–

"त्रिधा मनोवाक्तनुभिस्त्रिधेषु
ध्यान्यानुमत्या करणादिभिश्च ।
यत् वर्जनं जीवगणे वधस्य
निर्मलदेवाभयदानमुक्तम् ॥ १ ॥–उपजाति
यत् वर्ज्यतेऽमीषु वधस्त्रिधा तत्
पयायनात्'ादय दुःखहृत्' ।
मनोऽर्तितो वा त्रिजगत्त्रिभ तत्
तीर्थङ्करणाभयदानमुक्तम् ॥ २ ॥–उप०
धन्येन येनाभयदानमङ्गि–
व्रजाय दत्त किल तेन दत्तं ।
किं किं न दत्तं यदहो त्रिलोक्यां
न जीवितादिष्टतमं समस्ति ॥ ३ ॥–उप०
सर्वेऽपि जीवाद्दतयोऽत्र जीवा
स्ततो मिथोऽप्यालि भयं न केषाम् ।
तत् येन भेजे विरतिस्त्रिलोक्यां
तेनाभयोद्रोपणमेव सने ॥ ४ ॥–उप०
विद्यादिदानप्रभवे (वा) भुवोऽन्ये'
परोपकारा न कति प्रतीताः ? ।
अमी यतोऽन्तेऽपि समीभवन्ति
भयातजन्तोरभयार्पणं किम् ? ॥ ५ ॥–उप०
पितुः कलाधातुरमीतिदातु–
र्मातुश्च किं प्रत्युपकारकर्म(कर्म?) ।
इति स्मरन्तो हृदि कोऽपि गेद
मर्दीभिरत्यर्थं यदि धिपन्ति ॥ ६ ॥"–उप०

---

१ जीवा आहारिताः–आहारो कर्ता है ।

अथ पात्रलक्षणमाह—

"ज्ञानं क्रिया च द्वयमस्ति यत्र
तत् कीर्तितं केवलिभिः सुपात्रम् ।
श्रद्धाप्रकर्षप्रसरेण दानं
तस्मै प्रदत्तं खलु मोक्षदायि ॥ १ ॥"–इन्द्रवज्रा

अथो[1] देशविरतिः—

"संवेगनिर्वेदशमानुकम्पा-
स्तिक्याङ्कसम्यक्त्वमुपाश्रितानाम् ।
इयं तु देशा(द्) विरतिर्यतिला-
नुरागभाजां गृहमेधिनां स्यात् ॥ १ ॥–उप०
उत्तमपत्तं[2] साहू, मज्झिमपत्तं च सावया भणिया ।
अविरयसम्मद्दिट्ठी, जहन्नपत्तं मुणेयव्वं ॥ २ ॥"–आर्या

अथानुकम्पालक्षणमाह—

"अनुकम्पाऽनुकम्प्ये स्याद्, भक्तिः पात्रे तु सङ्गता ।
अन्यथाधीस्तु दातृणा–मतिचारप्रसञ्जिका ॥ १ ॥"–अनु०

અનુકંપા કરવા યોગ્ય જીવનેં વિષે અનુકંપા કહી, અનેં પાત્રનેં વિષે ભક્તિ કહી, અન્યથા કહિતાં પાત્રનેં વિષે અનુકંપા કહીઇ તો અતિચાર લાગે ઇતિ ॥

"दीनादिकेभ्योऽपि दयाप्रधानं
दानं तु भोगादिकरं प्रधानम् ।
दीक्षाक्षणे तीर्थकृतोऽपि पात्रा-
पात्रादिचर्चां ददतो न चक्रुः ॥ १ ॥"–इन्द्रवज्रा

श्रीमहावीरेण द्विजाय वस्त्रदानं कृतम् । सुहस्तिसूरिणा रङ्के अन्नदानं कृतम् ।

"अर्थिव्यथापारनिदानदानो
नकारकारागृहचित्तवृत्तिः ।
अदेयदेयस्वपरप्रभेद-
मुक्तो विमुक्तैरपि किं न मान्यः ? ॥ १ ॥"–उपजातिः

---

१ 'अथ' इति ख–पाठ ।

२ छाया—

उत्तमपात्रं साधुर्मध्यमपात्रं च श्रावका भणिताः ।
अविरतसम्यग्दृष्टिर्जघन्यपात्रं ज्ञातव्यम् ॥

અર્થિ—યાચકજનને વ્યથા—પીડાને પાર પમાડે તેહનુ નિદાન—કારણ એહવુ દાન છે જેહનુ અને નકાર કહિતા નથી એહવો જે નાકારો તેહનુ કારાગૃહ કહિતાં બંદિખાનુ છે, એહવુ જે ચિત્ત તેહને વિષે વૃત્તિ—વ્યાપાર છે જેહનો અને દેવા યોગ્ય અદેવા યોગ્ય પોતાનુ પારકુ એહવે ભેદે રહિત એહવો જે દાતારી પુરૂષ તે[હનેં] વિમુક્ત કહિતાં નિઃસ્પૃહ જે યોગીન્દ્ર સરીખાને પણ [તે] માનવા—સત્કારવા યોગ્ય છે—પ્રશસવા યોગ્ય ( છે ).

॥ इति दातृलक्षण सामान्यम् ॥

अथ काव्यम्—

"धर्मो हि जीवः शुभशर्मलक्ष्म्या
धर्मस्य जीवः खलु जीवरक्षा ।
सर्वप्रकारैस्तदियं प्रपाल्या
धर्मं विना नैव शुभोपलब्धिः ॥ १ ॥"—इन्द्रवज्रा

अथात्र अभयादिदानाधिकारे जैनो वेत्ति नापरः, अतो जैनमभिदृष्टान्तमाह—

'श्रावस्ती'नगरे जितशत्रुनामा राजा । तस्य कीर्तिमती देवी । तयोः पुत्रः मृगध्वजनामा कुमारो विनीतो विचक्षणोऽस्ति । तस्मिन्नेव पुरे राज्ञो वल्लभः कामदेवनामा श्रेष्ठी शरत्काले निज गोकुले गतः । गोपाधिपेन दण्डकेन नाम्ना सत्कृतिः एको महिषः शीघ्रं श्रेष्ठिसमीपमाजगाम । गोपेन प्रोक्तः—भो महिष ! मम तव च स्वाम्ययं समागतः । ततो महिषः श्रेष्ठिपादयुग विनयेन पतितोऽग्रजिह्वां विस्तारयन् स्थितः । श्रेष्ठिना गोपः पृष्टः—किमिदम् ? । ततो गोपोऽवदत्—स्वामिन् ! साधुवचनेन मरणभीरोर्महिषस्य मया अभयं दत्तम् । इदानीं युष्माकं समीपेऽभय याचत्ययम् । श्रेष्ठिना चिन्तितम्—अहो तिर्यग्जातिरपि वराक एष जीवितप्रियो जातिस्मरणो विपदे, अतो मयाऽपि तेऽभयं दत्तम् । विहर यथेष्टं गोकुले । श्रेष्ठिनाऽप्युक्ते सति ततः श्रेष्ठिचरणात् भद्रकमहिष उत्थितः । श्रेष्ठी स्वगृहं समेतः । भद्रकमहिषोऽपि श्रेष्ठिकिङ्करैर्निवार्यमाणोऽपि श्रेष्ठ्यनुपदं पृष्ठसंलग्न आगतवान् । ततः श्रेष्ठी कौटुम्बिकनरान् प्राह—भो जातिवल्लभ ! पितरोऽस्य या वृत्तिः सा तावती भद्रकमहिषस्यापि देया । पुत्रवत् पालयति । श्रेष्ठी यदा राजसमीपं गच्छति स । महिषोऽपि श्रेष्ठिना सह गतः, राज्ञः चरणे पतितः । राज्ञा पृष्टम्—किमिदं ? किमर्थम् ? । श्रेष्ठी भूपं प्राह—अयं भद्रको भवतां पार्श्वेऽभयं मार्गति । राज्ञोक्तम्—दत्त, हे भद्रक तुलाय ! यथेष्टं विहर पत्र पुरे वा । राज्ञा पुरे सर्वत्रोद्घोषणा कारापिता—योऽस्य मेदस्यानिष्टं करिष्यति, स राज्ञा वध्यो ज्यायपुत्रोऽपि । ततो नृपस्य प्रणामं कृत्वा राजभवनान्निर्गतः जन च प्रशंसा जातः मत्ये भद्रक इति । नगरडिम्भाश्च समारूढाः क्रीडां कुर्वन्ति । आलम्ब्यमय इव सर्वा मेदमासीको भाग' । एव प्रजाति काम यदा उद्यानादागच्छन् मृगध्वजकुमारस्य भद्रकं गच्छरमाण दृष्ट्वा सञ्जातरोष'

१ जातीविदः । २ महिष ! । ३ मदिरूपस्य । ४ महिषः ।

सन् खड्गेन तस्यैकं पादं चिच्छेद। पुनर्हन्तुकामोऽनुचरैर्निषिद्धः अवध्योऽस्तीति। भूपेन ज्ञातं तत्। हा तपस्वी निरपराधो हतः, त्रिपादैः[1] क्लेशेन गमनं कृत्वाऽपराधस्थ(स्त)म्भमास्थितोऽस्तीति। ततो राज्ञा समादिष्टम्—कुमारोऽयं हन्यतामिति। जैनधर्मबुधाऽमात्येन[3] भूपचक्षुर्विषयं त्यक्त्वा वध्यमण्डनव्याजादेकस्थाने कथाव्याख्यानसमयं कुमारो नीतः। मृगध्वज! त्वया हिंसाफलं प्रत्यक्षं दृष्टं, शृणु सप्तनरकेषु घोरदुःखेषु दशविधवेदनाकथनेनाशुचिदुर्गन्धक्लिन्नगात्रमारणताडनादिविस्तारम्। ततः श्रावणानन्तरं जातजातिस्मरणः कुमारो बभूव। जैनागमोक्तं सत्यं संभावयति स। प्रधानेन प्रोक्तम्—हे कुमार! सर्वज्ञेन नेमिनाम्ना[4] जिनेन चतुर्गतिसंसार ईदृशो भणितः, यत्र सुखं नास्ति। कुमारेण गदितम्—हे अमात्य! सोऽनुभूतो ज्ञातो मयाऽधुनेति। ततः कुमारः प्रव्रज्यां ग्रहीतुं लोचं कर्तुं प्रवृत्तः। ततोऽमात्येन निजभण्डारत आनीय रजोहरणं पात्रं पात्रनिर्योगं कुमाराय समर्पितं कथितं च—कुमार! त्वं सीमन्धरस्यानगारस्य शिष्य इति। कारितसामायिकः श्वेताम्बरः सुसाधुमुद्राधारको राज्ञः समीपं नीयमानो दृ(दि?)ष्ट्याऽऽगतः। राज्ञा प्रोक्तम्—अहो तेजस्वी सूर्य इव सौम्यमूर्तिः सोम इव दृश्यते। तदा सचिवेन भणितम्—स्वामिन्! श्रमणो वध्यः? भूपेन प्रोचे—अवध्य इति। कुमारोऽपि श्रमणरूपी नृपपार्श्वे गतः। उपलक्षितो राज्ञा बाष्पजलभरलोचनेन कथितं च—अहो अमात्यबुद्धिः, ममाज्ञाभङ्गो रक्षितो मरणात् कुमारोऽपि। राज्ञा प्रोक्तम्—राज्यं गृहाण। कुमारेणोक्तम्—मम संसारेणाऽलम्। ततो निष्क्रमणोत्सवेन सीमन्धरस्य साधोः शिष्योऽजायत स। ततः प्रधानेन भद्रकसमीपमागत्य प्रतिबोध्य निष्कपायीकृतः। यतः—

"व्यसनशतगतानां क्लेशरोगातुराणां
मरणभयगतानां दुःखशोकार्दितानाम्।
जगति बहुविधानां व्याकुलानां जनानां
शरणमशरणानां नित्यमेको हि धर्मः॥ १॥"—मालिनी

ततोऽनशनं कृत्वाऽष्टादशदिवसे कालं प्राप भद्रकः। मृगध्वजर्षिरपि कालक्रमेण केवलज्ञानं प्रापत्। जितशत्रू राजाऽपि सपरिवारस्तत्रागच्छत्, देशनान्ते पप्रच्छ—हे भगवन्! स भद्रकमहिषः कस्यां गतौ गतः?। केवलिना कथितम्—स उपशान्तो नमस्कारपरिणतो भद्रको मृत्वा चमरस्यासुरस्य महिषानीकाधिपतिर्लोहिताक्षदेवोऽजनि। मम च ज्ञानोत्पत्तिं ज्ञात्वा हृष्ट एष वन्दितुमागतः स्थितो वर्तते। राज्ञा पृष्टम्—कोऽत्र वैरानुबन्धः?। केवली जगौ—शृणुत, अत्र भरतेऽश्वग्रीवः प्रतिवासुदेवोऽभवत्। तस्य हरिश्मश्रुनामाऽमात्योऽजनि। परं स नास्तिकवादी। यतः—

१ दीन। २ अन्यायपूत्कारकरणस्तम्भम्। ३ जैनधर्मं बोधतीति जैनधर्मबुद्, तेन, जैनधर्मविदा इत्यर्थः।
४ एकविंशतितमतीर्थङ्करेण।

"मृद्वी शय्या प्रातरुत्थाय पेया
मक्त मध्ये पानकं चापराह्ने ।
द्राक्षाखण्डं शर्करां चार्धरात्रे
मोक्षश्चान्ते शाक्यपुत्रेण(सिंहेन ?) दृष्टः ॥ १ ॥"—शालिनी

नास्ति पुण्यपापपरलोकादिकमिति चक्रुषः कथयति धर्माभिमुखमश्वग्रीव प्रति । इत' 'पोतन पुर'स्वामिप्रजापतिपुत्रेण 'त्रिपृष्टकुमारेण हतोऽसौ सप्तमीं पृथ्वीं जगाम । हरिश्मश्रुरपि मृत्वा तत्रैव नारको जातः । ततोऽसौ नारकोऽश्वग्रीवनारकमवधिना ज्ञात्वा पूर्वं धर्मविरोधि त्वात् पीडयति स्म । ततः आयुःक्षयेऽसौ नास्तिकनारको मत्स्यो जातः । ततः षष्ठ्यां भुवि नारकः, तत उरगः, ततः पञ्चम्यवन्यां, तत' शार्दूल', ततश्चतुर्थ्यां गत', तत' कङ्कपक्षी, ततस्तृतीयावनौ नारकः, ततः सरीसृप', ततो द्वितीयावनौ नारक', तत संज्ञी पञ्चेन्द्रिय', ततो रत्नप्रभायां जातः, तत' पञ्चन्द्रियतिर्यग् जात , तत' चतुरिन्द्रियः, तत' त्रीन्द्रिय , तत' चतुरिन्द्रिय', तत त्रीन्द्रियः, ततः चतुरिन्द्रिय , ततो जीर्णमहिष्यां वत्सो जात', ततः छगलो जातः, ततः कामदेवश्रेष्ठिनो महिषो जात' । दण्डकेन गोपेन मारितो जातमात्रः । एव सप्तवारान् मारितः । अष्टमवार महिष उत्पन्नजातिस्मरणो जीवितामिलाषी दण्डकपादे पतित' । तत्रैक' साधुरागतो दण्डकेन पृष्ट'—भगवन् ! कन हेतुना जातमात्रः सैरिभ स्तन्यानमिलाषी मम पादे पतितोऽस्ति ? । ततोऽवधि ज्ञानिना यतिना प्रोक्तम्—हे दण्डक ! त्वया सप्त वारान् कौसरोऽस्य मारित', अधुना जाति स्मृतिर्जीवितं मार्गयति । साधुवचनात् ततस्त्वयाऽभयं दत्तम् इत्यादि प्रतीतम् । प्रान्ते प्रधानेन सम्बोधितः प्राप्तसम्यक्त्वः काल कृत्वा लोहिताक्षो यक्षो जातः । अथ सोऽश्वग्रीवो महा रम्भादिसक्तो हरिश्मश्रुमतेनाकृतधर्मो मृत' सप्तम्यवनौ नारक इत्यादि चतुर्संसारभ्रमण कृत्वा इह मृगध्वजकुमारः सञ्जात' प्रधानेन प्रतिबोधित इत्यत्र केवली जात' । इति वृत्तान्त श्रुत्वा समुत्पन्नवैराग्यो जितशत्रु राजा पुत्राय राज्यं दत्वा सपरिवारोऽमात्येन सह दीक्षां लाति स्म । लोहिताक्षेण कामदेवाय चतुर्द्रव्यं ददे । पुनरुक्त च—भुवनं कारयति । ततः कामदेवेन मृगध्वजस्य भगवत आयतनं कारितम् । मध्ये मुनिप्रतिमा त्रिपादमहिषमूर्धि सकललोकप्रति बोधाय विहिता । गता परिषत् स्वसदनम् । मृगध्वजकेवली मुक्तिं जगाम ॥

इति जीवबधे जैनप्रधानविवेकविराजितमृगध्वजकुमारमहिषकथानकं वसुदेवहिण्डि सप्तदशबन्धुमतीलम्भात् श्रीभावप्रभसूरिणोद्धृत समाप्तम् ॥

यद्यपि परदर्शनकविर्दयां वर्णयति, तथापि तस्य वाक्ये विरोधः परस्परं दृश्यत । तदाह नैषधे (स० १, श्लो० १३०, १३२ १३३ ), यथा—

---

१ महाभारतीयेषु । २ सर्पः । ३ प्रथमनरके । ४ महिषः । ५ महिषः ।

"धिगस्तु तृष्णातरलं भवन्मनः
समीक्ष्य पक्षान् मम हेमजन्मनः ।
तवार्णवस्येव तुषारशीकरै-
र्भवेदमीभिः[1] कमलोदयः[2] कियान्? ॥ १ ॥"–[3]वंशस्थविलम्

पदे पदे सन्ति भटा रणोद्भटा
न तेषु हिंसारस एष पूर्यते ॥
धिगीदृशं ते नृपते! कुविक्रमं
कृपाश्रये यः कृपणे पतत्रिणि ॥ २ ॥–वंशस्थ०

फलेन मूलेन च वारिभूरुहां
मुनेरिवेत्थं मम यस्य वृत्तयः ।
त्वयाऽद्य तस्मिन्नपि [4]देहधारिणा
कथं न पत्या धरणी हृ[5]णीयते? ॥ ३ ॥"–वंशस्थ०

अथात्रैव (स० २, श्लो० ९–१०) विरोधमाह—

"मृगया न वि[6]गीयते नृपै-
रपि धर्मागममर्मपारगैः ।
स्मरसुन्दर! मा यदत्यज-
स्तव धर्मः स[7]दयोदयोज्ज्वलः ॥ १ ॥–[8]वैतालीयम्

अवलम्बकुलाशिनो झ[9]षान्
निजनीडद्रुमपीडिनः खगान् ।
अनवद्यतृणार्दिनो मृगान्
मृगयाऽघाय न भूभृतां मताम् ॥ २ ॥"–वैता०

॥ इति तृतीयवृत्तार्थः सम्पूर्णः ॥ ३ ॥

* * * *

---

१ अमीभि. पक्षै, पक्षे तुषारशीकरै.। २ कमलाया–लक्ष्म्या उदय, पक्षे कमलस्य–जलस्य उदय ।

३ वंशस्थविल–लक्षणम्—

"वदन्ति वंशस्थविलं जतौ जरौ ।"

४ 'दण्डधारिणा' इति ख–पाठ.। ५ लज्यते । ६ अवगण्यते । ७ दयाया उदयेन–उत्पत्त्या उज्ज्वलः–शोभमान ।

८ वैतालीय–लक्षणम्—

"षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तरा ।
न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरु ॥ १ ॥"

अत्र सुन्दरीच्छन्द इत्यपि वक्तु शक्यते, यत –

"अयुजोर्यदि सौ जगो युजो. सभरा लगौ यदि सुन्दरी तदा ।"

९ मीनान् ।

अथ तयोर्मध्ये प्रथममभयदानमाश्रित्याह—

स्रग्धरा—

पारापतं धृतमते ! यत शान्तिनाथः
श्येनाद् ररक्ष गतजन्मनि ते तदीयाः ।
गण्या गुणा गुरुकृपोज्ज्वलिताः कथं स्यु-
र्मीयेत केन जलधेर्ननु रत्नराशिः ? ॥ ४ ॥

व्याख्या—पारापतमिति । धृता मतिर्येन स तस्य सम्बोधने हे धृतमते ! । यत कोमलामन्त्रणे । शान्तिनाथः—तीर्थकर्ता षोडशः गतजन्मनि—पूर्वभवे मेघरथनृपोपलक्षिते श्येनात्—सिञ्चाणकात् पारापतं—कपोतं ररक्ष—रक्षीचकार, स्वशरीरदानेनेति शेषः । तस्य शान्तिनाथस्य इमे तदीयाः ते—प्रसिद्धाः गुणाः कथं गण्याः—सङ्ख्येयाः स्युः ? अपि तु न स्युः । कथंभूताः ? गुरुकृपोज्ज्वलिताः—महत्कृपाकपिशितशोभेजिताः । अत्र दृष्टान्तमाह—ननु प्रश्नवादे केन—पुरुषेण जलधेः—समुद्रस्य रत्नराशिर्मीयेत—मानयुक्तः क्रियेत ? अपि तु न मीयेत ॥

अत्र श्रीशान्तिनाथस्य पूर्वदशमभवमेघरथनृपसम्बन्धो लिख्यते—

'जम्बू'द्वीपप्राग्विदेह'पुष्कलावती'विजये 'पुण्डरीकिण्यां' नगर्यां तीर्थङ्करघनरथाभिधस्य श्रीप्रीतिमत्या राज्ञ्यां कुक्षिशुक्तौ दशमभवे श्रीशान्तिनाथजीवो मौक्तिकमिव समुत्पन्नः । मातापितृभ्यां मेघरथ इति नाम दत्तम् । क्रमेण सकलकलाकोविदो यौवनं प्राप्तः परिणायितः, क्रमेण राजा जातः । कस्मिंश्चिद् दिने स पौषधं गृहीत्वा पौषधशालायां तस्थौ । समस्तभूपानां पुरः धर्मदेशनां विदधे । अत्रान्तरे मेघरथभूपतेः क्रोडे कम्पमानशरीरः पारापतः पक्षी गगनादकस्मात् पतितः, तवाहं शरणागत इति जल्पंस्तस्थौ । तं पक्षिणं भयभीतं दृष्ट्वा दयालुर्मेघरथः प्रोचे—मम समीपे तव भयं नास्ति । हे भद्र ! मा भैषीः[1] । तावत् पृष्ठि(ष्ठ)तः सिञ्चाणकपक्षी समागत्य राजानं बभाण—राजन् ! त्वदुत्सङ्गगतमेतं पारापतं मम क्षुधितस्य देहि । भूपो वक्ति—शरणागतो मया क्षत्रियेण न दीयते, परमांसैर्निजप्राणपोषणं तवाप्ययुक्तम्, यतो जीववधाज्जीवा नरकं गच्छन्ति । श्येनो जगाद—यथैव, तथा पारापतमिव मां त्वं रक्ष । अहं क्षुधातुरोऽस्मि ।

"विवेको ह्रीर्दया धर्मो, विद्या स्नेहश्च सौम्यता ।
सर्वं च जायते नैव, क्षुधार्तस्य शरीरिणः ॥ १ ॥"—अनु०

कृपाश्रिताः मिथ्यदर्शनमनाभसर्पो गङ्गदत्ताभिधानमेकस्य चित्रलेखा शारिका च एषां कथानकम् । यत—

---

१ वत्से ।

"आख्याहि भद्रे! प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम्।
बुभुक्षितः किं न करोति पापं?
क्षीणा नरा निष्करुणा भवन्ति॥ १॥"–उपजातिः

इति। स्वचिन्तितं कथयित्वा हे सारिके! त्वयाऽपि तस्य विश्वासो न कर्तव्य इत्याख्यानकेन। एवं राजन्! क्षुधार्तोऽहं कृत्याकृत्यं न वेद्मि, आहारं विना मम प्राणा व्रजन्ति। नृपेणोक्तम्–अन्यमाहारं ददामि। तेनोक्तम्–आमिषं विना मे न तृप्तिः। (नृपेणोक्तम्) सूनास्थानात् तदानाय्य दास्यामि। (पक्षिणोक्तम्) नैवं गृह्णामि; चेत् मम पश्यतः प्राणिनो मांसं छित्त्वा दीयते, तदा मे तृप्तिः। राज्ञोक्तम्–यत्प्रमाणोऽयं पक्षी तुलाधृतो भवेत्, तावन्मात्रं निजं मांसं यच्छामि, काऽत्र विचारणा?। निजमांसं छित्त्वा यथा यथा तुलायां चिक्षेप तथा तथा पारापतोऽधिकभारो बभूव। तदा तुलायां स्वयं नृप आरुरोह। हाहाकारो जातः। तत्सत्त्वं वीक्ष्य देवः प्रत्यक्षो जातः, धन्यस्त्वं महीपते! ईशानेन्द्रवचसाऽश्रद्दधानस्तव परीक्षार्थं समागतः पूर्वं मत्सरिणौ खगौ मयाऽधिष्ठितौ इति उक्त्वा गतः स्वस्थानं सुरः॥

इति कथानकं मेघरथनृपस्य समाप्तम्। इति चतुर्थवृत्तस्यार्थः सम्पूर्णः॥ ४॥

* * * *

सूत्रम्—

संरक्षितो गजभवे शशको हि येन
मेघाभिधेन मगधाधिपदेहजेन।
माहात्म्यमानमिह तस्य करोतु को वा
विस्तीर्णतां कथयति स्वधियाऽम्बुराशेः?॥ ५॥

व्याख्या—संरक्षित इति। हि–निश्चितं येन मेघाभिधेन–मेघकुमारेण अस्मात् तृतीयगजभवे शशकः संरक्षितः–दयापरिणामत्वेन पालितः। किंविशिष्टेन मेघाभिधेन? मगधाधिपदेहजेन–मगधदेशस्वामिश्रेणिकपुत्रेण। इह–लोके कः पुरुषः तस्य मेघकुमारस्य माहात्म्यमानं–महत्त्वसङ्ख्यां करोतु? अपि तु न कोऽपि। वा इति पक्षान्तरे। को नरः अम्बुराशेः–समुद्रस्य विस्तीर्णतां कथयति स्वधिया? अपि तु न कोऽपि। यदि कथयति, तदा सर्वज्ञवचसा। यतो

१ मांसम्।

द्विलक्षप्रमितो लवणोद इति परं स निजधिया ज्ञायते नेति । वा—अथवा को वि—गरुडादिः पक्षी स्वधिया अम्बुराशेः तीर्णतां—कथयति ? अपि तु न ॥

अत्र मेघकुमारकथालेशः —

'राजगृहे' श्रेणिकधारिण्योः पुत्रो मेघकुमारः सपरिवारः समवसरणं गतः । इन्द्रो महावीरं स्तौति । यतः—

"सद्धर्मबीजवपनानघकौशलस्य
यल्लोकबान्धव ! तवापि खिलान्यभूवन् ।
तन्नाद्भुतं खगकुलेष्विह तामसेषु
सूर्यांशवो मधुकरीचरणावदाताः ॥ १ ॥—वसन्ततिलका

धीरो भवस्तव कथं त्वमरेश्वरोऽसौ
वीरोऽयमित्यनवधाय चकार नाम ? ।
मृत्योर्न हन्तपथमेत्य बिभेति वीर
स्त्वं तस्य गोचरमपि व्यतिवाय लीनः ॥ २ ॥"—वसन्त०

इति । ततः श्रीवीरजिनदेशनया प्रतिबुद्धो मुक्तकलत्राष्टको गृहीतव्रतस्तस्यामेव रात्रौ बहिर्निर्गच्छद्भिरन्तः प्रविशद्भिश्च साधुभिस्तथा सङ्घट्टितोऽसौ (यथा) क्षणमपि निद्रां न प्राप । चारित्रे भग्नपरिणामः प्रभाते वीरसमीपं गतः । वीरेण प्रतिबोधितः, तथाहि—इतो भवात् हे मेघ ! त्वं 'वैताढ्य'गिरौ सुमेरुनामा गज आसीः । दावानलभीतस्तटाके प्रविष्टः पङ्के मग्नो वैरिगजेन कदर्थितो मृत्युं गतः । ततो 'विन्ध्याचले' गजो बभूव मेरुप्रभनामा । अन्यदा दावानलं दृष्ट्वा जातजातिस्मृतिस्तदा योजनमानं मण्डलमेकं त्वमकार्षीः । त्रिकृत्वः क्षुद्रं कृतं तृणद्रुमाणामपनयनेन । ग्रीष्मे दावानले लग्ने बहुजीवैस्तन्मण्डलं भृतम् । त्वमपि तत्रागत्यास्थाः, कर्णमूलकण्डूयनार्थं स्वकीयमेकं पादमुत्पाटयाञ्चकृषे । तत्रैकः शशकः समेत्य स्थितः । कृपया त्वं पादं तथैवमरथः । सार्धदिनद्वये गते दवः शान्तः । जीवाः स्वस्थानं गताः । त्वं गिरेः शृङ्गमिव भूमावपतः । दिनत्रयान्ते मृत्वा कृपाप्रसादतो मेघकुमारो जातः । तदा त्वं तिर्यग्भवे न दूनः, अधुना

---

१ अत्र आदिशब्दः प्रकारार्थः । यतः—

"सामीप्ये च व्यवस्थायां प्रकारेऽवयवे तथा ।
चतुर्ष्वर्थेषु मेधावी आदिशब्दं च लक्षयेत् ॥ १ ॥"

तद् यथा—ग्रामादौ घोषः समीपे इत्यर्थः १ । अवस्थायां ब्राह्मणादयः इति व्यवस्थितक्रमस्तावत् क्रमेण व्यवस्थिता इत्यर्थः २ । प्रकारे देवदत्तादयः, देवदत्ताः ३ । अवयवे स्तम्भादयो गृहम्, स्तम्भावयवा इत्यर्थः ४ ॥

२ आहारानि शेषाणि । ३ पृष्ठेषु ।

मुनिसङ्घट्टितः कथं दूनः ? इति भगवद्वचः श्रुत्वा स्थिरो दीक्षायां जातः । तदा मेघमुनिनाऽभिग्रहो गृहीतः–नेत्रद्वयशुश्रूषां मुक्त्वा स्वाङ्गशुश्रूषां न करिष्यामीति । प्रान्तेऽनशनं कृत्वा 'विजय'विमानं गतः । 'महाविदेहे' मोक्षमवाप्स्यतीति ॥

इति मेघकुमारकथा । इति पञ्चमवृत्तस्यार्थः सम्पूर्णः ॥ ५ ॥

* * * *

सूत्रम्—

मांसं समर्घमधुनेति वचो निशम्य
तस्याप्त्युपायमभयेन विधाय चोक्ताः ।
कुर्वन्ति तां न हि ययाऽहह राजलोका
जल्पन्ति वा निजगिरा ननु पक्षिणोऽपि ॥ ६ ॥

व्याख्या—मांसमिति । वा समुच्चये, ननु वितर्के निश्चये वा, अहह इति खेदे । अभयेन–श्रेणिकपुत्रेण राजलोकाः–क्षत्रिया उक्ता–निरुत्तरीकृताः । किं कृत्वा ? इति वचो निशम्य–श्रुत्वा । इतीति किं ? अधुना मांसं समर्घ–सुलभं–अल्पमूल्यं च–पुनः तस्य मांसस्य आप्तेः–प्राप्तेः उपायं–उद्यमं विधाय–कृत्वा । कथं प्रोक्ताः तदाह–[अहह इति खेदे] भवन्तो राजलोका यया गिरा–वाण्या जल्पन्ति तां गिरं न हि कुर्वन्ति । कथंभूताः राजलोकाः ? पक्षिणः अपि–पक्षयुक्ता अपि । पक्षः साध्यः पक्षग्रहो वा ॥

"पक्षस्तु, मासार्धे ग्रहसाध्ययोः ।
चुल्लीरन्ध्रे वि(ब)ले पार्श्वे, सख्यौ (वर्गे) केशात्परश्चये ।
पिच्छे विरोधे देहाङ्गे, सहाये राजकुञ्जरे ॥"

इति हैमानेकार्थः ( श्लो० ५६८–५६९ ) । पक्षः अस्ति येषां ते पक्षिणः, पक्षवचनयुक्ताः । यतः प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनानि इति पक्षवचनम् । प्रतिज्ञा–पर्वतोऽयं वह्निमान् १ । धूमवत्त्वात् २ । यो यो धूमवान् स स वह्निमान् यथा महानस इति ३ । यथा धूमवांश्चाय-मिति तथा चायमिति वा ४ । पक्षे साध्योपसंहारो निगमनं यथा–तस्मादग्निमानिति तस्मात् तथेति वा ५ । इति पञ्चावयवं वाक्यं प्रसिद्धम् । यथा सत्तार्किकाः पञ्चावयववाक्यसाधनेऽलीका न भवन्ति अपि–पुनः भवन्तः क्षत्रियाः पक्षिणोऽपि मांसं समर्घमित्यङ्गीकृतवचना अपि कूटभा-षिणो भवन्ति । अर्थद्वारेण स्पष्टयति–'राजगृहे' सभास्थितेन श्रेणिकनृपेणोक्तम्–सम्प्रति नगर-मध्ये किं वस्तु सुलभमस्ति ? । तत्र क्षत्रियाः प्रोचुः–मांसं समर्घमस्ति । अभयकुमारेण चि-न्तितम्–एते निर्दयाः, एतेषां परीक्षां करिष्यामि । ततो रात्रौ सर्वक्षत्रियगृहे पृथक् पृथग् गत्वा

द्विलक्षप्रमितो लवणोद इति परं स निजधिया ज्ञायते नेति। वा–अथवा को विः–गरुडादिः पक्षी स्वधिया अम्बुराशेः तीर्णतां–कथयति? अपि तु न॥

अत्र मेघकुमारकथालेशः—

‘राजगृहे’ श्रेणिकधारिण्योः पुत्रो मेघकुमारः सपरिवारः समवसरणं गतः। इन्द्रो महावीरं स्तौति। यतः—

“सद्धर्मबीजवपनानघकौशलस्य
यल्लोकबान्धव! तवापि [2]खिलान्यभूवन्।
तन्नाद्भुतं खगकुलेष्विह तामसेषु
सूर्यांशवो मधुकरीचरणावदाताः॥ १ ॥–वसन्ततिलका
भीरोः सतस्तव कथं स्मरवैरिणोऽसौ
वीरोऽयमित्यनवधाय चकार नाम?।
मृत्योर्न हस्तपथमेत्य बिभेति वीर-
स्त्वं तस्य गोचरमपि व्यतियाय लीनः॥ २ ॥”–वसन्त०

इति। ततः श्रीवीरजिनदेशनया प्रतिबुद्धो मुक्तकलत्राष्टको गृहीतप्रव्रज्यस्तामेव रात्रौ बहिर्निर्गच्छद्भिरन्तः प्रविशद्भिश्च साधुभिस्तथा संघट्टितोऽसौ (यथा) क्षणमपि निद्रां न प्राप। चारित्रे भग्नपरिणामः प्रभाते वीरसमीपं गतः। वीरेण प्रतिबोधितः, तथाहि–इतो भवात् हे मेघ! त्वं ‘वैताढ्य’गिरौ सुमेरुनामा गज आसीः। दावानलभीतस्तटाके प्रविष्टः पङ्के मग्नो वैरिगजेन कदर्थितो मृत्युं गतः। ततो ‘विन्ध्याचले’ गजो बभूव मेरुप्रभनामा। अन्यदा दावानलं दृष्ट्वा जातजातिस्मृतिस्तदा योजनमानं मण्डलमेकं त्वमकार्षीः। त्रिकृत्वः क्षुद्रं तृणद्रुमाद्यपनयनेन। ग्रीष्मे दावानले लग्ने बहुजीवैस्तन्मण्डलं भृतम्। त्वमपि तत्रागत्यास्थाः, कर्णमूलकण्डूयनार्थं स्वकीयमेकपादमुत्पाटयाञ्चकृषे। तत्रैकः शशकः समेत्य स्थितः। कृपया त्वं पादं तथैवमरक्षः। सार्धदिनद्वये गते दवः शान्तः। जीवाः स्वस्थानं गताः। त्वं गिरेः शृङ्गमिव भूमावपतः। दिनत्रयान्ते मृत्वा कृपाप्रसादतो मेघकुमारो जातः। तदा त्वं तिर्यग्भवे न दूनः, अधुना

---

१ अत्र आदिशब्दः प्रकारार्थः। यतः—

“सामीप्ये च व्यवस्थायां प्रकारेऽवयवे तथा।
चतुर्ष्वर्थेषु मेधावी आदिशब्दं तु लक्षयेत्॥ १॥”

तद् यथा–ग्रामादौ घोषः समीपे इत्यर्थः १। ब्राह्मणादयो वर्णाः इति व्यवस्थितक्रमेण, व्यवस्थायाम् इत्यर्थः २। प्रकारे देवदत्तादयः, देवदत्तसदृशाः ३। स्तम्भादयो गृहाः स्तम्भावयवा इत्यर्थः ४।

२ अकृष्टानि क्षेत्राणि। ३ घूकेषु।

"सव्वेसिंपि जिआणं, अणारियजणेण हणिज्जमाणाणं ।
जहसत्तीए वारण-मभयं तं विंति मुणिपवरा ॥ १ ॥
पंचमहव्वयपरिपा-लयाणं पंचसमितिसमिताणं ।
सव्वविरतिजुत्ताणं, साहूणं दाणमुत्तमयं ॥ २ ॥
मंदाण य छुंटाण य, दीणअणाहाणमंधवधिराणं ।
अणुकंपादाणं पुण, जिणेहिं न कयावि पडिसिद्धम् ॥ ३ ॥
उचियं दाणं एयं, वेलमवेलाय दारपत्ताणम् ।
तं दाणं दिंताणं जिण-वयणपभावगा भणिया ॥ ४ ॥
जिणसाहुसाहुणीण य, सुकित्तिपरयाण भट्टवड्डुआणं ।
जं दाणं तं भणियं, सुकित्तिदाणं मुणिवरेहिं ॥ ५ ॥

दशविधमपि दानं, तद्गाथा—

"दय १ संगह २ भय ३ कारुणिय ४ लज्ज ५ गारव ६ अधम्म ७ धम्मे य ८ ।
काहीय ९ कयसासणं १० ति दाणमेवं भवे दसहा ॥ १ ॥'

अस्या गाथाया अर्थगाथाः—

"रोगाइउवहयाणं १ सहायगाणं च २ दुज्जणादीणं ३
पुत्ताइविओगेण ४ तह लज्जाए वहुजणस्स ५ ॥ २ ॥
जह सेतुनडादीणं ६ हिंसगमादीणं ७ साधुमादीणं ८
एस करिस्सति किंचिवि मंति बुद्धीइ जं तस्स ९ ॥ ३ ॥

---

१ छाया—

सर्वेषामपि जीवानामनार्यजनेन हन्यमानानाम् ।
यथाशक्त्या वारणमभयं तद् ब्रुवन्ति मुनिप्रवराः ॥ १ ॥
पञ्चमहाव्रतपरिपालकेभ्यः पञ्चसमितिसमितेभ्यः ।
सर्वविरतियुक्तेभ्यः साधुभ्यो दानमुत्तमकम् ॥ २ ॥
मन्देभ्यश्च छिन्नहस्तेभ्यश्च दीनेभ्योऽनाथेभ्योऽन्धवधिरेभ्यः ।
अनुकम्पादानं पुनः जिनैः न कदापि प्रतिषिद्धम् ॥ ३ ॥
उचितं दानमेतद् वेलायामवेलायां द्वारप्राप्तेभ्यः ।
तद् दानं ददाना जिनवचनप्रभावका भणिताः ॥ ४ ॥
जिनसाधुसाध्वीनां च सुकीर्तिपरेभ्यो भट्टवटुकेभ्यः ।
यद् दानं तद् भणितं सुकीर्तिदानं मुनिवरैः ॥ ५ ॥

२ छाया—

दया १ संग्रह २ भय ३ कारुणिक ४ लज्जा ५ गौरवा ६ ऽधर्म ७ धर्मेषु च ८ ।
करिष्यति ९ कृतशासनमिति १० दानमेव भवेद् दशधा ॥ १ ॥

३ छाया—

रोगाद्युपहतेभ्यः १ सहायकेभ्यश्च २ दुर्जनादिभ्यः ३ ।
पुत्रादिवियोगेन ४ तथा लज्जया बहुजनस्य ५ ॥ २ ॥
यथा सेतुनटादिभ्यो ६ हिंसकादिभ्यः ७ साध्वादिभ्यः ८ ।
एष करिष्यति किञ्चिदपि ममेति बुद्ध्या यत् तस्मै ९ ॥ ३ ॥

अभय एवमकथयत्—भो क्षत्रियाः ! शृणुत । राजपुत्रशरीरे महाव्याधिरुत्पन्नोऽस्ति, वैद्यैरुक्तम्—यदि मनुष्यसत्ककालेयमांसटङ्कद्वयं दीयते, तदा स जीवति, नान्यथा । ततो यूयं तदीयग्रासवृत्तिं विना एतावदपि न करिष्यथ ? । तत एकेनोक्तम्—दीनारसहस्रं गृहाण, परं मां मुञ्च, अन्यत्र गच्छ । अभयेन गृहीतम् । एवं सकलां रात्रिं परिभ्रम्य तैर्दत्ता मिलिता दीनारलक्षाः । प्रभाते धनराशीकृतं दर्शितं क्षत्रियाणाम्—भो यूयमेवमकथयत गतदिवसे—यन्मांसं सुलभं, तदद्य एतावता द्रव्येणापि टङ्कद्वयप्रमाणं मांसं मया न प्राप्तम् । ततो लज्जिता अभयेन हर्षिता मांसभक्षणनियमं ग्राहिता इति युक्तिः सम्पूर्णा । षष्ठवृत्तसार्थः सम्पूर्णः ॥ ६ ॥



अथानुकम्पादिकदानमाहित्याह—

वृत्तम्—

सद्दृष्टिपूर्वककृतार्हतियुग्ममस्तु
हे भव्य ! भव्यतरमन्यदपि प्रधानम् ।
जन्तून् करोति सुखिनस्तपतापतप्तान्
प्रीणाति पद्मसरस सरसोऽनिलोऽपि ॥ ७ ॥

अत्र स्पष्टीकृत्याहन्वयेन संक्षेपतस्तावदनुकम्पादिदानं सुपात्रदानात् प्रथमं कथयति—व्याख्या—हे भव्य ! सद्दृष्टिपूर्वककृतार्हतियुग्मं अस्तु—दूरे तिष्ठतु । सम्यक्त्वपूर्वककृत अर्हत्याः अभयसुपात्रदानयोर्युग्मम् । "अपवर्जनमंहतिः" इति हैम (अभि० का० ३०, श्लो० ५१) । कथंभूतं सद्दृष्टि० ? भव्यतरं—अतीव शुभं, मोक्षप्रदायकत्वात् । हे भव्य ! अन्यदपि—अनुकम्पादिदानमपि जन्तून् सुखिनः—देवादिसुखयुक्तान् करोति । कथंभूतमन्यद् दानम् ? प्रधानं संसारसुखापेक्षया । यतः पद्मानन्दकाव्ये त्रयोदशे सर्गे—

"कञ्चनापि सुतपःप्रकान्तं, भोगसम्भोगकैर्भरा ।
सन्तर्पयन्ति सर्पन्ति, स्वर्गभोगास्तमपि ध्रुवम् ॥ १ ॥"

दृष्टान्तेन दृढयति । पद्मसरसोऽनिलो—वायुरपि तपतापतप्तान्—ग्रीष्मकालस्य तापेन तप्तान्—पीडितान्, विशेषणबलाद् विशेष्यं प्रतीयते, पान्थजनान् प्रीणाति—प्रीतिमुत्पादयति । कथंभूतो वायुः ? सरसः—सजलः । यतो मानससरोजलं सेवितं सत् तृट्तापमलपरिश्रमादिसर्वं स्फेटयति, तथा पूर्वदानद्वयं सकलसंसारदुःखापहारि इति । अन्यत् तु भोगाय भवति । अत्र गाथाः—

---

१ मनुष्यकालेयमांसटङ्कद्वयम् । २ पूर्वमागतम् ।

"सव्वेसिंपि जिआणं, अणारियजणेण हणिज्जमाणाणं ।
जहसत्तीए वारण–मभयं तं विंति मुणिपवरा ॥ १ ॥
पंचमहव्वयपरिपा–लयाणं पंचसमितिसमिताणं ।
सव्वविरतिजुत्ताणं, साहूणं दाणमुत्तमयं ॥ २ ॥
मंदाण य टुंटाण य, दीणअणाहाणमंधवधिराणं ।
अणुकंपादाणं पुण, जिणेहिं न कयावि पडिसिद्धम् ॥ ३ ॥
उचियं दाणं एयं, वेलमवेलाय दारपत्ताणम् ।
तं दाणं दिंताणं जिण–वयणपभावगा भणिया ॥ ४ ॥
जिणसाहुसाहुणीण य, सुकित्तिपरयाण भट्टवट्टुआणं ।
जं दाणं तं भणियं, सुकित्तिदाणं मुणिवरेहिं ॥ ५ ॥

दशविधमपि दानं, तद्गाथा—

"दंय १ संगह २ भय ३ कारुणिय ४ लज्ज ५ गारव ६ अधम्म ७ धम्मे य ८ ।
काहीय ९ कयसासणं १० ति दाणमेवं भवे दसहा ॥ १ ॥'

अस्या गाथाया अर्थगाथाः—

"रोगाइउवहयाणं १ सहायगाणं च २ दुज्जणादीणं ३
पुत्ताइविओगेण ४ तह लज्जाए वहुजणस्स ५ ॥ २ ॥
जह सेतुनडादीणं ६ हिंसगमादीणं ७ साधुमादीणं ८
एस करिस्सति किंचिवि मंति वुद्धीइ जं तस्स ९ ॥ ३ ॥

---

१ छाया—

सर्वेषामपि जीवानामनार्यजनेन हन्यमानानाम् ।
यथाशक्त्या वारणमभयं तद् ब्रुवन्ति मुनिप्रवरा ॥ १ ॥
पञ्चमहाव्रतपरिपालकेभ्य पञ्चसमितिसमितेभ्य ।
सर्वविरतियुक्तेभ्य साधुभ्यो दानमुत्तमकम् ॥ २ ॥
मन्देभ्यश्च छिन्नहस्तेभ्यश्च दीनेभ्योऽनाथेभ्योऽन्धवधिरेभ्यः ।
अनुकम्पादान पुनः जिनै न कदापि प्रतिषिद्धम् ॥ ३ ॥
उचितं दानमेतद् वेलायामवेलाया द्वारप्राप्तेभ्य ।
तद् दानं ददाना जिनवचनप्रभावका भणिता. ॥ ४ ॥
जिनसाधुसाध्वीना च सुकीर्तिपरेभ्यो भट्टवटुकेभ्य. ।
यद् दानं तद् भणितं सुकीर्तिदान मुनिवरैः ॥ ५ ॥

२ छाया—

दया १ संग्रह २ भय ३ कारुणिक ४ लज्जा ५ गौरवा ६ ऽधर्मं ७ धर्मेषु च ८ ।
करिष्यति ९ कृतशासनमिति १० दानमेवं भवेद् दशधा ॥ १ ॥

३ छाया—

रोगाद्युपहतेभ्य १ सहायकेभ्यश्च २ दुर्जनादिभ्य ३ ।
पुत्रादिवियोगेन ४ तथा लज्जया बहुजनस्य ५ ॥ २ ॥
यथा सेतुनटादिभ्यो ६ हिंसकादिभ्य. ७ साध्वादिभ्यः ८ ।
एष करिष्यति किञ्चिदपि ममेति बुद्ध्या यत् तस्मै ९ ॥ ३ ॥

अभय एवमकथयत्—भो क्षत्रियाः! शृणुत। राजपुत्रशरीरे महाव्याधिरुत्पन्नोऽस्ति, वैद्यैरुक्तम्—यदि मनुष्यस्यैककालेयमांसटङ्कद्वयं दीयते, तदा स जीवति, नान्यथा। ततो यूयं सर्वोपप्राप्तश्री विना एतावदपि न करिष्यथ? । तत एकेनोक्तम्—दीनारसहस्रं गृहाण, परं मां मुञ्च, अन्यत्र गच्छ। अभयेन गृहीतम्। एवं सकलां रात्रिं परिभ्रम्य तैर्द्रव्या मिलिता दीनारलक्षाः। प्रभाते तद्धनराशीकृत्य दर्शितं क्षत्रियाणाम्—भो यूयमेवमकथयत गतदिवसे—यन्मांसं सुलभ, तदथ एतावता द्रव्येणापि टङ्कद्वयप्रमाणं मांसं मया न प्राप्तम्। ततो लज्जिता अभयेन हक्किता मांसभक्षणनियमं ग्राहिता इति युक्तिः सम्पूर्णा। षष्ठवृत्तार्थः सम्पूर्णः ॥ ६ ॥

* * * *

अथानुकम्पादिकदानमाश्रित्याह—

वृत्तम्—

सद्दृष्टिपूर्वककृतांहतियुग्ममस्तु
हे भव्य! भव्यतरमन्यदपि प्रधानम्।
जन्तून् करोति सुखिनस्तपतापतप्तान्
प्रीणाति पद्मसरस सरसोऽनिलोऽपि ॥ ७ ॥

अत्र स्वीकृत्यप्रत्यायेन संक्षेपत्वादनुकम्पादिदानं सुपात्रदानात् प्रथमं कथयति—व्याख्या—हे भव्य! सद्दृष्टिपूर्वककृतांहतियुग्मं अस्तु—दूरे तिष्ठतु। सम्यक्त्वपूर्वककृतं अंहत्याः अभयसुपात्र दानयोर्युग्मम्। "अपवर्जनमंहतिः" इति हैमः (अभि० का० ३०, श्लो० ५१)। कथंभूतं सद्दृष्टि०? भव्यतरं—अतीव शुभं, मोक्षप्रदायकत्वात्। हे भव्य! अन्यदपि—अनुकम्पादिदान मपि जन्तून् सुखिन'—देवादिसुखयुक्तान् करोति। कथंभूतमन्यद् दानम्? प्रधानं संसारसुखा-पेक्षया। यतः पद्मानन्दकाव्ये त्रयोदशे सर्गे—

"कञ्चनापि क्षुत्तृड्राक्रान्तं, प्राप्तप्रमोदकैर्मुदा।
यस्तर्पयति सर्पन्ति, स्वर्भोगास्तमपि ध्रुवम् ॥ १ ॥"

दृष्टान्तेन दृढयति। पद्मसरसोऽनिलो—वायुरपि तपतापतप्तान्—ग्रीष्मकालस्य तापेन तप्तान्—पीडितान्, विशेषणशक्त्या विशेष्य' प्रतीयते, पान्थजनान् प्रीणाति—प्रीतिमुत्पादयति। कथंभूतो वायुः? सरस'—सजलः। यतो मानससरोजलं सेवितं सत् सुदृढतापमलपरिभ्रमादिसर्वं स्फेटयति, तथा पूर्वदानद्वयं सकलसंसारदुरापहारि इति। अन्यत् तु भोगाय भवति। अत्र गाथा'—

---

१ मनुष्यस्यएकमांसटङ्कद्वयम्। २ पुरुषागतम्।

तैर्धान्यैः प्रौढकोष्ठका भृताः। देशप्रदेशेषु सर्वत्र धान्यसञ्चयान् कारयित्वा एते रङ्कनिमित्ता इति ताम्रपत्राणि लिखित्वा सर्वत्र धान्येषु क्षिप्तानि। ततः कियति काले गते विकराले दुष्काले पतिते खादतपिवता[1] क्रिया नष्टा, भर्त्रा स्त्री मुक्ता, स्त्रिया भर्ता मुक्तः, शिशवोऽपि विक्रीता इत्यादि। सर्वत्र सीदनकालो जातः। तदा जगडूकेन सर्वत्र दानशाला मण्डापिताः। प्रचुराणि सस्यानि दीयमानानि[2] रङ्केभ्यः। भूपैर्धान्यार्थं जगडूको याचितः–सुवर्णमाणिक्यादिकं गृहाण, परं सीत्यं[3] समर्पय। तेनोक्तम्—रङ्कसात्कृतं सर्वं युष्माभिरपि तदादीयताम्, तैर्बुभुक्षावशतस्तथैव कृतम्। यतः—

"अँट्ठ य मूढ(ड) सहस्स दिद्ध वीसल वडवीरह
वार मूढि(ड) सहस्स दिद्ध सिंधूया रायहमीरह।
गज्जणवइ सुलताण दिद्ध मूढि(ड) सहस्स एकवीसह
मालवप्रति अढार प्रतापसीहराय सहस्स बत्तीसह।
शत्रुंजय रइवयगिरि दानशाला बारोत्तरी(रइ?)
जगडूया साहा सोहलातणा पुण्यप्रसिद्ध रापी (तेर) पन्नरोत्तरइ ॥ १ ॥"[4][5]

---

१ खादत पिवत इति यस्यां क्रियायां सा खादतपिवता, तिङन्तस्य तिङन्तेन सह समासः।

२ 'दीयमानानि दीयमानानि' इति क-पाठः। ३ धान्यम्।

४ तात्पर्यम्—

अष्ट च मूटकसहस्राणि दत्तानि वीसलाय वडूवीराय
द्वादश मूटकसहस्राणि दत्तानि सैन्धवीयराजहम्मीराय।
गर्जनपतये सुरत्राणाय दत्तानि मूटकसहस्राणि एकविंशतिः
मालवपतये अष्टादश प्रतापसिंहाय राज्ञे सहस्राणि द्वात्रिंशत्।
शत्रुञ्जयरैवतगिर्योर्दानशाला द्वादशोत्तर (शतम्)
जगडूना साधुना सोहलतनयेन पुण्यप्रसिद्धी रक्षिता (त्रयोदशे) पञ्चदशोत्तरे ॥ १ ॥

५ सन्तुल्यतां श्रीसर्वानन्दसूरिरचितस्य जगडूचरितमहाकाव्यस्य षष्ठसर्गस्य निम्नावतारितपद्यैः—

"जगौ वीसलदेवाय, जगडूरिति पर्षदि।
तन्मे पापं म्रियन्ते, चेज्जना दुर्भिक्षपीडिताः ॥ ८९ ॥
ददावष्ट सहस्राणि, स तस्मै कणमूटकान्।
श्रीमालान्वयकोटीर–त्विषा वीरत्वमाश्रितः ॥ ९० ॥
स द्वादश सहस्राणि, प्रददौ कणमूटकान्।
हम्मीरनामधेयाय, सिन्धुदेशमहीभुजे ॥ १२५ ॥
स ददौ गर्जनेशाय, मोजदीनाय सत्वरम्।
सद्धान्यमूटकानां च, सहस्राण्येकविंशतिम् ॥ १२६ ॥
अष्टादश सहस्राणि, स ददौ कणमूटकान्।
भूपायावन्तिनाथाय, तदा मदनवर्मणे ॥ १२७ ॥
राज्ञे प्रतापसिंहाय, काशीनाथाय सोलभू।
द्वात्रिंशतं सहस्राणि, प्रददौ कणमूटकान् ॥ १२८ ॥
द्वादशाभ्यधिक दान—शालाशतमुदारधीः
जगडूः सुकृताधारो, जगज्जीवातुरातनोत् ॥ १२९ ॥"

पेडुसो अयोण कयं बहु पसुवयाराय तेण सह तस्स ।
जं दिसंति तं कमसो दयाइदाण दसविहंपि १० ॥ ४ ॥

इति ।

अत्रानुकम्पादिदाने जगडूसाहप्रबन्धः, यथा—

'काम्पां' नगर्यां सोलशाखुतः श्रुद्धशाखायां श्री'श्रीमाल'ज्ञातीयः जगडूः १ पद्मल २ राय मल्लश्च ३ एते त्रयो भ्रातरः सन्ति आजीविकादुर्लभाः । जगडूः पद्मलरायमल्लाभ्यां सार्धं 'कच्छ'देशे 'भद्रेश्वर'नगर्यां मातृगाढमातुलसमीपमाययौ ।

તેત્ર જગડૂ પોશાલઈ જાતા, વખાણ સાંભલતા, પોસા પડિકમણાં કરતા, સંતોષ ધરતા, પોષ કરતા એ રીતેં સુખેં દિન નિગમતા.

एकदा प्रतिक्रमणं कृत्वा नमस्कारगुणनं करोति जगडूः । ततः आचार्यं आकाशे रोहिणीशकटभेदं विलोक्य शिष्यं ब्रवीति—द्वादशवर्षमितो दुष्कालो भविष्यति । औषधपुटीवन्मणवद् धान्यविक्रयो भविष्यति । गावो मर्कोटकान् भक्षयिष्यन्ति । (तत्) श्रुत्वा जगडूकेन चिन्तितम्—अस्माकं साम्प्रतमप्यवमोदरिका जायते, अग्रे किं भविता ? । गुरवे पृष्टम्—को दाता भविता ? । गुरुणोक्तम्—त्वमेव । कथम् ? तदा गुरुराह—शृणु । 'सोपारक'पत्तने द्वासप्ततिगजमितदीर्घा द्वापञ्चाशद्गजपृथुला शिलाऽस्ति साऽऽनेतव्या । ततो जगडूः कस्यचित् पोतस्वामिनः कार्यकारको भूत्वा तत्र गत्वा वणिग्भिः अहमहमिकयाऽस्यामुपरि तिष्ठामि दन्तधावनार्थम् । होडे वा कोडे वा इति कलहेनाक्रम्यमाणां शिलां दृष्ट्वा तद्भूपाय द्वादशसहस्रटङ्कान् दत्त्वा सा शिला यानपात्रेण 'भद्रेश्वर'मानीतवान् । पिशुनैः स्वामिनः कर्णौ पूरितौ । यतो युष्मद्द्रव्येण पाषाणः क्रीतोऽस्ति । श्रेष्ठिना प्रोक्तम्—एतैः किं कथ्यते ? जगडूकेनोक्तम्—युष्मद्वचोऽद्य यावद् रक्षितम् । ततः प्रसन्नेन श्रेष्ठिना प्रोक्तम्—मर्ष्यं कृत, त्वमेव शिलां गृहाण । सा शिला स्वगृहे नीता जगडूकेन गुरवे दर्शिता । सिन्दूरतैलेन मर्दनं कारापितम् । कम्पालिका निर्गता । बहुमूल्यरत्नभृता सा दृष्टा । तैः रत्नैर्धान्यराशयः क्रीताः ।

यतः—

वस्त्रं पादपरित्राणं, बहुक्षीराश्च धेनवः ।
औषधं भीममाहारो, यथा लभ्यं तथा क्रम ॥ १ ॥"—अनु०

---

१ छाया—

बहुशोऽनेन कृतं बहु प्रत्युपकाराय तेन तथा तस्मै ।
यद् दीयते तद् क्रमशो दयादिदानं दशविधमपि ॥ ४ ॥

२ तात्पर्यम्—तत्र जगडूः पौषधशालां गच्छति व्याख्यानं शृणोति, पौषधप्रतिक्रमणे करोति सन्तोषं धरति नियमं करोति एवं रीत्या सुखेन दिनानि निर्गमयति ।

३ ऊनोदरीभवम् ।

इति ॥

साधवः साधर्मिकादयः सर्वेऽपि पोषिता जगडूकेन। ततः सर्वतः सुकालो जातः। गृहपृष्ठवाटके श्वेतार्कं दृष्ट्वा सेवकैः प्रोक्तम्—इतोऽधस्ताद् धनं गृह्यते। किं धनेन? । माऽभूदस्य विनाशः। वर्षाकाले जलेन समूलमुन्मूलितार्कात् प्रकटितं धनं सप्तक्षेत्रीसात् कृतं जगडूकेन। पुनरेकदा पोतचौरेण [1]सिक्थमय्य इष्टिका आनीता राभसेन क्रीताः। स्वभार्यया तु उपालब्धः, जैनानामेष व्यापारो निषिद्ध इति लोकापवादः। तेन दम्पत्योः परस्परं [3]मुखानवलोकनं जातम्। शीतकाले हसन्त्यां ता मदनेष्टिकाः क्षिप्ता उपरिष्टाज्ज्वलितमदनाः स्वर्णमय्यो जाताः, गुरवे दर्शिताः, धर्ममार्गे व्ययीकारापिताः। इत्येवं जगडूकेन चतुर्विधसङ्घेन सह 'शत्रुञ्जया'दितीर्थानां यात्रा कृता, 'भद्रेश्वरे' चैत्यानि कारितानि। धर्मार्थं हट्टो मण्डितः, जैनागमानि लिखापितानि इत्यादीनि बहूनि धर्मकार्याणि चक्रिरे। इति जगडूकप्रबन्धः समाप्तः ॥

कीर्त्तिदाने यथा 'श्रीशत्रुञ्जय'सङ्घपतितिलकं बिभ्रत् समराह्वयो वणिजां वरः 'सिद्धाचल'-मागच्छति तदा चारणकेन प्रोक्तम्। यतः—

"[2]સાહ તું સમરો સાહ, બીજા સર્વે સાહૂલીયા।
નદી તો ગંગાપ્રવાહ, બીજા સર્વે વાહૂલીયા ॥ ૧ ॥"

तस्मायश्वं ददौ इति सङ्क्षेपतः।

अथ पुनः श्रीवस्तुपालः ससङ्घः श्री'शत्रुञ्जये' देवान् नत्वा अग्रतश्चलन् 'देवक'पत्तने ययौ। अत्रान्तरे सङ्घमध्ये सोमेश्वरपण्डितेन काव्यमुक्तं वस्तुपालं प्रति। यतः—

"लक्ष्मि! प्रेयसि! केयमास्यशितिता [4]वैकुण्ठ! कुण्ठोऽसि [5]नो
नो जानासि पितुर्विनाशमसमं सङ्घोत्थितैः पांशुभिः।
माऽभैर्भीरु! गभीर एष [6]भविताम्भोधिश्चिरं नन्दतात्
सङ्घेशो ललितापतिर्जिनपतिस्नात्राम्बुकुल्यां सृजन् ॥ १ ॥"—शार्दूल०

ततो वस्तुपालेन तस्य लक्षद्रव्यं दत्तम् ॥

पुनरेकदा'ऽर्बुदा'चले गतो विमलवसतिं वस्तुपालस्तत्र चारणेनोक्तम्। यतः—

---

१ मदनमय्य।

२ तात्पर्यम्—

साधुस्तु समरः साधुः अन्ये सर्वे साधुका (लघुसाधवः)।
नदी तु गङ्गाप्रवाहः अन्ये सर्वे वाहकाः ॥

३ मुखस्य श्यामता। ४ हे कृष्ण! ५ अस्माकम्। ६ भविष्यति।

तदा जगडूकेन राज्ञां( य? )साधार इति बिरुदं लब्धम्। तदाप्रभृति महाजनेऽपि राजांसाधारबिरुदवान् कथ्यते। चतुरशीतिशातिषु जगडूरूपकाणि भट्टादिभिः सर्वत्र पठ्यन्ते। एवं जगडूर्जगदुद्धारको जातः॥

एकदा दुष्टो दुष्कालाभिधो व्यन्तरो जगडूसमीपं छलनाय समेतः। स च कीदृग्? मलिनवेषो बर्बरकेशः शूर्पकर्णः कृष्णवर्णो बीभत्सरूपः पतितनेत्रकूपो बुभुक्षया शुष्कलयोदरः सर्वेषां भयङ्करः प्राह जगडूकम्—भो भो जगडू! द्वादश वर्षाणि जातानि क्षुधातुरोऽहम्। तेनोक्तम्—भक्ष यथेष्टम्। दुष्कालेनोक्तम्—यदा धातोऽस्मि तदा त्वहं जितः, अन्यथा मया त्वं जित इति पणबन्धः सोऽञ्जलिनाऽप्यङ्गीकृतः। ततः स दुष्कालः प्रेतो रक्तमण्डपाच्छादनकं सकरेखोत्तार्य भोज्यभाजनं समेव कृत्वा निविष्टः प्रोवाच—अशितव्यानि क्षिपता(व्यन्ता?)मिति। ततो 'भद्रेश्वरे' चतुःसहस्रमितमहाजनगृहाणि सन्ति, सकलमहाजना आकारिताः। प्रोक्तो जगडूकेन पणबन्धः स। अहो भो भो भ्रातरः! अथ कीदृशा भवन्तु यथा महाजनवचनं जयमिव धरति तथा कर्तव्यम्। ततः सर्वेऽपि महाजनाः केचन ताम्रकटाहैः केचन कम्बोलकैः केचन पृथुलकपाटफलकैः केचन भङ्गसोलकैः पक्वापक्वान्नानि लात्वा तत्र क्षिपन्ति। प्रेतोऽपि सर्वमाजहार। क्षणमपि न तृप्यति स। स वदति स्म—भो जगडूः! घोप्पटकं देहि—यदा घृततैलक्षुपाः प्रवाहिताः। यामं यावत् महाजनैः एहिरेयाहिरा क्रिया कृता। यामोर्ध्वं स भक्षयन् किञ्चिदुद्धरितभक्षं दृष्ट्वा धर्षितोऽधुनासाविति विचार्य तैः समकालं सलीकृतोयं, दुर्धरा धाणि जानां हाकहीकहकोठाः। ततो दग्धोऽहं दग्धोऽहं वदन् पलायमानो जगडूकेन गाढं करेण धृतः। रे जगत्संहारकारक! अधुना क्व यासि? कारागारे क्षिपाम्यहं त्वाम्। स जगे—मां मुञ्च, अद्य प्रभृत्यहं मनुष्यलोकं नागमिष्यामि। दक्षिणहस्तार्पणं कृत्वा मुक्तः स्वस्थानं गतः। यतः—

"[1]સ્વર્ગેથકી સંચર્યો, દેશ પુહતો દુકાલહ
નિતુ નયર ઉપરકઇ વિહારૈં તુ, વારહ પુહતી ભીમાલહ.
અને કર્યો(કી) આકલો, ધારતો ધીની વાડું
કઇ તો કેડુ ગ(ઠા)મ, કઇ તો જીવતો સાડું
હું પાપી પડ્યો તું સાહજી મિલ્યો, બોલબંધ આઢો કર્યો
એહલિ જગડૂયા સાહા સોહલ્લાતણા જે નાવું કાલ બાર(તેર)પનરોત્તરો."

१ तात्पर्यम्—

स्वर्गात् सञ्चरितो देशं प्राप्तो दुष्कालः
नित्यं नगरान्नुद्वासयति तदा तु व्याहरितः प्राप्तः श्रीमालकम्।
अतोऽन करिष्याम्याकुलो धारयन् घृतस्य वाटिकाः ( यद्वा धारास्तु घृतस्य पाययामि )
किंवा तु खेटयामि ग्रामं किंवा तु जीवन्तं गृह्णामि।
अहं पापी पतितस्त्वं साधुर्मिलितो वचनबन्धो गाढ कृतः
मुञ्च जगडूक! आर्यो! लोहलग्नकः! यत् नागमिष्यामि कालः त्रयोदश पञ्चदशोत्तरः।

अत्र सम्बन्धलेशः—

'चम्पा'यां दधिवाहनधारिण्योः सुता चन्दनबाला। इतश्च 'कौशाम्बी'पतिशतानीकभूपेन 'चम्पा' भग्ना। केनचित् पदातिना चन्दना गृहीता 'कौशाम्बीं' नीता विक्रीता। धनवाहेन श्रेष्ठिना क्रीता, पुत्रीस्थाने स्थापिता। एकदा श्रेष्ठिनः पादप्रक्षालनावसरे चन्दनायाः केशपाशं भूमौ पतितं दृष्ट्वा श्रेष्ठिना तदादाय स्वाङ्के स्थापितम्। तं वीक्ष्य मूला तत्पत्नी क्रुद्धा। एषा वर्धमाना मम सपत्नी भविष्यतीति विचिन्त्य श्रेष्ठिनि हट्टं गते सति तत्केशपाशमपनीय मुण्डितां जञ्जीरितां विधाय शून्यगृहे स्थापयित्वा स्वत एव मरिष्यतीति ध्यात्वा स्वयं पितृगृहं गत्वा तत्रैव स्थिता। दिनत्रयं जातम्। तद्भीत्या[1] न कोऽपि श्रेष्ठिनः पुरतो वक्ति। यतः—

"[2]કંત મ ઘડાવ કુહાડીઉ, હું તાહરઇ કુહાડિ,
દાંતે લાકડ ફાડતી, જીભેં કરતી વાડી. ૧
કંતડો બિચ્ચારો સ્યું કરઇ, જુ ઘરી હુઇ કુનારિ,
ઉસીં વઇદા આગલાં, ઉઝરડઇ હાથ બિચ્ચાર (?) ૨"

एकया जातकरुणया श्रेष्ठिने कथितम्। तेन समुद्घाट्य तालकं (सा) निष्कासिता। (तस्यै) सूर्पकोणके कुल्माषान् दत्त्वा निगडभञ्जनार्थं लोहकारानयनार्थं गतः श्रेष्ठी। म्लानमुखी चन्दना चिन्तयति–अहो कर्मणां गतिरीदृशी। यदि कोऽप्यतिथिः समेति, तदा तस्मै दत्त्वा पारणं करवाणि। यावत् तस्थौ तावत् महावीर आजगाम। तं च विलोक्य जातानन्दा समुत्थाय प्रोचे—स्वामिन्! भिक्षां गृहाण। भगवता चिन्तितम्–अभिग्रहपूर्तिर्जाता, परं नेत्रयोः (नेत्राभ्यां?) अश्रवो न पतन्ति। देहलीमध्ये पादौ स्तः। न एको बहिरेकोऽन्तः। अतो भगवान् न गृह्णाति। पृष्ठतो बलात् तया दुःखेनाश्रुपातो विहितः। उत्तालतया एकः पादो देहल्याः बहिरेकोऽन्तराजातः। भगवता पारणं कृतं पञ्चदिनोने षण्मासे। पञ्च दिव्यानि जज्ञिरे। वेणीदण्डः पुनर्नवीनो जातः। निगडे नूपुरे जाते सर्वत्र यशो विस्तृतम्। यतः—

"पृथ्वीनाथसुता भुजिष्य[3]चरिता जञ्जीरिता मुण्डिता
क्षुत्क्षामा रुदती विधाय पदयोरन्तर्गता देहलीम्।
कुल्माषान् प्रहरद्वयव्यपगमे सूर्पस्य कोणे स्थितान्
दद्यात् पारणकं तदा भगवतः सोऽयं महाभिग्रहः ॥ १ ॥"–शार्दूल०

---

१ विचार्यताम्—

"माक्षिका वृश्चिके भग्नाः, क्षये भग्ना भिषग्वराः।
पण्डिता मूर्खके भग्नाः, स्त्रीषु भग्न जगत्त्रयम् ॥ १ ॥

२ तात्पर्यम्—कान्त! मा घटय कुठार अहं तव कुठारिका, दन्तैः काष्ठानि पाटयन्ती जिह्वया कुर्वाणा वृतिम्। कान्तकः वराक किं कुर्यात् यद्गृहे भवति कुनारी······ ··।

३ "दास प्रेष्यः परिस्कन्दो भुजिष्यपरिकर्मिणौ" इति हैमः (अभि० का० ३, श्लो० २४)।

"भासइ तुं महिवीध नासइ तुं के। जेहवो,
मुं विचि तुं विचि जोध कुं ऊडेरो भपभला ॥ १ ॥"

इति श्रुत्वा बहु धनं ददौ ॥

॥ इति सप्तमपद्यस्यार्थः सम्पूर्णः ॥ ७ ॥

* * * *

अथ सुपात्रदानमाह—

सूत्रम्—

वीराय विश्वगुरवेऽकृत चन्दना या
कुल्मापदानमनु जातसुखाऽथ तस्याः ।[1]
मूर्धाऽऽप वेणिरुचिरः श्रियमस्य मौलि
मभ्यागते घनशिखण्डिनि चन्दनस्य ॥ ८ ॥

व्याख्या—वीरायेति । या चन्दना राजपुत्री दासेन विक्रीता धनवाहेन क्रीता मूलया मुण्डिता देहल्यन्तरस्थिता वीराय–चरमजिनाय कुल्मापदान–प्रासुकमापदान अकृत–चकार । कथंभूताय वीराय ? विश्वगुरवे–त्रिभुवनजनधर्मदेशकाय त्रिभुवनत्राताय वा । कथंभूता चन्दना ? अनु–पश्चात् दानानन्तरं जातसुखा–सर्वाङ्गीणसमुत्पन्नसुखा, सुवक्षा सालङ्कारा गतदुःखा जाता । अथान्वादेशे । यत्तदोर्नित्यसम्बन्धात् तस्याः चन्दनायाः मूर्धा–मस्तक चन्दनस्य–वृक्षस्य श्रियं शोभां आप–प्राप । कस्मिन् सति ? घनशिखण्डिनि–घनमयूरे अस्य–चन्दनस्य मौलिं–मस्तकं अभ्यागते–आश्रिते सति, शिखाग्रस्थितमयूरस्य चन्दनवृक्षस्य शोभां जहार इत्यर्थः । इयं चन्दना । अयं चन्दन । वृक्षश्च्छलोऽपि । कथंभूतो मूर्धा ? वेणिरुचिरः–तत्कालनवीनजातप्रवेणीशोभमानः । "पिच्छं बर्ह शिखण्डकम्" इत्यत्र शिखण्डिसार्थकनामा । कविसमये केशपाशस्य बर्हिन उपमा । यदुक्तं माघे—

"दृष्टै(ष्टे?)व निर्जितकलापभरामधस्ताद्
व्याकीर्णमाल्यकबरीं कबरीं तरुण्याः ।
प्रोद्ग्रुवत् सपदि चैन्द्रकवान् द्रुमाग्राद्
संह(घो?)र्षिणा सह गुणाभ्यधिकैर्दुरासम् ॥ ? ॥"–वसन्ततिलका

इति सर्गपञ्चमे ( श्लो० १९ ) ॥

---

१ तात्पर्यम्—

राजसे त्व महीबोधे नाशयसि एवं कीदृशः ? ।
जातयोर्मध्ये यथा भवे सुन्दर आपसत ? ।

१ वशान्वितः । २ मयूरः । ३ मत्सरिणा ।

गोभद्रो दीक्षां लात्वा देवो जज्ञे। अवधिना ज्ञातभवत्रयसम्बन्धिपुत्रत्वेन स्नेहेन भोगसामग्री पूरिता। क्रमेण शालिभद्रो धन्यकश्च दीक्षां गृहीत्वा 'वैभार'गिरौ अनशनमादाय 'सर्वार्थसिद्धं' गतौ 'महाविदेहे' मुक्तिं गमिष्यतः। इति सम्बन्धः संक्षेपतः। इत्येवं सुपात्रदानतो बहवः सम्बन्धा वाच्याः। सुपात्रदानफलम्। यतः—

"किमप्यतिथिदानस्य, माहात्म्यं सुमहत्तमम्।
यत्रान्नमात्रतः स्वर्गा—पवर्गसुखसङ्गमः ॥ १ ॥"—अनु०

इति पद्मानन्दे। अतिथिलक्षणमाह—

"[1]तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन महात्मना।
अतिथिं तं विजानीयात्, शेषमभ्यागतं विदुः ॥ १ ॥"—अनु०

॥ इति नवमवृत्तस्यार्थः सम्पूर्णः ॥ ९ ॥

* * * *

सूत्रम्—

दानं ददौ सुमुनये क्षुधितोऽपि योऽतो
निःस्वोऽपि भूपतिरभूदिह मूलदेवः।
यत् कीचकः श्रयति सार्थकतां नितान्त-
मन्तर्गतस्य मरुतः स किलानुभावः ॥ १० ॥

व्याख्या—यः क्षुधितोऽपि सुमुनये दानं ददौ इह—लोके अतः—दानपुण्यात् स मूलदेवः निःस्वोऽपि—निर्धनोऽपि भूपतिः अभूत्—बभूव। दृष्टान्तमाह—यत् कारणात् कीचकः नितान्तं—अतिशयेन सार्थकतां—यथार्थतास्वाभिधेयतां श्रयति। "स्वनन् वातात् स कीचकः" इति हैम-(अभि० का० ४, श्लो० २१९) वचनाद् वायुना सच्छिद्रो वंशः शब्दं करोति स कीचक उच्यते। किलेति सत्ये। सः अनुभावः—प्रभावः अन्तर्गतस्य मरुतः—वातस्य वर्तते इति ॥

अत्र सम्बन्धः—

कश्चित् मूलदेवाभिधो राजपुत्रः द्यूतव्यसनित्वात् स्थानभ्रष्टः पर्यटन् कस्याञ्चित् नगर्यां गतः। परं मूलदेवः सकलकलापात्रम्। तेन तत्र तद्गुणरञ्जितवेश्या तत्सङ्गं न त्यजति। परस्परं भृशं प्रीतिर्जाता। ततो निर्द्धनत्वात् तत्कुट्टिन्याऽचलवणिजा सह कृतोपायेन निष्कासितो मूलदेवोऽटवीमुल्लङ्घ्य कस्मिंश्चिद् ग्रामे भिक्षावृत्त्या कुल्माषान् गृहीत्वा यावद् ग्रामद्वारमागच्छत् तावत्

१ अयं श्लोको योगशास्त्रस्वोपज्ञवृत्ति(प० ५४)-धर्मसङ्ग्रह(प० ९)-श्राद्धप्रतिक्रमणसूत्रवृत्ति(प० १७४)-श्राद्धगुणविवरण(प० ४५)प्रमुखग्रन्थेषु दृश्यते।

वीरस्य केवलोत्पत्तौ चन्दनाया दीक्षा, मृगावतीक्षामणावसरे केवलं क्रमेण (सा) मुक्तिं गतेति सम्पूर्णः प्रबन्धः ॥

अष्टमवृत्तस्य सम्पूर्णोऽर्थः ॥ ८ ॥

* * * *

मूलम्—

दारिद्र(द्र्य)दोषतिमिरैर्नियमेन मुक्ताः
सत्पात्रदानसुदिनोदयसङ्गमाद्याः ।
पृष्ठानुगामिकटके निकटे सटङ्के
चौरैरिवाशु पशवः प्रपलायमानैः ॥ ९ ॥

व्याख्या—सत्पात्रदानेन–साधवे दत्तदानेन सुदिनस्य–सुकृतदिवसस्य उदयो येषां ते एवंविधाश्च ते सङ्गमाद्याश्चेति 'कर्मधारयः' । शालिभद्रपूर्वभवसङ्गमगोपालकप्रमुखयो जीवा दारिद्र(द्र्य)दोषतिमिरैर्नियमेन मुक्ताः–त्यक्ताः । कैरिव ? चौरैरिव । यथा चौरैराशु–क्षीप्रं पशवः–गवादयो मुक्ताः । कस्मिन् सति ? पृष्ठानुगामिकटके–पृष्ठे शीघ्रगतिगामिनि सैन्ये निकटे–समीपे सति । कथंभूते कटके ? सटङ्के–सकोपे । कथंभूतैः चौरैः ? प्रपलायमानैः–काकनाशं नष्टैः ।

"टङ्को नीलकपित्थेऽसि–कोशे कोपेऽश्मदारणे ।
मानान्तरे खनित्रे च, जङ्घायां टङ्कयेऽपि च ॥ १ ॥"–अनु०

इति हैमानेकार्थः (श्लो० २४) ॥

अत्र सम्बन्धो लेशतः—

'छम्मासि'नामग्रामे गोपालनामा एको गोकुलिकः । तस्य स्त्री रमणकी । तयोः पुत्रः मरुकनामा । सिंहेन मारितो गोपालको मृत्वा 'राजगृहे' गोधननामा गोपो जातः । तस्य भार्या नर्मदा । तस्याः कुक्षौ पूर्वभवसम्बन्धी पुत्रो जातः । तस्य सङ्गमक इति नाम । इति जनकसुतयोर्द्वितीयो भवः ॥

गोधनोऽनेकलोकानां महिष्यश्चारयति । एकदा स सन्ध्यायां पश्चाद् वलमानः 'स्वर्णवालुका' नदीतीरे एकं मुनीश्वरं ददर्श । गृहे समागतस्यापि तस्यैव हृदि ध्यानं स्थितम् । अतिप्रभातेऽग्निस्फुलमादाय तटिनीतटे समागतः । सं शीतार्तं दृष्ट्वा अत्यन्तकरुणार्द्रचित्तः शुष्ककाष्ठसञ्चयेनाग्निं प्रज्वाल्य साधोः शीतं व्यपोहयत् । साधुः प्रतिमाप्रतिपन्नः कायोत्सर्गं नापारयत् । साधुवैयावृत्त्यपुण्यानुमोदनात् प्राप्तोच्चगोत्रः एकदा सिंहेन मारितः । मुनेर्ध्यानवशात् मृत्वा 'राजगृहे' गोभद्रनामा श्रेष्ठी बभूव । सङ्गमस्तु कियति काले सुसाधवे सबहुमानं पायसदानं दत्त्वा मृत्वा गोभद्रभद्रयोः पुत्रः शालिभद्रनामा जातः । इति जनकपुत्रयोस्तृतीयभवः ।

भूत्वा 'राजगृहे' श्रेणिकधारिणीपुत्रो नन्दीषेणनामा जज्ञे । क्रमेण दीक्षितो वीरान्तिके । दशपूर्वधारी कन्दर्पाभिभूतो निकाचितभोगकर्मत्वाद् वेश्यागृहे द्वादश वर्षाणि स्थितः । प्रतिदिनं दश दश नरान् प्रतिबोधयन् वीरान्ते दीक्षां ग्राहयन् कालं गमयति स्म । द्वादशवर्षान्ते पुनर्दीक्षां गृहीत्वा मुक्तिमगमत्, महानिशीथवचनात् । अन्यत्र देवो दृश्यते । इति पात्रापात्रदानफलम् ।

॥ इति एकादशवृत्तार्थः ॥ ११ ॥

❋ ❋ ❋ ❋

अथ पात्रदानप्रसङ्गात् सप्तक्षेत्रीमाह—तत्र प्रथमं जिनबिम्बं चाश्रित्याह—

वृत्तम्—

तीर्थङ्कराः सकलदोषविमुक्तदेहाः
स्नेहान्मिथो गलितसिंहगजादिवैराः ।
सत्पूजिता विदधतीह हितं न किं किं
चिन्त्यो न हन्त महतां यदि वा प्रभावः ॥ १२ ॥

व्याख्या—इह-लोके तीर्थङ्कराः सत्-निरन्तरं पूजिताः अथवा सम्यक् प्रकारेण पूजिताः सन्तः किं किं हितं-वाञ्छितं न विदधति ? अपि तु सर्वं वाञ्छितं कुर्वन्त्येव, भक्तानामिति शेषः । कथंभूताः तीर्थङ्कराः ? 'सकलेति' सकलैः-समस्तैः दोषैः-अन्तरायादिभिः दोषैर्विमुक्तं देहं येषां ते । पुनः कथंभूताः तीर्थङ्कराः ? स्नेहात् मिथः-परस्परं गलितं-नष्टं सिंहगजादीनां वैरं येभ्यस्ते । यदि वा हन्तेति निश्चयेन । महतां-गरिष्ठानां प्रभावः अचिन्त्यः-अचिन्तनीयः । यतः

"मैत्रीं प्रमोदां करुणामुदासतां
प्रभुस्तथाऽपुण्यदिमां सभां यथा ।
द्वेषो विषादोऽकृपता स्वकान्यता
तेषां द्विषो मीनमिया प्रपेदिरे ॥ १ ॥"-इन्द्रवंशा

(इति) पद्मानन्दे ।

"सारङ्गी सिंहशावं स्पृशति सुतधिया नन्दिनी व्याघ्रपोतं
मार्जारी हंसबालं प्रणयपरवशात् केकिकान्ता भुजङ्गम् ।
वैराण्याजन्मजातान्यपि गलितमदा जन्तवोऽन्ये त्यजन्ति
श्रित्वा साम्यैकरूढं प्रशमितकलुषं योगिनं क्षीणमोहम् ॥ १ ॥"-स्रग्धरा

१ 'सत् पूजिता' इत्यपि पदच्छेद. समीचीन ।
जैन० स्तो० ७

सन्मुखमागच्छते मासक्षपणकाय साधवे क्षुधितोऽपि ददौ । अतो दानप्रभावात् सम्पूर्णचन्द्रसम घृषितो 'बेनातटे' राजा बभूव । कश्चिज्जटिल एतत्समक्षुधितोऽपि निष्पुण्यत्वात् घृतगुडमिश्रं मण्डकमेव लभते स, नान्यत् ॥

॥ इति दशमपद्यसार्थ सम्पूर्णः ॥ १० ॥

* * * *

पद्यम्—

जैनेन यन्नरकहेतुरपात्रमुक्तं
मुक्तं मुधा तदपरेण कथं श्रितं ही? ।
मद्यादि यत् परिहृतं सुधियाऽथ यज्ञे
पीतं न किं तदपि दुर्धरवाडवेन? ॥ ११ ॥

व्याख्या—जैनेन—जैनगीतार्थेन यत् अपात्रं—कुपात्रं नरकहेतुः उक्तम्, अत एव मुक्तं—त्यक्तम्। ही इति खेदे । अपरेण अन्यतीर्थिना नरेण तत् अपात्रं मुधा—निरर्थकम्, कथं संभावनायाम्, श्रितं—आश्रितम् । अत्र दृष्टान्तमाह—सुधिया—पण्डितजनेन यत् मद्यादि—मदिरादिकं परिहृतं—त्यक्तम्, अथान्यादेशे, दुर्धरवाडवेन—उद्धतविप्रेण यज्ञे तदपि मद्यादिकं न पीतम्? अपि तु पीतम् । तन्मया विप्रा वदन्ति—

"अश्वं हत्वा सुरां पीत्वा, कृत्वा च पलभक्षणम् ।
हस्तिना ताड्यमानोऽपि, न गच्छेज्जिनमन्दिरे ॥ १ ॥"

अत्र जैन आह—

"अश्वं हत्वा सुरां पीत्वा, कृत्वा च पलभक्षणम् ।
ब्राह्मणोऽपि गजोद्भ्रान्तो, न प्रवेश्यो जिनालये ॥ १ ॥"

इति । मूढविप्रा अर्थं न जानन्ति, यत' जिनस्य—कृष्णस्य मन्दिरे न गच्छेत्, कृष्णमूर्तेरा- श्वासनत्वात् । अतोऽर्हच्चैत्ये तु सर्वथा प्रवेशमयोग्य ईदृक् । जिष्णुनामासिषु "मार्वजिनौ हुमौ दकः" इति हैमः ( अभि० का० २, श्लो० १३० ) ।

अत्रापात्रदाने दृष्टान्त'—

सुखप्रियनाम्ना विप्रेण दासीसुतभीमनामा पुत्रो रक्षणार्थं रक्षितः । भीमेन प्रोक्तम्—सर्वेषु विप्रेषु मुक्तेषु सत्सु यत् शेषं भक्तादिकं उद्धरितं तत् सर्वं मदीयम् । तेनोक्तम्—एवमस्तु । नित्यशो सुखप्रियेण सहस्रसंख्या विप्रा' पोषिता' । अथ भीमेन सेनानादिकेन जैनसाधवः पोषिता' । ततो मृत्वा सुखप्रियः भवभ्रमणं कृत्वा सेचनकनामा गजो जात' । भीमस्तु सुरो

भूत्वा 'राजगृहे' श्रेणिकधारिणीपुत्रो नन्दीषेणनामा जज्ञे । क्रमेण दीक्षितो वीरान्तिके । दशपूर्वधारी कन्दर्पाभिभूतो निकाचितभोगकर्मत्वात् वेश्यागृहे द्वादश वर्षाणि स्थितः । प्रतिदिनं दश दश नरान् प्रतिबोधयन् वीरान्ते दीक्षां ग्राहयन् कालं गमयति स्म । द्वादशवर्षान्ते पुनर्दीक्षां गृहीत्वा मुक्तिमगमत्, महानिशीथवचनात् । अन्यत्र देवो दृश्यते । इति पात्रापात्रदानफलम् ।

॥ इति एकादशवृत्तार्थः ॥ ११ ॥

* * * *

अथ पात्रदानप्रसङ्गात् सप्तक्षेत्रीमाह—तत्र प्रथमं जिनबिम्बं चाश्रित्याह—

सूत्रम्—

तीर्थङ्कराः सकलदोषविमुक्तदेहाः
स्नेहान्मिथो गलितसिंहगजादिवैराः ।
सत्पूजिता विदधतीह हितं न किं किं
चिन्त्यो न हन्त महतां यदि वा प्रभावः ॥ १२ ॥

व्याख्या—इह-लोके तीर्थङ्कराः सत्-निरन्तरं पूजिताः अथवा सम्यक् प्रकारेण पूजिताः सन्तः किं किं हितं-वाञ्छितं न विदधति? अपि तु सर्वं वाञ्छितं कुर्वन्त्येव, भक्तानामिति शेषः । कथंभूताः तीर्थङ्कराः? 'सकलेति' सकलैः-समस्तैः दोषैः-अन्तरायादिभिः दोषैर्विमुक्तं देहं येषां ते । पुनः कथंभूताः तीर्थङ्कराः? स्नेहात् मिथः-परस्परं गलितं-नष्टं सिंहगजादीनां वैरं येभ्यस्ते । यदि वा हन्तेति निश्चयेन । महतां-गरिष्ठानां प्रभावः अचिन्त्यः-अचिन्तनीयः । यतः

"मैत्रीं प्रमोदां करुणामुदासतां
प्रभुस्तथाऽपुष्यदिमां सभा यथा ।
द्वेषो विषादोऽकृपता स्वकान्यता
तेषां द्विपो मीनमिया प्रपेदिरे ॥ १ ॥"—इन्द्रवंशा

(इति) पद्मानन्दे ।

"सारङ्गी सिंहशावं स्पृशति सुतधिया नन्दिनी व्याघ्रपोतं
मार्जारी हंसबालं प्रणयपरिवशात् केकिकान्ता भुजङ्गम् ।
वैराण्याजन्मजातान्यपि गलितमदा जन्तवोऽन्ये त्यजन्ति
श्रित्वा साम्यैकरूढं प्रशमितकलुषं योगिनं क्षीणमोहम् ॥ १ ॥"—स्रग्धरा

१ 'सत् पूजिता' इत्यपि पदच्छेदः समीचीनः ।
जैन० स्तो० ७

छद्मस्थावस्थायामपि, यतः—

"अभिक्षभोक्ता भूक्षभोक्तुना च
 शुना च सार्धेऽतिथिसंविभागे ।
एकत्र काकभटकेन साकं
 माकण्ठमाहारमिहाजहार ॥ १ ॥"—उपजातिः

(इति) पद्मानन्दे ।

"किं स्वर्गेण सदा क्षुधाभ्रमपस्तुतो यत्रार्थलाभस्पृहा
 किं वा भोगिपुरेण यत्र सततं वाताशनैः स्थीयते ? ।
किं वा मुक्तिपुरा न यत्र वृषभस्वामी समाराध्यते
 मर्त्यैस्त्व भवरम्यसं भवतु नः सर्वैस्त्वदेवीरितम् ॥ १ ॥"—शार्दूल०

इति पद्मानन्दकाव्यैकादशे सर्गे ।

तीर्थङ्करा[1] किं किं हितं न विदधति इति तदुपरि दृष्टान्तमाह—भगवान् मुनिसुव्रतो जिनः केवलज्ञानेन भव्यान् प्रतिबोधयन् निशि 'प्रतिष्ठान'नाम्नि पुरेऽन्यदा समवासार्षीत् । तदा 'भृगुकच्छे' पुरे प्रभाते पूर्वभवमित्रमश्वं हन्यमानं ज्ञात्वा तस्यां निशायामचाचलत् । अन्तराले 'सिद्धि' पुरे रात्रिमध्यं क्षणं प्रभुर्विशश्राम । ततो रात्रिचारेण षष्टिं योजनान्यतिलङ्घ्य च 'भृगुकच्छे' 'कोरट'नाम्नि वने प्रभाते देवकृतसमवसरणं प्रभुरलञ्चकार । तत्र तुरङ्गमारूढो जितशत्रुनृप आगतः । प्रभुं नत्वा देशनां शुश्राव । तदनन्तरं जिनमपृच्छत्—अत्र समवसरणे हे भगवन् ! के के जीवास्त्वत्कथितं धर्मं प्रापुः ? । प्रभुणोक्तम्—एकस्त्वदश्वः, परं नापरे । राज्ञाऽऽज्ञ—तत् किम् ? जिनेनोक्तम्—शृणु । तथाहि—

'चम्पा'यां सुरश्रेष्ठनामाऽहं धराधवोऽभूवम् । तत्र पोटकजीवो मतिसागरनामा मन्त्रिवरो बभूव । परं स च मायी मिथ्यात्वी कालान्तरे मृत्वा भवं भ्रान्त्वा 'पद्मिनीखण्ड'पत्तने सागरदत्ताख्यो वणिग् मिथ्यात्वी बभूव । तत्र जिनधर्मनाम्ना श्रावकेण सार्धं गाढं प्रीतिस्तस्य जाता । एकदा श्रावकेणायं मुनिपार्श्वे नीयते स । मुनिना प्रोक्तम्—

"मृण्मयं हैमनं रत्न—मयं वा बिम्बमार्हतम् ।
यः कारयेत् कुकर्माणि, स भनाति भवान्तरे ॥ १ ॥"—अनु०

इति श्रुत्वा सागरदत्तेन जैनं सौवर्णं बिम्बं कारापितं, साधुभिः प्रतिष्ठितम् । पूर्वं मिथ्यात्वित्वात् नगरमध्ये शिवायतनं कृतमस्ति । तत्र शिवायतने पूजकैर्घृतकुम्भेभ्य आकृष्यमाणेभ्यः भूम्यां पतमाना उपदेहिका आलोक्य स वस्त्रेणापानयत् । स विलोक्य भूपो ते ताः मर्दयन्ति स्म । रे ! त्वं

1 पाठं—प्रथमं जगत्त्रितयं—जगुस्तीर्थं—यावाधनाः ।

श्वेतपटैः पाषण्डिभिः प्रतारितोऽसि इति वदन्ति स्म । तदा निर्दया एते इति तेन सागरदत्तेन त्यक्ताः । अनाप्तसम्यक्त्वात् मृत्वा स चायं तव जात्यश्वोऽजायत । प्राग्जन्मकारितजिनप्रतिमायाः प्रभावात् पुनरेष मम संयोगं धर्मसंयोगं च प्रापत् । इति श्रुत्वा जातजातिस्मृतिः ततोऽश्वः स्वामिनः पार्श्वेऽनशनं कृत्वा 'सहस्रारे' सुरो जातः । अवधिना प्राग्जन्म विज्ञाय सोऽश्वदेवोऽत्रागत्य स्वर्णप्राकारस्थां मुनिसुव्रतप्रतिमां विदधाति स्म । अश्वावबोधाख्यं 'भृगुकच्छ'पुरमभूत् तदा अत्र सवैयो—

[1]जंगमतिरथ तुरंगमसंगमरंगमहानिधिकारन जानी
भाषे प्रयोजन योजनसाठि निशाये(स)में आये जो निरम( र्म ? )लज्ञानी
अच्छ मही भृगुकच्छ सुलच्छन पावन कीनी सुधाकिर वानी
ताके नमो मुनिसुव्रतके पद संपदकारन तारन प्रानी ॥ १ ॥

॥ इति कथालेशः सम्पूर्णः ॥

अथ पुनरत्र शुद्धदेवलक्षणशुद्धगुरुशुद्धधर्मदृढरागोपरि दृष्टान्तः—

पूर्वं 'मवन्त्यां' नगर्यां शास्त्रप्रिय इति नाम्ना विप्रो धनाढ्यो वसति । तस्य प्रिया गुणवती वर्तते । परं स च कीदृशः ? समस्तवेदपारगामी, शब्दशास्त्रनिपुणमतिः, तत्कालकाव्यकरणात्यन्तरतिः, घटसरस्वतीवत् संस्कृतजल्पनशक्तिः, छन्दोऽलङ्कारादिसकलशास्त्रदृढधृतिः, मिथ्यात्ववासितमतिरस्ति । तत्प्रियाऽपि शब्दशास्त्रादिसंस्कृतजल्पनादौ विदुषी वर्तते । एकदा शास्त्रप्रियः काञ्चिद् रमणीं गच्छन्तीं दृष्ट्वा प्राह—

"वक्त्रं पूर्णशशी सुधाऽधरलता दन्ता मणिश्रेणयः
कान्तिः श्रीर्गमनं गजः परिमलस्ते पारिजातद्रुमाः ।
वाणी कामदुघा कटाक्षलहरी सा कालकूटच्छटा
तत् किं चन्द्रमुखि ! त्वदर्थममरैरामन्थि दुग्धोदधिः ? ॥ १ ॥"—शार्दूल०

"जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णो
दूरे शोभा वपुषि निहिता पङ्कशङ्कां तनोति ।
विश्वप्रार्थ्यः सकलसुरभिद्रव्यदर्पापहारी
नो जानीमः परिमलगुणः कस्तु कस्तूरिकायाः ॥ २ ॥"—मन्दाक्रान्ता

---

१ तात्पर्यम्—

जङ्गमतीर्थं तुरङ्गमसङ्गमरङ्गमहानिधिकारणं ज्ञात्वा
भाषते प्रयोजन योजनषष्टिं निशासमय आगतो यो निर्मलज्ञानी ।
अच्छा मही भृगुकच्छस्य सुलक्षणेन पवित्रीकृता सुधाकीर्वाण्या
तस्य नमत मुनिसुव्रतस्य पादौ सम्पदकारण तारण प्राणिन. ॥

तस्मिन्नेवावसरे बहुशिष्यसंयुतैः समस्तसङ्घक्रियमाणमहोत्सवैस्तन्मार्गमागच्छद्भिः सकलशास्त्रनिपुणैः क्षमाधराह्वयसूरिभिस्तत्पद्यमाकर्ण्य धिग् मिथ्यामतिं स्वामिति विचिन्त्य प्रोक्तम्—

"मज्जा काचन भूरिरन्ध्रविगलत्सन्मलक्लेदिनी
सा संस्कारशतैः क्षणार्धमधुरां चाद्याम्रुपैति द्युतिम् ।
अन्यस्तस्वरसोर्मिपीतसमयोऽप्येतां तु कान्ताधियाऽऽ
श्लिष्यन्ति स्तुवते नमन्ति च पुरः कस्मान्न पूत्कुर्महे ? ॥ १ ॥"—शार्दूल०

इति श्रुत्वा विप्रेणोक्तम्—यतिवराः ! सुष्ठूक्तं, परं भवतां कोऽपि धर्मो न ज्ञायते । यतः—

"नो वापी नैव कूपो न च वरसरसी नैव गङ्गा न तीर्थं
नो ब्रह्मा नापि विष्णुर्न च दिवसपतिर्नैव शम्भुर्न दुर्गा ।
विप्रेभ्यो नैव दानं न च जपनविधिर्नैव होमो हुताशे
रे रे पाषण्डमुण्डाः ! कथयत भवतां कीदृशो धर्मलाभः ? ॥ १ ॥"—स्रग्०

तदा सूरिणा प्रोक्तम्—

"सार्वीयोक्तो न धर्मो निखिलजनहितो नैव देवो जिनेन्द्रो
रागद्वेषैर्विमुक्तो न च [सु]चरणधराः साधवो निःस्पृहास्ते ।
शुद्धं दानं न शीलं न च विरतिलवो नार्यभिः (?)प्रोक्तवेदा
रे रे पाषण्डविप्राः ! कथयत भवतां कीदृशः स्वस्तिधर्मः ? ॥१॥"—स्रग्०

किं स्नानेनापि नीरे सततनिशिचराः कर्मचण्डालमुख्या
लोभोद्रेकाः कुमार्गैर्नरकपुरमहासार्थवाहा जनानाम् ।
निःशीलाः सत्यहीनाः स्मरभरविधुरा ब्रह्मविज्ञानमुक्ता
रे रे पाषण्डविप्राः ! कथयत भवतां कीदृशः स्वस्तिधर्मः ॥ २ ॥—स्रग्०

परं सूरिभिरुक्तम्—अनया शुष्कवादतया किम् ? भो भट्ट ! देवस्य परीक्षा कर्तव्या । यतः (लोक०)—

"नेत्रैर्निरीक्ष्य बिलकण्टककीटसर्पान्
सम्यग् यथा व्रजति तत् परिहृत्य सर्वान् ।
कुज्ञानकुश्रुतिकुमार्गकुदृष्टिदोषान्
सम्यग् विचारयति कोऽत्र परापवादः ? ॥ १ ॥—वसन्त०

रागद्वेषौ विनिर्जित्य, किमरण्ये करिष्यसि ? ।
अथ नो निर्जितावेतौ, किमरण्ये करिष्यसि ? ॥ २ ॥"—अनु०

---

१ सर्वेभ्यो हितः सार्वः, सार्वीयः जिनः । २ 'धर्मधर्मः' इति क—प्रतिपाठः । ३ दूराः ।

भवदीयदेवाः शृङ्गाररौद्ररसतरङ्गिता वर्तन्ते । तेनोक्तम्–कथम् ? । आचार्यैरुक्तम्–शृणु—

"सन्ध्यां यत् प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे
धत्से यच्च परां विलज्ज ! शिरसा तच्चापि सोढं मया ।
श्रीर्जाताऽमृतमन्थने यदि हरेः कस्माद् विषं भक्षितं
मा स्त्रीलम्पट ! मां स्पृशेत्यभिहितो गौर्या हरः पातु वः ॥ १ ॥–शार्दूल०

एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः
पार्वत्या विपुले नितम्बफलके शृङ्गारभारालसम् ।
अन्यद् दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ २ ॥–शार्दूल०

रामो नाम बभूव हुं तदबला सीतेति हुं तां पितु-
र्वाचा पञ्चवटीवने विचरतस्तस्याहरद् रावणः ।
निद्रार्थं जननीकथामिति हरेर्हुङ्कारिणः शृण्वतः
पूर्वं सस्तुरवन्तु कोपकुटिलभ्रूभङ्गुरा दृष्टयः ॥ ३ ॥–शार्दूल०

दर्पणार्पितमालोक्य, मायास्त्रीरूपमात्मनः ।
आत्मन्येवानुरक्तो यः, श्रियं दिशतु केशवः ॥ ४ ॥"

परं भो भट्ट ! भवदीयशास्त्रे कानिचित् सूक्तानि वर्तन्ते तानि जैनवाक्यान्येव । यतः—

"सुनिश्चितं नः परतन्त्रयुक्तिषु
स्फुरन्ति याः काश्चन सूक्तसम्पदः ।
तवैव ताः पूर्वमहार्णवोत्थिता
जगत्प्रमाणं जिनवाक्यविप्लु(प्रु)षः ॥ १ ॥"–वंशस्थविलम्
—( प्रथमद्वात्रिंशिकायां श्लो० ३० )

इति सिद्धसेनोक्तत्वात् । इत्यादि श्रुत्वा भट्टेनोक्तम्–सत्यं, परं युष्मदीयदेववर्णना क्रियताम् । तदा सूरिराह—

"यद्दृष्टिः करुणातरङ्गलहरी चैतस्य सौम्यं मुखं
आकारः प्रशमाकरः परिकरः शान्तः प्रसन्ना तनुः ।

---

१ पराम्–अपरां, गङ्गां इत्यर्थः ।    २ दशरथस्य ।

३ सन्तुल्यताम्—

जं दिट्ठी करुणातरंगियफुडा एयस्स सोम्मं मुहं
आयारो पसमायरो परियरो सन्तो पसन्ना तणू ।
तं मन्ने जरजम्ममच्चुहरणो देवाहिदेवो जिणो
देवाण अवराण दीसइ जओ नेय सरूवं जए ॥

तन्मन्येऽखिलजन्ममृत्युहरणो देवाधिदेवो जिनो
देवेष्वन्यतरेषु राजति यतो नेदं स्वरूप स्थितौ ॥ १ ॥—शार्दूल०

यस्यैकत्र घटे नवापि निधय' कल्पद्रुमाः कोणके
स्वर्गश्चोणिरसातलेन्द्रपदवी भीश्च प्रदेशे क्वचित् ।
अंसे यस्य वसन्ति दैवतवरा' सार्धं महासिद्धिभिः
सद्धर्मोस्त्यनिधिं बुधाः! कुरुत तं किं च' प्रयासे' परै' ? ॥२॥"—शार्दूल०

इति निशम्य विप्रस्य मनो ध्वनितं, ततो जिनसाधुजैनधर्मयोरपि स्वरूपं कथितम् । तदा लघुकर्मत्वात् प्रतिबोध प्राप्त' परमजैनश्रावको जातो ज्ञाततत्त्वः सकलजैनशास्त्रवित् साधुजनसेवाकारकः मिथ्यात्वभ्रान्तिनिवारकः । तद्भार्याऽपि जैनी जाता । एकदा व्याख्याने सद्गुरुमुखात् सौभाग्यपञ्चमीतपस्तः सौभाग्यरोहिणीतपस्तः पतिषष्ठमित्यादितपोमाहात्म्य श्रुत्वा दम्पतीभ्यां सकलतपांसि कृतानि उद्यापनकादिविधिसहितानि श्री'शत्रुञ्जया'दितीर्थयात्रा नित्यं गृहजिनदेवपूजास्तुतिरित्यादि सुकृतानि साधुभ्यो दानानि कृत्वा परमभोगफलं बबन्ध । तत्रैव प्रातिवेश्मिका धनीनाम्नी परिवसति, धर्मलेशमपि न करोति । दिवाऽनिशमज्ञावत् सर्वमत्ता । तयोस्तपोदानसुकृतानि दृष्ट्वा सा हसति दुर्भगत्वकर्म सा च बध्नाति स्म । ततः कालेन मृत्वा शास्त्रप्रिय' 'मथुरायां' श्रेष्ठिचन्द्रिलस्य धनाढ्यस्य पद्मामार्यायां पुत्रत्वेन समुत्पन्नो भानुनामा बभूव । तस्यामेव नगर्यां गुणवती मृत्वा महर्द्धिककमलाख्यश्रेष्ठिनः सुन्दरीनाम्न्यां भार्यायां पुत्री बभूव । सा च नाम्ना मनोरमा पित्रोरतीव वल्लभा जाता । अथ भानुर्यौवनं प्राप्तः । मनोरमाऽपि यौवनं प्राप्ता । एकदा जिनमन्दिरे समागतौ तौ परस्परविलोकनेन जातजातिस्मरणेन दृष्टपूर्वभवौ जातमिथोऽनुरागौ जातौ । ततः पूर्वभ(भ)वज्ञापनार्थं विनोदार्थं च मनोरमा पपाठ—

"कमलदलसुनेत्रो हारविस्तीर्णतोयः
स्तनतटयुगहंसो रोमराजीतरङ्गः ।
चलनगतिगजेन्द्रः शर्वरीपूर्णचन्द्रो
नुरिह जगति सेव्यः कस्य सुशीतटाक' ? ॥ १ ॥"—मालिनी

इति निशम्य भानु प्राह—

"विमलगिरिमुख्यानां निर्मिता येन यात्रा
विशदचरणभूम्य' पुष्पदानं प्रदचम् ।
सितकुसुमसुगन्धैश्चार्चित' पूर्वमर्हन्
नुरिह जगति सेव्यस्तस्य सुशीतटाकः ॥ २ ॥"—मालिनी

---

१ पुरुषस्य ।

ततो द्वावपि गृहं गतौ स्वाभ्यां स्वाभ्यां मातरपितराभ्यां ज्ञातवृत्तान्ताभ्यां मिथः परिणायितौ द्विदेहावेकजीवाविव बभूवतुः। जातिस्मरणत्वात् पूर्वाभ्यसितं काव्यकरणसंस्कृतजल्पनेन मिथो विनोदं कुर्वाते स्म। लोके सौभाग्यभाजनं जातौ प्रेमरससागरनिमग्नौ, सुसंयोगो धर्मेणैव प्राप्यत इत्यागमोक्तेः। तयोरवसरे परस्परं प्रेमालापा धर्मयुक्ता एव भवन्ति। तथाहि रात्र्यवसाने भानुः स्वस्त्रीं प्रति प्राह—

"सुकोमले! चन्द्रसमानवक्त्रे!, प्रिये! वदन्ती मधुरां च वाणीम्।
सम्यग् जिनेन्द्रस्मरणाय शीघ्र-मुत्तिष्ठ जैनी रजनी जगाम॥ १॥—उपजातिः
कुर्वन्ति सत्साधुगणाः स्वकृत्यं, पठन्ति शिष्या जिनभाषितानि।
ध्यायन्ति शिष्टाः परमेष्ठिमन्त्रं, मा शेष्व बाले! रजनी जगाम॥ २॥"—उप०
शुकाः सुपुण्यं जिनराजनाम, पठन्ति सत्काञ्चनपञ्जरस्थाः।
भद्रे! तथा स्पर्धितसारिकाऽपि, त्यज प्रमादं रजनी जगाम॥ ३॥—उप०
एते पठन्ति कृतिनो बत जैनरक्षा-
मेते पठन्ति जिननिर्मलनामपङ्क्तीः।
एते पठन्ति जिनशाश्वततीर्थमाला-
मुत्थीयतां सुनयने! रजनी जगाम॥ ४॥—वसन्ततिलका
मार्गे मार्गे देवयोत्कारकामा, यान्त्यायान्ति श्रद्धया श्राद्धमुख्याः।
चैत्ये चैत्ये श्रूयते घण्टघोषः, श्रव्यो नव्यो मुञ्च निद्रां महेले[1]!॥ ५॥—शालिनी
एते व्रजन्ति हरिणास्तृणभक्षणाय
चूर्णिं विधातुमथ यान्ति हि पक्षिणोऽपि।
मार्गस्तथापि सुवहः किल शीतलश्च
शय्यां विमुञ्च महिले! रजनी जगाम॥ ६॥—वसन्ततिलका
श्रोत्रयोः सुमुखि! ते सुधा वनं, नेत्रयोरपि तदेव जीवनम्।
मास एव निवसस्यऽबिन्दुना, चन्दनेन परिपूरयान्तरम्॥ ७॥"—रथोद्धता

वनमध्ये चकारपूरणात् वचनं, पुनः वनमध्ये दकारपूरणात् वदनं, अथ मासे मध्ये नकारपूरणात् मानसे मनसि हे स्त्रि! त्वं निवससि। आन्तरं चन्दनेन पूरय। कथंभूतेन चन्दनेन? अविन्दुना—विन्दुरहितेन। शेषं स्पष्टमिति॥ अथवा पाठान्तरं श्रोत्रयोर्जिनपते! सुधा वनमित्यादि काव्यं शेषं तथैव पठनीयम्। हे जिनपते! तव वचनं श्रोत्रयोः सुधा नेत्रयोः वदनं जीवितं। हे जिन! त्वं मानसे वससि इत्यस्मिन् पक्षेऽपि सर्वं योजनीयमिति॥

---

१ ललने!।

अरुपार्श्वाख्यवीमभे–रघुर्धर्मविमैरमल्लियान् ।
आद्यन्ताविह संयोज्य, ते भवन्तु सुखाय ते ॥ ८ ॥–अनु०
सयोगसंलेपविशेषसौख्यं, प्राप्नोति भावी जिनमुख्यभक्तेः ।
धर्मं विना नैव सुखस्य लेश, इतीह मे धर्मधनैरमाणि ॥ ९ ॥–उप०

इति सरससुवाक्यैः कर्णपर्णैः पवित्रै
निहितहितविमिश्रैर्जैनधर्मोघमोर्कैः ।
पतिमुखकमलोत्थैर्या प्रबुद्धाऽस्ति धन्या
भवति सुकृतकृत्यं ब्रह्मणा साऽपि लक्ष्मीः ॥ १० ॥–मालिनी

इति भर्तृवचनानि । मनोरमाऽप्यवसरे भानु भर्तारं सम्बोधयति । तथाहि—

जीवितेश ! जिनराजपूजन, प्राणनाथ ! परमेष्ठिकीर्तनम् ।
आर्यपुत्र ! मुनिराजसेवनं, सार्वहृदीश ! शिवसौख्यसाधनम् ॥ १ ॥–रथोद्धता
सेव्यते यदि जिनेन्द्रशासन, प्राप्यते शिवदरत्नकत्रिकम् ।
अन्यशासनगते च लभ्यते, संसृतिभ्रमणमेव केवलम् ॥ २ ॥–रथो०

यतः—

गम्यते यदि मृगेन्द्रमण्डल, लभ्यते करिकपोलमुक्त(मौक्ति)कम् ।
जम्बुकालयगतेऽपि लभ्यते, वत्सपुच्छखुरचर्मखण्डितम् ॥ ३ ॥–रथो०
इच्छतीश ! परशासने मनो, प्राप्य निर्मलमनश्वरं परम् ।
देवतत्त्वगुरुतत्त्वधर्मिता–लक्षणेन गलिते कथं भव ॥ ४ ॥–रथो०
अविवेकिनि भूपाले, करोत्याशां समृद्धये ।
योजनानां शतं गन्तुं, करोत्याशां स मृद्धये ॥ ५ ॥–अनु०

अन्त्यचरणे मृद'–मृत्तिकाया' हय'–अश्व' । समृद्धय इति स्पष्टम् ।

स्यात्पदाङ्कितसमस्तवस्तुकं, मञ्जुलं जिनमतं नयोज्ज्वलम् ।
धर्ममन्दिरमहं अयाम्यर्य, कोऽत्र यस्यपि तयोत्तरं यथा ॥ ६ ॥–रथो०
याहि सूकर ! भद्र ते, ब्रूहि सिंहो मया जितः ।
पण्डिता एव जानन्ति, सिंहसूकरयोर्बलम् ॥ ७ ॥–अनु०

---

१ आद्यान्त्यपादसम्मीलने 'अरघुम्भुपार्श्वशान्तिधर्मवीरमल्लिनेमान्' इति । २ सुमपतेः सुमतिनाथ इत्यादिरूपः संयोगः लव लेश–सङ्गमः । ३ भावी भवी इति सम्यग्भेदः भाग्यवत्योः । ४ हृदयेश्वर ! ।
५ सुभाषितरत्नभाण्डागारे (पृ० २८१) तु पाठो यथा—
"गम्यते यदि मृगेन्द्रमन्दिरे लभ्यते करिकपोलमौक्तिकम् ।
जम्बुकालयगतेन लभ्यते वत्सपुच्छखुरचर्मखण्डनम् ॥
६ 'धर्मता' इति क-पाठः । ७ स्यात्पदमनेकान्तद्योतकं तेन अङ्कितं लाञ्छितम् ।

पण्डित! स्य[1] सदा पापं, संसारपरिवर्धनम् ।
जिनेन्द्रवचने यस्य[2], तस्य[3] जन्म निरर्थकम् ॥ ८ ॥–अनु०

येन प्लुष्टमनोभवेन सहसा ध्वस्तो भवस्य प्रचः[4]
पीतो[5] येन कठोरकर्मकलभः सिंहत्वमाबिभ्रता ।
पाकं[6] येन निराकृतं भवशतोपात्तं भजे तं जिनं
हीनं पण्डित एव पूरणपटुर्नान्योऽत्र जाल्मो भवेत् ॥ ९ ॥–शार्दूल०

शब्दस्य[7] तुरीये भागे, जन्यान्ते[8] राजवर्जिते[9] ।
वाजं[10] यत्नेन दातव्यं, कविभ्यो[11] वज्रमिश्रितम्[12] ॥ १० ॥–अनु०

इत्येवं मनोरमावचनानि ॥

तौ दम्पती नित्यं गुरोर्मुखाद् व्याख्यानं शृण्वन्तौ देवपूजां कुर्वन्तौ दानं ददतौ यथाशक्ति प्रत्याख्यानं विदधतौ कालं गमयतः । श्वश्रूश्वशुरयोरतीव वाल्लभ्यभाजनं तौ जातौ । क्रमेण मातापितरौ दिवं गतौ । गृहस्वामी भानुर्जातः ॥

इतश्च पूर्वप्रातिवेश्मिका वनी नाम्नाऽधार्मिकी सा मृत्वाऽत्रैव नगरे भानोरेव प्रातिवेश्मिक-हरिनाम्नो भट्टस्य गोमती नाम्ना भार्या जाताऽस्ति । यदा परिणीय गृहमानीताऽस्ति तत्प्रभृति गृहलक्ष्मीः सर्वा नष्टा । कष्टेन गृहनिर्वाहो वर्तते । तया गोमत्या तयोः परस्परं प्रेमालापं श्रुत्वा स्वपतिर्हरिः प्रोक्तः–शृणु, कया रीत्या भानुः स्वस्त्रीं जागरयतीत्यादिकं पश्य । तदा हरिः प्राह—क्व सा? क्व त्वम्? । यतः शृणु–सा कीदृशी?—

क्व रत्नकान्तिः क्व च काचकान्तिः, क्व देववल्लिः क्व च भत्तशाखा[13] ।
क्व कामधेनुः क्व च सर्वभक्षा[14], पुण्येन याऽऽभाति गृहाङ्गणेऽसौ ॥ १ ॥–उपजातिः
दानेन लक्ष्मीर्वचसा च वाणी, शीलेन शी(सी)ता गुणरत्नखानिः ।
रूपेण देवेन्द्रसुताऽस्ति सा तु, भाग्येन पूर्वाचरितेन लब्धा ॥ २ ॥–इन्द्रवज्रा

अथ त्वं यादृश्यसि तादृशीं त्वां जागरयामि । शृणु—

रे रे प्रिये! पक्वपटोलनेत्रे!, लम्बस्तनी(ने!) निर्जितकाकनादे! ।
यत्पादनिक्षेपगलद्गृहश्री–रुत्तिष्ठ दुष्टे! दलनाय गच्छ ॥ १ ॥–इन्द्रवज्रा
रे घोरनिद्रे! कलहप्रसक्ते!, रे प्रेतरूपे! नितरां कुरूपे! ।
रे दुर्भगे! भाग्यविवर्जिते! रे, उत्तिष्ठ दुष्टे! सलिलाय गच्छ ॥ २ ॥–इन्द्रवज्रा

---

१ घातय । २ उद्यमं कुरु । ३ क्षिप । ४–६ प्रचमध्ये पंप्रक्षेपणात् प्रपंचः, एवं पीत. पीडित', पाक पातकं इति ज्ञेयम् । ७ दिनस्य । ८ चतुर्थप्रहरे । ९ चन्द्ररहिते अमावासीदिने । १० अन्नम् । ११ यतिभ्यः । १२ घृतयुक्तम् । १३ धत्तूरवृक्षशाखा । १४ अजा ।

क्रूरस्वभावे! करुणाविहीने!, कठोरवाक्ये! कृपणा घनेऽपि।
अलक्ष्मिके! क्रोधमुखी विमूढे!, कुरूधर्म गोमयमानय प्राक् ॥ २ ॥—उपजातिः

इति निरुत्तरीकृता हरिमत्रो। कोऽपि जैनमुनि पृष्ट'। तेन तस्य भार्याया अधर्मकारिण्याः पूर्वभव' कथितः। ततोऽधर्मस्य फलं ज्ञात्वा जैनधर्मिणौ जातौ। तावपि क्रमेण जिनधर्मप्रसादात् गोमतीहरिमद्रौ सुखिनौ बभूवतुरिति ॥

अथो मनोरमा भानुश्च दम्पती अखण्डश्रावकधर्म प्रपाल्य सुखसमाधिना परमेष्ठिध्यानेन मृत्वा सुधर्मदेवलोके द्वौ देवौ जातौ। ततश्च्युत्वा 'पूर्वमहाविदेहे' स्त्रीभर्तारौ भूत्वा यौवनावस्थायामेव दीक्षां लात्वा मुक्तिं गमिष्यतः। इति मनोरमाभानुकथा सम्पूर्णा। इति द्वादशस्य वृत्तस्यार्थः सम्पूर्ण' ॥ १२ ॥

* * * *

मूलम्—

अर्हन्त एव जगदीश्वरतां श्रयन्त
सर्वातिशायिसुखदा नितरां निषेव्या।
हित्वाऽत्र तान् भजति मुक्तिकृते मुधाऽधी–
र्नीलद्रुमाणि विपिनानि न किं हि मानी ? ॥ १३ ॥

व्याख्या—भव्यैः अर्हन्त एव नितराम्–अतिशयेन निषेव्याः–सेवनीयाः। कथंभूता अर्हन्त' ? जगदीश्वरतां श्रयन्त'–त्रिभुवनाधिपत्यं दधतः। पुन' कथं० अर्हन्त' ? सर्वेभ्य' (अतिशायि–) उत्कृष्टं सुखं ददतीति सर्वातिशायिसुखदाः। हि इत्यवधारणे। (अत्र–अस्मिन् जगति) मानी मानः–गर्वः चित्तोन्नति' सोऽस्यास्तीति मानी–मानयुक्तो नर' मुक्तिकृते–मोक्षकार्याय किं विपिनानि–वनानि मुधा–वृथा न भजति ?–न सेवते ? अपि तु सेवते। वनमध्ये तापसो भवती त्यर्थ'। किं कृत्वा ? तान्–अर्हत' हित्वा–त्यक्त्वा। कथं० मानी ? अधी'–निर्बुद्धिः। कथंभूतानि विपिनानि ? 'नीलद्रुमाणि' नीला द्रुमा–वृक्षा येषु तानि इति। तीर्थङ्करा (एव) अतिशायि सुखदा'। यत उक्तम्—

"क्व पर्वपीयूषकरः क्व तारका
क्व वा स्वयम्भूरमणः क्व गोष्पदम् ?।
विपन्मणि' क्व क्व पयोमणि' स वा
क्व च प्रभूपासनजं क्व राज्यजम् ? ॥ १ ॥"–पंचशस्यम्

राज्यदानावसरे भरतेन प्रोक्त प्रश्ने प्रतीति पद्मानन्दे ॥

---

१ पौर्णमीचन्द्रः। २ सूर्यः। ३ पयोधः।

अथ जिनान् मुक्त्वा वनानि भजति तदुपरि दृष्टान्तमाह—

भरतचक्रिपुत्रो मरीचिर्दीक्षां पालयितुमसमर्थः। ततस्त्यक्तजैनवेषः त्रिदण्डी क्षुरमुण्डः शिखाधारी शिरसि धृतमयूरबर्हच्छत्रः कृतकषायवस्त्रः सोपानत् स्थूलप्राणातिपातविरतिर्वृषभजिनेन सह विजहार। जनो विसदृशं वेषं तस्य दृष्ट्वा धर्मं पप्रच्छ तदा शुद्धं धर्ममुदित्वा प्रभुपार्श्वे मोचयति। तस्य एकदा रोगोत्पत्तिः, परं न केनापि साधुना तस्य सेवा कृता। गते रोगे चिन्तितं तेन—यदि कोऽपि शिष्यो मिलति तदा वरम्। एकदा कपिलनामा राजपुत्रो दूरभव्यः समवसरणमाजगाम। ऋषभस्वामिना प्रोक्तो धर्मः कपिलाय नारुचत् यथा सूर्योदयो घूकाय सुखाय न स्यात्। ततो निर्गत्य यतिभ्यो विलक्षणवेषं मरीचिं लक्षयित्वा धर्मान्तरशुश्रूषया स राजसूर्धर्मं तं पप्रच्छ। ततो मरीचिरूचे—अत्र धर्मो नास्ति, चेद् धर्मेच्छुः तर्हि भगवत्समीपं गच्छ। ततः पुनरागत्य प्रभुमुखाद् धर्मस्तथैव तेन श्रुतः, परं चक्रवाकाय चन्द्र इव तस्मै स धर्मो नारुचत्। भूयो मरीचिं समेत्य सोऽवदत्—किं भवतः कीदृशोऽपि धर्मो नास्ति? किं धर्मोज्झितं व्रतं स्यात्? इति श्रुत्वा मरीचिरचिन्तयत्—कोऽप्यहो मम सदृशोऽयम्, सद्‌योगश्चिरादभूत्, मम निष्प्रतिचारकस्य प्रतिचार एष भविष्यति इति। तदा मरीचिना प्रोक्तम्—अत्रापि धर्मोऽस्ति तत्रापि धर्मोऽस्ति, "कविला[1] इहापि[2] धम्मं" इत्यागमवचनात्। तेन वचसा सागरकोटाकोटीभवभ्रमणं समुपार्जितम्। ततः कपिलो दीक्षितः। ततः प्रभृति जनः परिव्राजकतां भेजे। कपिलदर्शनं जातम्। इति कपिलकथानकं समाप्तं पद्मानन्दे। इति त्रयोदशवृत्तस्यार्थः॥ १३॥

* * * *

सूत्रम्—

हे भव्य! हेयमहितं कथितं कुदेव-
सम्पूजनं सुमतिनाऽत्र गरोपमानम्।
दुःखाप्तिहेतुरतुलं किमु तत् सुखाय
दक्षस्य सम्भवि पदं ननु कर्णिकायाः?॥ १४॥

व्याख्या—अत्र—अस्मिन् लोके 'सुमतिना' सुष्ठु—शोभमाना मतिः—ज्ञानं यस्य स तेन सुज्ञानयुक्तपुरुषेण कुदेवसम्पूजनं—हरिहरादीनां सम्पूजनं हेयं—त्यजनीयं कथितं—उक्तम्। किंविशिष्टं कुदेव०? अहितं—अनिष्टकारकम्। अत एव पुनः किं० कु०? गरोपमानं—विषसमानम्। पुनः किं० कु०? अतुलं—अमेयम्। दुःखाप्तिहेतुः—दुःखाप्तिकारणम्। हेतुशब्द आविष्टलिङ्गः। ननु

१ कपिल! इहापि धर्म। २ 'इत्थपि इहयपि' इति पाठ. सुबोधिकादिषु।

इति प्रश्ने। दक्षस्य–निपुणस्य नरस्य कर्णिकाया–कुट्टिन्याः तत्–प्रसिद्धं नटविटसेवितं पदं–स्थानं किन्नु सुखाय (सम्भवि–) सम्भाव्यते ? अपि तु नेति। यत'—

"द्यूतं च मांसं च सुरा च वेश्या, पापर्द्धिचौरीपरदारसेवा'।
एतानि सप्त व्यसनानि लोके, घोरातिघोरं नरकं प्रव(नय)न्ति ॥ १ ॥"—उपजातिः

अथवा दक्षस्य–निपुणभ्रमरस्य कर्णिकाया–कमलकोशस्य पदं तत्रैव सिरवाललभ्यत्वेन सुखाय न सम्भवि। यतः—

"रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्री ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥ १ ॥"—वसन्त०

अथवा दक्षस्य–जीवपुद्गलस्वभावज्ञस्य कर्णिकायाः–कर्णभूषणस्य पदं सुखाय न, विघ्नहेतुत्वात्। अथवैवं दक्षस्य नरस्य दक्षस्य–कुक्कुटस्य वा कर्णिकायाः–हस्तिहस्ताग्रस्य पदं–स्थानं न सुखायेति। यतो हस्तितो हस्तसहस्रं दूरत' स्थेयम्। यतः (चाणक्यनीतौ)—

"शकटं पञ्चहस्तेन, दशहस्तेन वाजिनम्।
गजं हस्तसहस्रेण, देशत्यागेन दुर्जनम् ॥ १ ॥"—अनु०

कुक्कुटोऽपि गजसङ्गाद् म(मृ)त्युं यातीति। "कर्णिका कर्णभूषणे। बीजकोशे सरोजस्य करमध्याङ्गुलावपि। कुट्टिन्यां हस्तिहस्ताग्र" इति हैम' (अनेका० का० ३, श्लो० ६२४–६२५)। "दक्षः प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ। द्रुमे" इति हैम' (अनेका० का० २, श्लो० ५६७)। अत्र दृष्टान्तः—कालिदासो नित्यं वेश्यायां रमते। तस्या मुखं ताम्बूलरक्तं वीक्ष्य (तेन) प्रोक्ता गाथा—

"सीवी सासा हरवे सासो करेइ गयणब्भासो।
अहवा वली(लि)ओ न वली(लि)ओ सुहवर्णं कवण सइहइ ? ॥ १ ॥"—आर्या

वेश्यया प्रोक्तम्–हे हला ! शृणुतां हन्यताभयम्। तेनोक्तम्–कोऽपराधः ?। तयोक्तम्—गाथामिमां भोजाग्रे भाषयित्वा लक्षद्रव्यं लास्यामि। कविनोक्तम्–नित्यं नवीनां कृत्वा तुभ्यमर्पया(यिष्या)मि। मां निजापवरके जीवन्तं रक्ष। नित्यं लक्षां लाहि। तयोक्तम्–एवमस्तु। सा तथैव करोति। कतिचिद् दिनानि नीत्वा कविना तस्यैका गाथा दत्ता। यत'—

1 'सूक्तः कमलिनी' इति सुभाषितरत्नभाण्डागारे (पृ ३१३)।

२ छाया—

शीवे नासा हरवो सु-भासा करोति गगनाभ्यासः।
अथवा वलितो (वीता) न वलितो सुवर्णः कम पश्ये ! ॥

३ व्यसनम्य चौरीपरिक्र

"गाहा हुई अणाहा गाहा सगें(ग्गे)ण पाडीया ।
धाहा गईउ गाहा नरिंदो रंडावण आवहे गाहा ॥१॥

सा गाथा भोजपण्डितैर्विभावितार्था । नृपेण वेश्यातो मोचापितः कालिदास इति लेशतः कथा ॥

अथ च चण्डप्रद्योतनस्य श्रावकीभूतया वेश्ययाऽभयकुमारोऽपि 'उज्जयिनीं' नीयते स्म । कूलवालुको मुनिर्वेश्यया (मागधिकानाम्न्या) कुणिकसत्कया पातितो व्रतात् । पुनः धम्मिल्ल-कृतपुण्याद्या अवकरे क्षिप्ताः । तथा च कयाचित् कुट्टिन्या निजगृहबहिः सुप्तः पथिकः क्षत्रियः कश्चित् सधन इति ज्ञात्वा मारणार्थं विषचूर्णभृतनालिका तस्य पुता(?)न्तः क्षिप्ता । यावत् (सा) मुखवायुना फुत्कां ददाति तावत् तस्य पुण्यप्राग्भारात् प्रोद्भूतप्रभूतपायुवायुप्रेरितनालिकाविष-चूर्णपूर्णमुखताल्लुरन्ध्रा सा मृतेति । अतोऽपि कुदेवपूजनं दुष्टम् ॥ इति चतुर्दशवृत्तस्यार्थः ॥१४॥

* * * *

सूत्रम्—

श्रीश्रेणिकादिनृपवद् बहवो भवेयुः
जीवा जिना जिनपभक्तिभरेण भव्याः! ।
सच्चूर्णपूर्णविभवेन भृता भव(ज)न्ते
चामीकरत्वमचिरादिव धातुभेदाः ॥ १५ ॥

व्याख्या—श्रीश्रेणिकेति । हे भव्याः! श्रीश्रेणिकनृपवद् बहवो जीवा जिनाः—तीर्थङ्करा भवेयुः । केन? जिनपभक्तिभरेण—जिनपतिसेवासमूहेन । उपलक्षणत्वात् विंशतिस्थानकासेवने-नापि । के इव? धातुभेदाः—उपलभेदा इव । यथा धातुभेदा अचिरात्—तत्कालं चामीकरत्वं भव(ज)न्ते—प्राप्नुवन्ति । भूङ् प्राप्तौ सौत्रो धातुः । कथंभूता धातु० ? सच्चूर्णपूर्णविभवेन भृता—मि-श्रिताः—एकीकृताः, सतां—सिद्धानां यत् चूर्णं तस्य यो विभवः—शक्तिः तेनेति । यथा कालिका-(चा)र्येण गर्दभिल्लोच्छेदार्थं समानीयमानशाकिराजकटके पथि क्षीणशम्बले वासचूर्णेन मृत्ति-केष्टकानीमाडकः स्वर्णमयः कृत इति ॥

अथ श्रीश्रेणिकः क्षायिकसम्यक्त्वधारी नित्यं स्वर्णमययवमालिकया प्रतिमां पूजयति स्म । यतो मेतार्यमुनिना कलाद[4]गृहगतेन गलितजवमालिकक्रौञ्चोपरि कृपाश्रितेन स्वर्णकारकृतोपस-

१ एतत्स्थाने प्रतिभातीयं गाथा—
गाहा हुई अणाहा, गाहासग्गेण पढियग्गाहा ।
गाहामइओगाहा नरिंद ' रंडाण आवहे गाहा ॥
[ गाथा जाताऽनाथा गाथासर्गेण पण्डितग्राह्या ।
अगाधमत्यवगाह्या नरेन्द्र ' रण्डाम्य आयाति गाथा ॥ ]

२ 'मुखान्त' इति क-पाठ. । ३ अपानम् । ४ कलाद.—सुवर्णकारः ।

गेण क्षपकश्रेण्यारूढेन अन्तकृत्केवलिना भूयते सेति । एकदा समवसरणे श्रीरस्य कपटाशातनां कुर्वता सेडकदेवेन प्रश्नप्रभृतीनां जातानि क्षुतानि निशम्य मर-जीवेत्यादिविपमकथनेन परीक्षितः श्रेणिकः क्रोधातुरः सन् नदीतटे पुनः परीक्षितः । यतः प्रबोधचिन्तामणौ—

"नेयं हित्वा क्रम नेयं, नायर्मोनायमम्बुनि ।
सेपाकर्परसूपि वीक्ष्य, नाय सद्भावसम्युत ॥ १ ॥"—अनु०

जिनधर्मोपरि दृढमतिं ज्ञात्वाऽसौ द्वौ गोलकौ समर्पयित्वा ( समर्प्य ) तिरोभूयते स्म । तेन भग्नौ गोलकौ, (तत) हारः कुण्डले च निर्गतानि श्रीजिनभक्तितः । श्रेणिकोऽग्रे पद्मनाभनामा प्रथमतीर्थङ्करो भविष्यतीति कथानकलेशः । पञ्चदशवृत्तार्थः सम्पूर्णः ॥ १५ ॥

* * * *

अत्रम्—

शय्यम्भवः शमधनोक्तिविचारदक्ष
खड्गेन याज्ञिकजने हनने हठोत्थ ।
तत्त्वस्य रूपकथने द्रुतजातशान्ति
र्यद् विग्रह प्रशमयन्ति महानुभावा ॥ १६ ॥

व्याख्या—शय्यम्भवो नाम्ना भट्टः तत्त्वस्य कथने सति द्रुतजातशान्तिः शीघ्रं विगलितक्रोधत्वात् उपशमयुक्तो बभूव। कथंभूत शय्यम्भव ? 'शमधनोक्तिविचारदक्षः' शमो धनं ययोस्तौ शमधनौ साधू द्वौ तयोः उक्तिः—वचन तस्य विचारे दक्षः—निपुणः । यतः "अहो कष्टमहो कष्टं, तत्त्वं न ज्ञायते परं" अहो कष्टमित्याद्युक्तिविचारे दक्षः। पुनः कथं० श० ? खड्गेन याज्ञिकजने—यज्ञोपाध्यायविषये हनने—मारणनिमित्तम्, निमित्तार्थे सप्तमी, हठोत्थः—हठात् उत्थितः । यत्—यस्मात् कारणात् महानुभावाः विग्रहं—कलहं शमयन्ति—दूरीकुर्वन्ति । रहस्यं कथानकादवसेयम् । तथाहि—

श्रीजम्बूस्वामिपदाम्बुजप्रभापतिः प्रभवप्रभुरस्ति । यतः—

"प्रभवोऽपि प्रभुर्भीया—चौर्येण हरता धनम् ।
लेभेऽनर्घ्यचौर्यहरं, रत्नत्रयं तदद्भुतम् ॥ १ ॥"—अनु०

अन्यदा श्रीप्रभवस्वामिना गणे सङ्घे चोपयोगो दत्तः । तत्र तथाविधयोग्यशिष्यादर्शने पर तीर्थिषु सदुपयोगे शय्यम्भव भट्टं यजन्तं 'राजगृहे' ददर्श सः । तत्र गत्वा साधुभ्यां "अहो कष्ट महो कष्टं, तत्त्वं न ज्ञायते परम्" इति वचः श्रावितः । ततस्तेन खड्गं निष्कास्य तत्त्वं हे याज्ञिक !

१ छिद्रा । २ नवे भव चापम् । ३ भीत्या । ४ आवापरतु भरसत्यम् । ५ प्रभा—भरतः । ६ मूर्ति इति च-पाठः ।

त्वं कथयेत्युक्ते तेन चिन्तितं 'शिरच्छेदे तत्त्वं वाच्य'मित्युक्तः याज्ञिकेन यज्ञकीलकाधस्तात् श्रीशान्तिनाथप्रतिमा दर्शिता। तां च दृष्ट्वा प्रतिबुद्धः शय्यम्भवो दीक्षां जग्राह। क्रमेण प्रभवः शय्यम्भवं स्वपट्टे संस्थाप्य स्वर्गं प्राप। शय्यम्भवसूरिः मुक्तया सगर्भया निजभार्यया प्रसूतमनकनामपुत्रहिताय श्रीदशवैकालिकं कृतवान्। स्वर्गं गतः। जिनबिम्बतो बोधं प्राप्तवान्। इति सम्पूर्णः कथालेशः। षोडशवृत्तस्यार्थः सम्पूर्णः॥ १६॥

* * * *

सूत्रम्—

अर्चां समीक्ष्य सुतरामभयेन मुक्तां
मिथ्यात्वमाशु यदनार्यजनोऽप्यमुञ्चत्।
आर्यस्तदादरभरः कुलजस्ततो नो
किं ना मनोविषविकारमपाकरोति?॥ १७॥

व्याख्या—यतो हेतोः अनार्यजनोऽपि आशु—शीघ्रं मिथ्यात्वं अमुञ्चत्। किं कृत्वा? सुतरां—अतिशयेन अभयेन मुक्तां—प्रहितां अर्चां—जिनप्रतिमां समीक्ष्य। "अर्चा पूजा प्रतिमाऽपि च" इति हैमः (अनेका० का० २, श्लो० ७०) ततो हेतोः आर्यः—अर्यजः नृशब्दस्य ना—नरः किं मनोविषविकारं नो अपाकरोति? अपि तु निराकरोति। मनसः—चित्तस्य विषमिव विकारं मिथ्यात्वमिति। कथं० ना—नरः? कुलजः। पुनः कथं० ना? 'तदादरभरः' तस्यां—अर्चायां आदरभरो यस्य सः, तत्सेवातत्पर इति। कः? आर्द्रकुमारः। तथाहि—

'आर्द्रक'देशे 'आर्द्रक'पुरे आर्द्रकभूपतिः। तस्य आर्द्रिका प्रिया। तयोरार्द्रकुमारनामा पुत्रोऽस्ति। जनकेन श्रेणिकाय प्राभृतं मुक्तं तदाऽनेनाभयकुमाराय प्राभृतं रत्नवस्त्रादिकं प्रीतिं दधता पूर्वमदृष्टायाश्रुताय चापि। यतः—

"यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपा-
मुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिता।
अयं कः सम्बन्धो यदनुहरते तस्य कुमुदं
विशुद्धाः शुद्धानां ध्रुवमनभिसन्धिप्रणयिनः॥ १॥"—शिखरिणी

ततोऽभयेन मुक्तां प्रतिमां दृष्ट्वा जातजातिस्मृतिः—पूर्वभवे सामायिकनामा कुटुम्बी साधुः, स्त्री बन्धुमती साध्वी। सोऽस्यां कामातुरो जातः। तदा व्रतभङ्गभयात् सा (अनशनेन) मृतेति। तदनु सामायिकसाधुरप्यनशनेन मृतः। ततो द्वावपि देवत्वं प्राप्ताविति। पितृमुक्तभटपञ्चशतीं

---

१ 'प्राप्त.' इति ख-पाठ.। २ कष्ट क्षयरूपम्। ३ उदय वृद्धिरूपम्। ४ कर्तृपदम्।

विप्रताय आर्यदेशमागत आर्द्रकुमारः । प्रतिमामभयाय सम्प्रेष्य सप्तक्षेत्रे धनं दत्त्वा मुनिलिङ्गं गृहीतवान् । भोगकर्मास्ति इति खस्थया देवतया निषिद्धोऽपि शुद्धो यतिः प्रत्येकबुद्धो जातः ॥

एकदा विहरन् 'वसन्त'पुरे देवदत्तश्रेष्ठिधनवतीभार्याङ्गजा श्रीमती नाम्नी सा च पूर्वभव बन्धुमतीजीव इति यत्रास्ति तत्रागरदेवकुले प्रतिमया स्थितः । बालाभिः समं रममाणया श्रीमत्या वृतः साधुः, देव्या रत्नवृष्टिः कृता । तस्मात् नष्टो मुनिः । भूपेन सा रत्नवृष्टिः श्रीमत्यै दत्ता । पितुराज्ञां गृहीत्वा दानशालायां स्थिता । कतिपयदिने विस्मृत तं मुनिं तत्रागतं चरणाञ्चलेन जग्राह । भूपेन पौरजनैश्च हठात् तया समं परिणायितः सः । सुते द्वादशवर्षप्रमाणवयसि जाते तेनोक्तम्—प्रव्रजिष्याम्यहमधुनेति । तदा तर्कुमादाय कर्तितुमुपविष्टा । पुत्रेणोक्तम्—किमिदं कर्म निर्मासि मातर्निर्धनोचितम् ? । तयोक्तम्—तव पिता व्रतं लाति । तेन मन्मनाक्षरेण सूत्रतन्तुभिर्बद्धो जनकः । पुत्रस्नेहात् सूत्रतन्तुमितद्वादशवर्षाणि गृहे स्थितः । ततो दीक्षां लात्वाऽव्यहरत् । भूपमीतास्ते पञ्चशतसुभटास्तस्करतायामीरत्तयो मिलिताः अस्य मुनेः । अथ तान् प्रव्रज्य तैः सह वीरं नन्तुं 'राजगृहं' प्रतिचचाल स आर्द्रकमुनिः । अन्तराले मङ्खलीपुत्रो मिलितः एकान्तनियतिवादी

"[१]कालो सहाव नियई पुव्वकयं पुरिसक्कारणे पंच ।
समवाए सम्मत्तं एगंते होइ मिच्छत्तं ॥ १ ॥"–(उपदेशपदे)

इत्यादिना निरुत्तरीकृतो मुनिना । ततोऽग्रे तापसाश्रमं गतः । ततो हस्तिमस्तकतापसैः बद्धला बद्धहस्ती मुनिदर्शनात् त्रुटितबन्धनो मुनिं नत्वा वनं ययौ ।

"पृष्टाश्च ते वदन्ति स्म, दन्तिवर्धापन(भक्षण ?)कारणम् ।
रक्षार्थमन्यजीवाना-मेको हस्ती निहन्यते ॥ १ ॥"–अनु०

तापसानपि प्रतिबोध्य वीरजिनान्ते प्रैषीत् मुनिः । वीरेण दीक्षितास्ते आर्द्रकमुनिमाहात्म्यं श्रुत्वा श्रेणिकोऽभयेन सह तत्रागत्य नत्वा आर्द्रकसाधुमवादीत्—महच्चित्रं मेऽस्ति हस्तिमोक्षणात् । ऋषिणोक्तम्–किं चित्रमेतत् ? मम तन्तुपाशविमोक्षणं तु चित्रं, तत्स्वरूपं राज्ञे निवेदितं, (तत्) श्रुत्वा सर्वे लोका विस्मिताः । पुनः ऋषिर्जगौ—हे अभयकुमार ! त्वयाऽहं समुद्धृतः । ततो मुनी 'राजगृहे' वीरं नत्वा तत्सेवया निरतीचारं व्रतं प्रपाल्य शिवं ययौ । इति आर्द्रककुमारकथालेशः । इति सप्तदशवृत्तार्थः सम्पूर्णः ॥ १७ ॥

* * * *

---

१ आत्मपर्यालोचनया । २ 'साधु २' इति क-पाठः ।

१ छाया—

कालः स्वभावो नियतिः पूर्वकृतं पुरुषकारणं पञ्च ।
समवाये सम्यक्त्वं एकान्ते भवति मिथ्यात्वम् ॥

२ एकमेतत् ।

सूत्रम्—

सावद्यजोऽपि निरवद्यफलानुबन्धा-
दर्चाविधिः सुमभरेण वरः पुरोगः ।
साध्योऽपि शब्दनिपुणैः किमु सिंहशब्दो
नो गृह्यते विविध! वर्णविपर्ययेण? ॥ १८ ॥

व्याख्या—अर्चाविधिः-पूजाविधिः सावद्यजः-सदोपजातोऽपि स्वरूपहिंसात्वात् सुमभरेण-पुष्पप्रकरेण पुरोगः-सर्वानुष्ठानस्य अग्रेसरः वरः-श्रेष्ठो वर्तते । कस्मात्? निरवद्यफलानुबन्धात्-निष्पापफलपरम्पराप्तेः । दृष्टान्तमाह—विशिष्टा विधा-अनुष्ठानक्रिया यस्य सः तस्य सम्बोधने हे विविध! (शब्द)निपुणैः-वैयाकरणैः वर्णविपर्ययेण साध्योऽपि सिंहशब्दः पुरोगः जिनादिशब्दस्य अग्रगतः वरः-श्रेष्ठः किमु नो गृह्यते? अपि तु गृह्यत एव । कथं० सिंहशब्दः? सावद्यजोऽपि, हिनस्तीति निरुक्तिवशात्, यथा जिनसिंहः अत्र निरवद्यफलानुबन्धात्-श्रेष्ठवाचित्वात् । यतो हेमसूरयो ब्रुवन्ति-"स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः" इत्यादि (अभिधानचिन्तामणेः) षष्ठकाण्डे (श्लो० ७६) जिनसिंहः मुनिव्याघ्रः प्रशस्तार्थप्रकाशक इति । अत्र विरताविरतानां श्रावकाणामपेक्षया "भावत्थवाओ दव्वत्थओ बहुगुणो"[1] जिनपूजाफलं दानादिकसमानमित्यादि वक्तव्यता महानिशीथतृतीयाध्ययनतो ज्ञेया । वज्जा(सावद्या)चार्यः पञ्चशतमितान् शिष्यान् प्रति चन्द्रप्रभतीर्थयात्रां कारयिष्याम्यहमिति "जइवि जिणालयं तहवि सावज्जमिणं"[2] इति सावद्याचार्यकथायामिति, स्वर्णमयं जिनायतनमित्यादि सर्वत्र महानिशीथः । एवं द्रौपदी ज्ञातायां (अ० १६, सू० ११९), अम्बरपरिव्राजक औपपातिके[3] (सू० ४०), जङ्घाचारणविद्याचारणौ भगवत्यां (श० २०, उ० ९), चैत्यभक्तिर्दशमाङ्गे[4], सम्यग्भावितप्रतिमाभक्तिः व्यवहारसूत्रे इत्येवं सर्वैरानन्दादिभिः श्रावकैः प्रतिमा पूजिताऽस्ति । तत्फलं च[5]—

"यास्यामीति जिनालयं स लभते ध्यायंश्चतुर्थं फलं
षष्ठं चोत्थित उत्थितोऽष्टममथो गन्तुं प्रवृत्तोऽध्वनि ।

---

१ छाया—
भावस्तवाद् द्रव्यस्तवो बहुगुणः ।

२ छाया—
यद्यपि जिनालयं (मन्दिर) तथापि सावद्यमिदम् ।

३ 'उपपातिकायां' इति ख-पाठ. ।   ४ प्रश्नव्याकरणे संवरद्वारे ।

५ सन्तुल्यतां यदुक्तं श्रावकाचारे—
"यास्यामीति हृदि ध्यायं-श्चतुर्थफलमश्नुते ।
उत्थितो लभते षष्ठं, त्वष्टमं पथि च व्रजन् ॥ १ ॥
दृष्टे चैत्ये दशम, द्वारि द्वादशम लभेत ।
मध्ये पक्षोपवासस्य, मास. साद्य जिनार्चया ॥ २ ॥"

श्रद्धालुर्दशमं बहिर्जिनगृहात् प्राप्तस्ततो द्वादशं
मध्ये पाक्षिकमीक्षिते जिनपतौ मासोपवासं फलम् ॥ १ ॥—शार्दूल०

सेयं पमज्जणे पुण्ण, सहस्सं च विलेवणे ।
सयसहस्सं मालाए, अणंतं गीयवाइए ॥ २ ॥—अनु०
पूजाकोटिसमं स्तोत्रं, स्तोत्रकोटिसमो जप ।
जपकोटिसमं ध्यानं, ध्यानकोटिसमो लय ॥ ३ ॥"—अनु०

इत्यादि ॥

अथात्र विशेषज्ञापनार्थं प्रथमं पाठाच्च प्रमतं लिख्यते—यदिन्द्राभिषेककरणे सुपर्वाणोऽष्टमहामिक्यौदारिकजलपुष्पसिद्धार्थादीनि गृह्णन्ति जिनपूजां तु न तेनोपचारेण कुर्वन्तीति सुरपुष्पेषु प्रसासम्भवोऽम्लानत्वं च हेतुर्येऽहिंसापरिहार एवायं धर्माभ्युदयाय प्रगल्भते । समवसरणे च वैक्रियाण्येव पुष्पाणि देवा प्रमोदतो 'देवनोर्ध्वा विकिरन्ति । मण्यादिरचनाऽप्यचित्तैव, उक्तं च राजप्रश्नीयोपाङ्गे—'पुष्फवद्दलयं विउव्वती'त्यादि नवकमलरचनाऽप्यचित्तैव ज्ञेयेति । एतन्मतमसत् । यत —पुष्पवर्दलविकुर्वणमपि विकिरणमात्रसम्पादनार्थं अधोवृन्तजलस्थलजपुष्पविकिरणं तैव पाठसिद्धत्वात् न पूजाङ्गे सचित्तपुष्पा गृह्यन्ते नानेया प्रतिमाशातनाकरणं ज्ञानचरितम काव्यादिकृतो श्रीयशोविजयोपाध्याया इति । अथ पद्मानन्दकाव्येऽप्यमरचन्द्रकवय आहुः, यतः—

"प्रासुकत्वाज्ञमितानि, स्थलजलभवपञ्चवर्णसुरभीणि ।
व्यकिरन् व्यन्तरदेवा, न्यकृतवृन्तानि तत्र कुसुमानि ॥ १ ॥"—गीतिः

अत्र प्रासुकशब्देन द्वीन्द्रियादित्रसजीवरहितानि निरवद्यानि कण्टकादिदोषवर्जितानि पुष्पाणि, नहि पुनरचित्तानीत्येवं भावनीयम् । प्रथमं अत्र श्लोकेऽपि स्थलजलभवकुसुमानां पाठसिद्धत्वात् इति चतुर्दशसर्गे विलोकनीयम् । पुनर्निस्तुषं दर्शयति । "तथा आयोजनभूमिकुसुमवर्षविषये कृपार्द्रीकृतचेतसः केचन प्रेरयन्ति—ननु विकचकान्तकुसुमप्रचयनिचितायां समवसरणभुवि जीवदयारसिकान्तःकरणानां श्रमणानां कथमवस्थानगमनादिकं कर्तुं युज्यते, जीवविघातहेतुत्वादिति ? । तत्र केचिदुत्तरयन्ति—तानि कुसुमानि सचित्तान्येव न भवन्ति, विकुर्वणयैव देवैस्तेषां विहितत्वादिति । एतच्चायुक्तम् । यतो न तत्र विकुर्वितान्येव पुष्पाणि भवन्ति, जलजस्थलजानामपि कुसुमानां सम्भवात्, न चैतदनार्षम्—

---

१ यथा—

शतं प्रमार्जने पुण्यं सहस्रं च विलेपने ।
शतसहस्रं मालायां अनन्तं गीतवादने ॥

२ समवसरणभूमिकायाम् । ३ पुष्पवर्दलं विकुर्वन्ति । ४ 'विचर्चकृता' इति क-पाठः । ५ अधर्व कुर्वन्ति ।

[1]"विंटट्ठाइं सुरभिं, जलथलयं दिव्वकुसुमनीहारिं ।
पय(इ)रिंति समंतेणं, दसद्धवण्णं कुसुमवासं(वुट्ठिं ?) ॥ १ ॥"—आर्या

(इ)ति सिद्धान्तवचनात् । एवं श्रुत्वाऽपरे संहृदयंमन्या उत्तरयन्ति—यत्र व्रतिनस्तिष्ठन्ति, न तत्र देशे देवाः पुष्पाणि किरन्तीति । एतदप्युत्तराभासम् । न खलु तपोधनैः काष्ठीभूतावस्थामालम्ब्य तत्रैव देशेऽवश्यं स्थातव्यं, प्रयोजने गमनागमनादेरपि तत्र सम्भवादिति । तस्मान्निखिलगीतार्थसम्मतमिदमुत्तरमत्र दीयते । यथैकयोजनमात्रायां समवसरणधरणावपरिमितसुरासुरादिलोकसंमर्देऽपि न परस्परमाबाधा काचित् तथा तेषामाजानुप्रमाणक्षिप्तानाममन्दमकरन्दसम्पत्सम्पादितानन्दमन्दारमुचु(मच)कुन्दकुमुदकमलदलमुकुलमालतीविकचविचाकिलप्रमुखकुसुमसमूहानामप्युपरि संचरिष्णौ स्थास्नौ च मुनिनिकरे विविधजननिचये च न काचिदाबाधा, प्रत्युत सुधारससिच्यमानानामिव बहुतरः समुल्लासस्तेषाम[3]ौपनिपद्यते, अचिन्तनीयनिरुपमतीर्थकरप्रभावोज्जृम्भमाणप्रसादादेवेति" प्रवचनसारोद्धार(द्वा० ३९)वृत्तौ श्रीसिद्धसेनसूरिविरचितायां लिखितम् । इति चर्चा सम्पूर्णा ॥

अथात्र द्रव्यस्तवोपरि दृष्टान्तः—'मरुस्थल्यां' 'धूलिया'ऽभिधाने ग्रामे एकः शकडनामा कौटुम्बिको वसति स्म । स प्रावृषि हलं वाहयति तदा 'ढेलड'नामतस्तत्क्षेत्रात् जिनबिम्बं प्रकटितं दृष्ट्वा तेन मूर्खशेखरेण चिन्तितम्—किमयं शिशुक्रीडनको ढेलडकः ? परं नवीनो दृश्यते, तेन मदीयग्रामे किञ्चिदेव स्थानं नास्ति, ततोऽयमेव ढेलडकदेवोऽस्तु इति कृत्वा तत्र समीपस्थजीर्णशून्यलघुदेवकुलिकायां स्थापितः । यदा हलिको भुङ्क्ते तदा पूर्वं तं निमन्त्रयते । कतिपुचित् दिनेषु गच्छत्सु कश्चित् साधुर्मार्गवशात् तत्क्षेत्रतरुच्छायामासीनः तदा हलिना नेमां हां इति प्रत्युक्ते मुनिना धर्मलाभोऽभाणि । हली तु भोजनार्थमुपविष्टः । पुत्रेण ढेलडकदेवमानाय्य वक्ति स—भो ढेलडक! देव! करां थांहरी सेव ।

वाँटी पी(खी)च सालणो, वीच(इं) रच्छा(ब्बा) त्रास
घइसां छासि आरोगो, थांहरो स्वर्गनिवास"

इत्युक्त्वा भोजनं कृतवान् । यतिना प्रोक्तम्—किमिदम् ? । तेनोक्तम्—क्षेत्रात् प्रकटितो ढेलडकोऽयं देवः । मुनिना चिन्तितम्—अहो ! अयं जडबुद्धिः । असौ सर्वथा सत्यं कथ्यते तदा अयं न मन्यते, यतो मूढः शनैः शनैर्मार्गमायाति । ततो मुनिर्हलिनमाह—हे हलिन् ! मया विज्ञातोऽयं देवः, शृणु—त्रिभुवनभूषणं 'यादव'वंशशिरोरत्नं शङ्खलाञ्छनः ब्रह्मचारि-

---

१ छाया—

वृत्तस्थायिनीं सुरभिं जलस्थलजानां दिव्यकुसुम(गन्ध)निर्हारिणीम् ।
प्रकिरन्ति समन्ततो दशार्धवर्णां कुसुमवृष्टिम् ॥

२ आत्मान सहृदयं—पण्डित मन्यन्ते ते, पण्डिताभिमानिन. । ३ अतिशयेन भवति । ४ 'नमाम्यहम्' इति तात्पर्यम् । ५ तात्पर्यम्—कुर्वे तव सेवाम् ।

६ तात्पर्यम्—

वाटी-पीच-सालणो (इति मारवाडीनाम्नो भोज्यपदार्थान्) मध्ये रब्बां (राब इति गूर्जरे) त्रासे (पात्रविशेषे) घइसां (घेंस इति गूर्जरे) तक्र (च) भुङ्क्ष्व, तव स्वर्गे निवास. ।

चूडामणि' महान् देव ईश्वरो वर्तते, यदि स्नात्वा शुचिर्भूत्वा आशातनां मुक्त्वा सेव्यते तदाऽस्तु मनोवाञ्छितं भवति । तेनोक्तम्—एवं करिष्यामि, परं सर्वे देवाः सस्त्रीकाः सायुधा अन्यत्र विलोक्यन्ते, मम देवोऽयं तद्विपरीत इति हीनत्वं दृश्यते । ततोऽन्यथा ढेलडिकया उद्वाह्यते तदा वरम् । यतः—

"अपत्या१ऽन्न(न्य?)शस्त्रभूषा २, भोगा ३ स्वजनगौरवम् ४ ।
गृहकर्मप्रयोगश्च ५, स्त्रीवक्त्यां फलपञ्चकम् ॥ १ ॥"—अनु०

अस्मदादिवत् । तदा मुनिना चिन्तितम्, यतः—

"श्यामश्वेतारुणाङ्गाः खेलधरणिधरोत्फुल्लपद्मोरगस्था
गौरी-मा-सावित्र्युपेता रथधरणपिनाकोग्रशुक्लारखड्गाः ।
देवा त्रिद्व्यष्टनेत्रा जगदवनसमुच्छेदनोत्पादिदक्षाः
प्रीता वः पान्तु नित्यं हरि-हर विधयस्तार्क्ष्यगोहंसपत्राः ॥१॥"—स्रग्धरा

इति । जिनस्तुतयः—

"प्रशमरसनिमग्नं दृष्टियुग्मं प्रसन्नं
वदनकमलमङ्कः कामिनीसङ्गशून्यः ।
करयुगमपि यत्ते शस्त्रसम्बन्धवन्ध्यं
तदसि जगति देवो वीतरागस्त्वमेव ॥ १ ॥"—मालिनी

परं मूर्खस्त्वनुकूलतया ग्राह्यते इति विचार्य मुनिना प्रोक्तम्—हे कार्पुक! मम द्वे स्त्रियौ स्तः । के ते? एका राजीमती, अपरा केवलज्ञानलक्ष्मीः । कुत्र ते स्तः? राजीमती त्वधुना निर्वाण नगरे मुक्तिपतिगृहेऽत्यन्तसुखिनी स्थिताऽस्ति । अपरा तस्य समीपे प्रच्छन्ना वर्तते, यथा महादेवस्य पार्वती प्रत्यक्षा, गङ्गा तु न । यतः—

"પાર્વતીનઇ ઈશ કલહ લગ્ગો રતિકારણુ,
જટામુગટમાંહિ ગંગગૌરી અર્ધાંગનિવારણુ,
પ્રગટ કરઇ નારદ તામ ઉમયા કોપીજ્જઇ,
રે ભરડા ભગવાન! વયણુ તવ કવણુ પતીજ્જઇ,
શિવસ્યું શક્તિ રુસી રહી હર મનાવા ટલવલઇ,
શશીસહીત ઈશ પાગ્ગે પડઇ, તામ મન્નને ઉર મિલઇ ॥૧॥"

---

१ पद्मौघ—पद्मैव—विकसितपद्मासनैः । २ लक्ष्मी-पार्वती-सावित्रीसमेताः । ३ चक्र-धनुर्व्योममुद्गरायुधाः । ४ गरुड-वृषभ-हंसवाहनाः । ५ मोक्षपुरि । ६ मुक्तिकाः—सिद्धाः—परमेश्वराः स एव वल्लभः तस्य गेहे ।

* तात्पर्यम्—
पार्वत्या ईशेन सह कलहो लग्नः (जातः) रतिकारणं जटामुकुटे गङ्गागौरी अर्धाङ्गनिवारणार्थं प्रकटयति नारदः । तदा उमा कुप्यति—हे भरडक! भगवन्! वचनं तव केन प्रतीयते? । शिवेन शक्तिः (उमा) रुष्टा जाता । हरो मनोवाञ्छनार्थं त्वरयति शशिसहित ईशः (पार्वत्याः) पादे पतति तदा मनसा उरसा मिलति ।

इति । हे हलिन्! पुनरस्य सृष्टिः द्वादशाङ्गी वर्तते । गणेश्वरा गणाः चतुर्विधसङ्घश्च वर्तते । [1]खंति-अज्जव,' इत्यादिकाः [2]दश पुत्रा वर्तन्ते, परं स्कन्द-गणेशवत् कदाचिदपि परस्परं कलहं न कुर्वन्ति । यदाह—

"हे [3]हेरम्ब! किमम्ब! रोदिषि चिरं? कर्णौ लुठत्यग्निभूः
किं ते स्कन्द! विचेष्टितं? मम पुरा सङ्ख्या कृता चक्षुषाम् ।
नैतत् तेऽप्युचितं गजास्य! चरितं, नासां मिमीतेऽम्ब! मे
मा मा मेति सुतावुदीर्य हसती पायाच्चिरं पार्वती ॥ १ ॥"—शार्दूल०

[5]પાર્વતી કહે છઇ—હે હેરમ્બ!—હે ગણેશ! તુ કાં રૂઇ છઇ? માજી! સ્કન્દ માહારા કાનને ફડફડાવઇ છઇ । પાર્વતી કહઇ—રે સ્કન્દ! એ ચેષ્ટાં સ્યું કરઇ છઈ? તિહારે સ્કન્દ કહઇ છઇ—માહરી આંખી પહિલી ઇણિં કિમ ગણી? પુનઃ પાર્વતી કહઇ છઇ—હે ગજાસ્ય! તુજને આંખિ ગણવી નહી. તિહારે ગણેશ કહઇ છઇ—માહરી શૂંડી ઇણિં કિમ માપી? તિહારેં પાર્વતી કહઇ—મા મા મા ઇમ બેટાને હસતી થકી વારઇ છઇ (તે) તુમનેં રાખુ ઇતિ ।

अथ हे हालिक! अस्य अष्ट प्रवचनमातरो वर्तन्ते । पुनर्दया पुत्री सर्वजीवहितकारिणी वर्तते । पुनः [6]पुर-काम-काला अरयो वर्तन्ते । पुनरस्य सर्वातिशायिनी ऋद्धिर्वर्तते । पुनः अमृतास्वाददायिनी [7]शुद्धा गजभिक्षा वर्तते, न पुनर्दुष्पूरोदरा भिक्षा पार्वतीपतिवत् । यदाह—

"कृष्णात् प्रार्थय मेदिनीं [8]धनपतेर्बीजं [9]बलाल्लाङ्गलं
[10]कीनाशान्महिषं वृषोऽस्ति भवतः [11]शूलं त्रिशूलादपि ।
शक्ताऽहं तव भक्तपानकरणे स्कन्दश्च गोरक्षणे
दग्धाऽहं हर! भिक्षया कुरु कृषिं गौर्या गिरः पान्तु वः ॥ १ ॥"—शार्दूल०

इति । ईशेन प्रोक्तम्—हे षण्मुख! त्वं पृथग् भूत्वा स्वयं स्वोदरपूर्तिं येन केनोपायेन कुरु । अहं तु तव जनन्या अगजायाः बृहदुदरकन्दराया निर्वाहं कष्टेन करिष्यामि । यतः स्वस्त्रीत्यजनं लोके निन्द्यमस्ति । अतोऽन्योपायमलभमानः कुमारो ब्रह्मचारी जात इति[12] प्रबोधचिन्तामणौ (अ० प, श्लो०) अपरश्चायं देवो जन्मजरादिविमुक्तः, अपरो न, यतः—

"ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
[13]शम्भुर्येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ १ ॥"—शार्दूल०

१ क्षान्त्यार्जवेत्यादिक' । २ क्षमा-मार्दवा-ऽऽर्जव-शौच सत्य-संयम-तपश्चर्या-त्यागा-ऽकिञ्चनत्व-ब्रह्मचर्याणि । ३ गणेश! । ४ कार्तिकेय । ५ एतत्तात्पर्यं तु उपरितनपद्यगतम् । ६ शरीरकन्दर्पयमा । ७ द्विचत्वारिंशद्-दोषवर्जिता । ८ कुबेरात् । ९ बलरामात् हलम् । १० यमात् । ११ 'फाल' इति पाठ' प्रबोधचिन्तामणौ (अ० ५, श्लो० ३३९) । १२ अय तु भावार्थ प्रबोध० (अ० ५, श्लो० ३४०-३४४) । १३ महर्षिश्री-भर्तृहरिकृते नीतिशतके (श्लो० ९२) तु 'रुद्रो येन सेवित' इति पाठः ।

अतो मुनिः प्राह—हे हलिन्! निष्कलङ्कोऽयं केवलकल्पदेवो जिनो वीतरागः सदा त्वया एकाग्रमनसा सेवनीयः जलादिपूजया, युगन्धर्यादिधान्यकणाः शुद्धा अग्रे मोच्याः । त्रिसन्ध्य मो(?)-त्करर्षं कर्तव्यम् । ततो मुनिवचसा तेन नित्यमेवं कर्तव्यमित्यभिग्रहो गृहीतः । मुनिस्त्वन्यत्र विजहार । अथो हली प्रभुसेवनमेव कुर्वाण एकदा राजदेयमागदेयार्थं रुद्धः । एकविंशतिर्दिवसा जाताः । सेवां विना जलमपि तेन न गृहीतम् । ततो ग्रामाधीशेन मुक्तः । द्वाविंशतितमे दिवसे स्फुट् क्षुधातुरोऽपि श्रद्धाभक्तिवशतः प्रथमं प्रभुसेवनाय प्रभुसमीपमागतः । तस्मिन्नेवावसरेऽधिष्ठायिकयाऽम्बिकया तद्भक्तिशक्तिं विलोक्य जिनबिम्बं नवीनघुसृणविलेपनपुष्पधूपधूपालङ्कृतं कृतम् । ततः स कृषीवलस्तद् बिम्बं तथाविधं दृष्ट्वाऽनुभूतपूर्वमिति चिन्त्यमानो जातजातिस्मृतिः दृष्टभवत्रयः (जातः), तद्यथा—पूर्वं 'अवन्त्यां' पुर्यां दयालाभिधो धनी जैनः श्रावको नित्यं जिनपूजां करोति साधून् प्रतिलाभयति । सुव्यवहारेण कालान्तरे निष्कषायगुरोः समीपे दीक्षां गृहीत्वा सिद्धान्तमधीत्य प्रान्ते चारित्रं विराध्य मृत्वा ज्योतिष्कसुरो भूत्वा च्युतोऽत्र कौटुम्बिको जातोऽहम् । अहो! कर्मणां गतिः । ततो जिनस्वरूपं ध्यायन् क्षपकश्रेणिमारूढः केवलज्ञानं प्राप । सन्निहितदेवैः कृतकनककमलारूढो भव्येभ्यो देशनां ददौ । तत्रान्यत्र च बहून् भव्यजीवान् प्रतिबोध्य शिवं ययाविति ग्रन्थस्तवाधिकारे सगड(शकट?)कथानकं समाप्तम् । इत्यष्टादशवृत्तार्थः ॥ १८ ॥



वृत्तम्—

नित्यं प्रसन्नवदनां महितां सुजैनीं
द्रव्यैः शुभै रुचिल! कल्पलतोपमानाम् ।
यः सेवते न मलिनो ह्यधनो भवेत् स
किं वा विबोधमुपयाति न जीवलोकः ? ॥ १९ ॥

व्याख्या—हे 'रुचिल!' रुचिं—धर्माभिलाषं लाति—गृह्णाति इति हे धर्माभिलाषिन्! यः प्राणी नित्यं सुजैनीं—ध्यानादिदोषरहितां शुभजिनप्रतिमां द्रव्यैः—चन्दनादिभिः महितां—पूजितां सेवते—ध्यानाभ्यं करोति । कथंभूतैः द्रव्यैः? 'शुभैः' निरुपमघुसृणपुष्पादिभिः । कथंभूतां सुजैनीम्? प्रसन्नवदनां—हसन्मुखपङ्कजाम् । पुनः कथं० सुजैनीं? कल्पलतोपमानां—सेवकानां मनोवाञ्छितदाने कल्पवृक्षसमानाम् । हि इति निश्चितं स जीवलोकः—स संसारी प्राणी मलिनो न भवेत्, अधनो न भवेत् । वा—अथवा स जीवलोकः विबोधं किं न उपयाति? अपि तु प्रतिबोधं प्राप्नोत्येव । अथ प्रतिलोमार्थमाह—यः जीवलोकः सुजैनीं न सेवते स जीवलोको मलिनः—सपापो भवेत्

१ धान्यविशेषं इत्यर्थान्तरे ।

अधनो–निर्धनो भवेत् । वा–पुनः सः अविबोधं–अज्ञानं किं न (उप)याति ? अपि तु [1]प्राप्नोत्येव इति । सुप्रतिमामिति कोऽर्थः ? तदाह—

[2]ગૃહસ્થૈ નિજ ઘરેં એક અંગુલથી માંડીને ૧૨ બાર અંગુલ તાંઇ પ્રતિમા ઘરે પૂજવી. તદુપરાંતિ ચૈત્યે પૂજાઇં અને ચૈત્યેં બારાંગુલથી લઘુ ન પૂજાઇ. લોહ–પાષાણ–કાષ્ટ–માટી–દાંત–વલાંકિત–ગોછાણ એતલાંની પ્રતિમા ઘરે ન પૂજીઇ. પુન. વિખણ્ડિત વાંકાં પરિકરરહિત પ્રમાણ થકી અધિક તથા હીન વિષમાંગ અપ્રતિષ્ઠિત દુષ્ટ મલિન વ્યંગ એહવાં બિંબ ઘરે ન પૂજીઇ, ચૈત્યેં પૂજાઇં. પુન· વલી ધાતુલેપ્યમય બિંબ વ્યંગ હુઇ તો ફિરી સમરાઇ, પણી તેહવી ફિરી પ્રતિષ્ઠા કર્યાં વિના પૂજાઇ નહી. પુનઃ વલી કાષ્ટ પાષાણની પ્રતિમા વ્યંગ થઇ હુઇ ફિરી સમગવવી નહી. પુનર્વિશેષ.–જે બિંબ મહાપુરુષે થાપ્યુ હુઇ અને જે શત વર્ષ ઉપરાંત કાળનું હુઇ તે વ્યંગ થયુ હુઇ તો ચૈત્યેં પૂજાઇ, પણિ ઘરે નહી પૂજાઇ. પુનર્વિશેષ – સંસ્કાર સમગાવવઇં પ્રમુખ દુષ્ટ મ્લેચ્છ માતંગાદિકને ફરસવઇ તોલવઇ પરીક્ષા કરવઇ ચૌરાદિકનેં હરવઇ ફિરી બિંબ પ્રતિષ્ઠા પામઇ । इति बिम्बशुद्धिः ॥ आचारदिनकरे ( १४२ तमे पत्राङ्के ) [3]श्लोकाः सन्ति ॥

---

१ 'आप्नोत्येव' इति क–पाठ ।

२ तात्पर्यम्—

गृहस्थो निजगृहे एकाङ्गुलमितां तथा द्वादशाङ्गुलमितान्तां प्रतिमां पूजयेत् । ततोऽधिकाङ्गुलमितां चैत्ये पूजयेत्, द्वादशाङ्गुलेभ्यो लघुं न पूजयेत् । लोह–पाषाण–काष्ट–मृत्तिका–दन्त–वलाङ्कित( द्रव्यविशेष )––गोमयैतावता प्रतिमां गृहे न पूजयेत् । पुनर्विखण्डित वक्र परिकररहित प्रमाणतोऽधिकन्यूनं विषमाङ्ग अप्रतिष्ठितं दुष्ट मलिन ( वा ) व्यङ्ग बिम्ब गृहे न पूजयेत्, चैत्ये पूजयेत । पुनर्धातुलेप्यमये बिम्बे व्यङ्गे सति समीकुर्यात, परन्तु तत् पुन· प्रतिष्ठानन्तरेण न पूजयेत्, पुनः काष्टपाषाणप्रतिमायां तु व्यङ्गायां सत्यां सा पुनर्न समीकार्या । पुनर्विशेष —यद् बिम्ब महापुरुषैः स्थापित वर्षशताधिकालिक सत् व्यङ्गं यदि भवति तर्हि तच्चैत्ये पूजयेत्, पर गृहे न पूजयेत् । पुनर्विशेषः–संस्कार-समीकरणादिकर्मणि म्लेच्छ-मातङ्गादिस्पर्शे तोलने परीक्षाकरणे चौराद्यपहारे च बिम्ब पुन प्रतिष्ठामर्हति ॥

३ ते च यथा—

विषमैरङ्गुलैर्हस्तैः, कार्यं बिम्ब न तत्क्वचित् ।
द्वादशाङ्गुलतो हीनं, बिम्ब चैत्ये न धारयेत् ॥ १ ॥
ततस्त्वधिकमागारे, सुखाकाङ्क्षी न पूजयेत् ।
लोहाश्मकाष्टमृद्दन्त–चित्रगोविड्मयानि च ॥ २ ॥
बिम्बानि कुशलाकाङ्क्षी, न गृहे पूजयेत् क्वचित् ।
खण्डिताङ्गानि वक्राणि, परिवारोज्झितानि च ॥ ३ ॥
प्रमाणाधिकहीनानि, विषमाङ्गस्थितीनि च ।
अप्रतिष्ठानि दुष्टानि, बिम्बानि मलिनानि च ॥ ४ ॥
चैत्ये गृहे न धार्याणि, बिम्बानि सुविचक्षणैः ।
धातुलेप्यमयं सर्वं, व्यङ्गं संस्कारमर्हति ॥ ५ ॥

अतो मुनि: प्राह–हे हलिन्! निष्कलङ्कोऽस्य ढेलडकदेवो जिनो वीतरागः सदा त्वया एकाग्र मनसा सेवनीयः जलादिपूजया, युगन्धर्यादिधान्यकणाः शुद्धा अग्रे मोच्याः। त्रिसन्ध्यं मो(?)-स्करणं कर्तव्यम्। ततो मुनिवचसा तेन नित्यमेवं कर्तव्यमित्यभिग्रहो गृहीतः। मुनिस्त्वन्यत्र विजहार। अथो हली प्रभुसेवनमेवं कुर्वाण एकदा राजदेयभागदेयार्थं रुद्धः। एकविंशतिर्दिवसा जाताः। सेवां विना जलमपि तेन न गृहीतम्। ततो ग्रामाधीशेन मुक्तः। द्वाविंशतितमे दिवसे तृद्-क्षुधातुरोऽपि श्रद्धाभक्तिवशतः प्रथमं प्रभुसेवनार्थं प्रभुसमीपमागतः। तस्मिन्नेवावसरेऽधिष्ठायिकयाऽम्बिकया तन्नरकिञ्चित्किं विलोक्य जिनबिम्बं नवीनघुसृणविलेपनपुष्पधूपपालङ्कृतं कृतम्। ततः स कृषीवलस्तद् बिम्बं तथाविधं दृष्ट्वाऽनुभूतपूर्वमिति चिन्त्यमानो जातजातिस्मृतिः स्पष्टमवत्रयः (जातः), तद्यथा–पूर्वं मवन्त्यां पुर्यां दयालाभिधो धनी जैनः श्रावको नित्यं जिनपूजां करोति साधून् प्रतिलाभयति। शुद्धाहारेण कालान्तरे निष्कषायगुरोः समीपे दीक्षां गृहीत्वा सिद्धान्तमधीत्य प्रान्ते चारित्रं विराध्य मृत्वा ज्योतिष्कसुरो भूत्वा च्युतोऽत्र कौटुम्बिको जातोऽहम्। अहो! कर्मणां गतिः। ततो जिनस्वरूपं ध्यायन् क्षपकश्रेणिमारूढः केवलज्ञानं प्राप। सन्निहितदेवैः कृतकनककमलारूढो भव्येभ्यो देशनां ददौ। ततोऽन्यत्र च बहून् भव्यजीवान् प्रतिबोध्य शिवं ययाविति द्रव्यस्तवाधिकारे सगड(शकट?)कथानकं समाप्तम्। इत्यष्टादश वृत्तार्थः ॥ १८ ॥

* * * *

सम्प्रत्–

> नित्यं प्रसन्नवदनां महितां सुजैनीं
> द्रव्यैः शुभै रुचिल! कल्पलतोपमानाम्।
> यः सेवते न मलिनो ह्यधनो भवेत् स
> किं वा विबोधमुपयाति न जीवलोकः? ॥ १९ ॥

व्याख्या–हे 'रुचिल!' रुचिं–धर्माभिलाषं लाति–गृह्णाति इति हे धर्माभिलाषिन्! यः प्राणी नित्यं सुजैनीं–भ्रष्टादिदोषरहितां शुभजिनप्रतिमां द्रव्यैः–चन्दनादिभिः महितां–पूजितां सेवते–ध्यानाश्रयं करोति। कथंभूतैः द्रव्यैः? 'शुभैः' निर्दूषणघुसृणपुष्पादिभिः। कथंभूतां सुजैनीम्? प्रसन्नवदनां–हसन्मुखपङ्कजाम्। पुनः कथं० सुजैनीं? कल्पलतोपमानां–सेवकानां मनोवाञ्छितदाने कल्पवृक्षसमानाम्। हि इति निश्चितं स जीवलोकः–स संसारी प्राणी मलिनो न भवेत्, अधनो न भवेत्। वा–अथवा स जीवलोकः विबोधं किं न उपयाति? अपि तु प्रतिबोधं प्राप्नोत्येव। अथ प्रतिलोमार्थमाह–यः जीवलोकः सुजैनीं न सेवते स जीवलोको मलिनः–सपापो भवेद्

१ 'बाधिबोधं' इत्यपाठान्तर।

ज्ञानं च दर्शनमथो चरणं विचिन्त्य
पुञ्जत्रयं च पुरतः प्रविधाय भक्त्या।
चोक्षाक्षतैः कणगणैरपरैरपीह
श्रीमन्तमादिपुरुषं जिनमर्चयामि ॥ ५ ॥ अक्षताः ॥

सन्नालिकेर-पनसा-ऽमलबीजपूर-
जम्बीर-पूग-सहकारमुखैः फलैस्तैः।
स्वर्गाद्यनल्पफलदः परमप्रमोदाद्
देवाधिदेवमसमप्रशमं महामि ॥ ६ ॥ फलम् ॥

सन्मोदकैर्वटक-मण्डक-शालि-दालि-
मुख्यैरसङ्ख्यरसशालिभिरत्र भोज्यैः।
क्षुत्तृड्व्यथाविरहितं स्वहिताय नित्यं
तीर्थाधिराजमहमादरतो यजामि ॥ ७ ॥ भोज्यम् ॥

विध्या(ध्मा?)तपापपटलस्य सदोदितस्य
विश्वावलोकनकलाकलितस्य भक्त्या।
उद्द्योतयामि पुरतो जिननायकस्य
दीपं तमःप्रशमनाय शमाम्बुराशेः ॥ ८ ॥ दीपः ॥

तीर्थोदकैर्धुतमलैरमलस्वभावं
शश्वन्नदी-नद-सरोवर-सागरोत्थैः।
दुर्वारमार-मद-मोहमहाहिताक्ष्र्य
संसारतापशमनाय जिनं यजामि ॥ ९ ॥ जलम् ॥

पूजाष्टकश्रु(स्तु?)तिमिमामसमामधीत्य
योऽनेन चारुविधिना वितनोति पूजाम्।
भुक्त्वा नरामरसुखान्यविखण्डिताङ्गं
धन्यः स वासमचिराल्लभते शिवेऽपि ॥ १० ॥"

इति श्रावकाचारात् पूजाष्टकं लिखितम् ॥

अथ जिनभक्तिकारकाणां सुकृतचिह्नानि दर्शयति—

"तिलकयुतललाटभ्राजमानाः स्वभाग्या-
ङ्कुरमिव समुदी(?)तं दर्शयन्ते जनानाम्।

अथ पुष्पशुद्धिः—

"नैकं पुष्पं द्विधा कुर्यात्—न छिन्द्यात् कलिकामपि ।
पत्रपल्लवभेदेन, हत्यावत् पातकं भवेत् ॥ १ ॥—अनु०
हस्तात् प्रस्खलितं पुष्पं, लग्नं पादेऽथवा क्षितौ ।
शीर्षोपरिगतं यच्च, तत्पूजार्हं न कर्हिचित् ॥ २ ॥—अनु०
स्पृष्टं नीचजनैर्दुष्टं, कीटैः कुवसनैर्धृतम् ।
निर्गन्धमुग्रगन्धं वा, तत् त्याज्यं कुसुमं समम् ॥ ३ ॥"—अनु०

अथात्र सर्वशुद्ध्यर्थं पूजाष्टकमाह—

"भृङ्गारानीतनीरेण, संस्नाप्याङ्गं जिनेशितुः ।
रूक्षीकृत्य सुवस्त्रेण, पूजां कुर्यात् ततोऽष्टधा ॥ १ ॥—अनु०
सचन्दनेन घनसारविमिश्रितेन
कस्तूरिकाद्रवयुतेन मनोहरेण ।
रागादिदोषरहितं महितं सुरेन्द्रैः
श्रीमज्जिनं त्रिजगतीपतिमर्चयामि ॥ २ ॥ चन्दनम् ॥
जाती-जपा-बकुल-चम्पक-पाटलाद्यैः
मन्दार-कुन्द-शतपत्र-वरारविन्दैः ।
संसारनाशकरणं करुणाप्रधानं
पुष्पैः परैरपि जिनेन्द्रमहं यजामि ॥ ३ ॥ पुष्पम् ॥
कृष्णागुरुप्रचितं सितया समेतं
कर्पूरपूरसहितं विहितं सुयत्नात् ।
धूपं जिनेन्द्रपुरतो गुरुलोपतोऽहं
भक्त्या क्षिपामि निजदुष्कृतनाशनाय ॥ ४ ॥ धूपः ॥

---

काष्ठपाषाणनिष्पन्नं संस्कारार्हं पुनर्महि ।
तच्च जर्जरताकीर्णं तच्च व्यापितमुत्तमैः ॥ ६ ॥
तद् व्यङ्गमपि पूज्यं स्यात्, बिम्बं तन्निष्फलं नहि ।
तच्च भार्ये परं चक्षुर् नेत्रे पूज्यं न पण्डितैः ॥ ७ ॥—चतुर्भिः कलापकम्
प्रतिष्ठिते पुनर्बिम्बे संस्कारः स्यात् कर्हिचित् ।
संस्कारे च कृते कार्या प्रतिष्ठा तादृशी पुनः ॥ ८ ॥"

यदुक्तम्—"संस्कृते तुलिते चैव दुष्टस्पृष्टे परीक्षिते ।
हृते बिम्बे च लिङ्गे च प्रतिष्ठा पुनरेव हि ॥ १ ॥

१ 'यजार्हं' इति क-पाठान्तरम् । २ अतः परं वर्णानि पद्यानि वसन्ततिलकाच्छन्दसि वर्तन्ते ।
३ कर्पूरपुटेन । ४ आशया । ५ शर्करया ।

ज्ञानं च दर्शनमथो चरणं विचिन्त्य
पुञ्जत्रयं च पुरतः प्रविधाय भक्त्या ।
चोक्षाक्षतैः कणगणैरपरैरपीह
श्रीमन्तमादिपुरुषं जिनमर्चयामि ॥ ५ ॥ अक्षताः ॥

सन्नालिकेर-पनसा-ऽमलबीजपूर-
जम्बीर-पूग-सहकारमुखैः फलैस्तैः ।
स्वर्गाद्यनल्पफलदः परमप्रमोदाद्
देवाधिदेवमसमप्रशमं महामि ॥ ६ ॥ फलम् ॥

सन्मोदकैर्वटक-मण्डक-शालि-दालि-
मुख्यैरसङ्ख्यरसशालिभिरत्र भोज्यैः ।
क्षुत्तृड्व्यथाविरहितं स्वहिताय नित्यं
तीर्थाधिराजमहमादरतो यजामि ॥ ७ ॥ भोज्यम् ॥

विध्या(ध्मा ?)तपापपटलस्य सदोदितस्य
विश्वावलोकनकलाकलितस्य भक्त्या ।
उद्द्योतयामि पुरतो जिननायकस्य
दीपं तमःप्रशमनाय शमाम्बुराशेः ॥ ८ ॥ दीपः ॥

तीर्थोदकैर्धुतमलैरमलस्वभावं
शश्वन्नदी नद-सरोवर-सागरोत्थैः ।
दुर्वारमार-मद-मोहमहाहिताक्ष्र्यं
संसारतापशमनाय जिनं यजामि ॥ ९ ॥ जलम् ॥

पूजाष्टकश्रु(स्तु ?)तिमिमामसमामधीत्य
योऽनेन चारुविधिना वितनोति पूजाम् ।
भुक्त्वा नरामरसुखान्यविखण्डिताङ्गं
धन्यः स वासमचिराल्लभते शिवेऽपि ॥ १० ॥"

इति श्रावकाचारात् पूजाष्टकं लिखितम् ॥

अथ जिनभक्तिकारकाणां सुकृतचिह्नानि दर्शयति—

"तिलकयुतललाटभ्राजमानाः स्वभाग्या-
ङ्कुरमिव समुदी(?)तं दर्शयन्ते जनानाम् ।

स्फुरदगुरुधूमालीसौरभोद्गारसाराः
कृतजिनवरपूजा देवरूपा महेभ्या' ॥ १ ॥—मालिनी
स्पृशति तिलकशून्यं नैव लक्ष्मीर्ललाटं
मुखमकृतमिव श्री' धौतसत्कारहीनम् ।
अकलितमजनानां यत्कलान्येव यस्मा
प्यपि च शिरसि शुभ्रं छत्रमप्युग्रमार' ॥ २ ॥"—मालिनी

इति प्रतिमाशतकवृत्तौ । स्थापनामाक्तितो धमयन्त्या कष्टं निवारितम् । लोकेऽपि (एक)-लव्यनाम्ना वनेचरेण कृता मृण्मयी द्रोणाचार्यमूर्तिः सम्यक् सेविता च धनुर्विद्यासिद्धिकरी जाता ।

इति एकोनविंशतितमवृत्तसार्थ' ॥ १९ ॥

* * * *

अथ चैत्यमाश्रित्याह—

वृत्तम्—

जैनालया निजयशोनिचया इवैते
ये' सम्प्रतिप्रतिमराजगणे सिताभा' ।
उच्चै' कृता शुचिरुचेऽद्भुतमत्र तैश्च
गच्छन्ति नूनमध एव हि बन्धनानि ॥ २० ॥

व्याख्या—हे 'शुचिरुचे!' शुचिः—निर्मला रुचिः—धर्मेच्छा यस्य स तस्य सम्बोधने । जिनस्य इमे जैनाः, जैनाश्च ते आलयाश्च जैनालया' ये' सम्प्रतिप्रतिमराजगणैः सम्प्रतिनाम्ना भूपेन प्रतिमै'—सदृशैः च तै' राजगणै'—कुमारपालादिनृपसमूहैः उच्चै' कृता' अत्र कारये कार्योपचारात् कारिता इत्यर्थ' । कथंभूता जैनालया ? सिताभा'—सुधाभिः श्वेतकान्तयः । उत्प्रे-क्ष्यते—एते निजयशोनिचया'—मूर्तिमत्स्वकीयकीर्तिपुञ्जाः नूनं—निश्चितं अत्र एतत् अद्भुतं—आश्चर्यं वर्तते । हि—यस्मात् कारणात् तैः राजगणैः बन्धनानि—कर्मबन्धनानि अध एव गच्छन्ति । यन्नन्त्यं पदम् । एवंविधानि कृतानि । अत्र कर्मोक्तिः अर्थवशात् विभक्तिविपरिणामः । यत्र गृहाद्यारम्भाः क्रियन्ते तत्र उच्चैः उच्चैः काष्ठबागलबन्धनाः क्रियन्ते काष्ठैश्चात्र स्थित्वा उपरितनं कार्यं क्रियते । अत्र तु विपरीतम् । अत आश्चर्यम् । तेषां पापबन्धास्त्रुटिता इत्यर्थः । अत्र चशब्दात् तैः जिना उच्चैः कृत्वा कर्मबन्धनानि अध एव गच्छन्ति—प्रयान्ति । अत्र फलोक्ति' । प्राणिनामिति शेष इत्यपि शब्दार्थः । यतः—

---

१ कुसुमश्रेणी ।

"यो जैनमन्दिरमुदारविशुद्धबुद्धि-
दर्विष्टकोपलतृणैः कुरुते स्वशक्त्या ।
रत्तांशुकर्बुरमनिन्द्यवधूसमेत-
माप्नोति कल्पभवनं भुवने स धन्यः ॥ १ ॥–वसन्त०

जिनभवनं जिनबिम्बं, जिनपूजां जिनमतं च यः कुर्यात् ।
तस्य नरामरशिवसुख–फलानि करपल्लवस्थानि ॥ २ ॥–आर्या

सन्मृत्तिकामलशिलातलरूप्यदारु-
सौवर्णरत्नमणिचन्दनचारु बिम्बम् ।
कुर्वन्ति जैनमिह ये स्वधनानुरूपं
ते प्राप्नुवन्ति नृसुरेषु महासुखानि ॥ ३ ॥–वसन्त०

मट्टीमयं च बिंबं, तिणकट्ठीरेहिं कारए भवणं ।
कासस्स य कुसुमेहिं, पूइज्जंतं करे मुत्तं ॥ ४ ॥"–आर्या

इति विंशतितमवृत्तस्यार्थः ॥ २० ॥

✻ ✻ ✻ ✻

सूत्रम्—

हे आस्तिकास्त्यजत नास्तिकतां नितान्तं
चित्तोन्नतिं भजत लुम्पकतां लुनीत ।
चैत्यं विधत्त शृणुत प्रविलोकय तत् सद्
भव्या व्रजन्ति तरसाऽप्यजरामरत्वम् ॥ २१ ॥

व्याख्या—हे 'आस्तिकाः!' अस्ति परलोकः पुण्यं पापं चेति मन्यन्ते ते हे श्रद्धालवः! यूयं नास्तिकतां नितान्तं–अत्यन्तं त्यजत–दूरीकुरुत । नास्ति परलोकः पुण्यं पापं च तस्य भावो नास्तिकता ताम् । पुनः यूयं चित्तोन्नतिं–दानवीरतां भजत–आश्रयत । यूयं लुम्पकतां लुनीत–प्रतिमाद्वेपित्वं मर्दयत । पुनः यूयं चैत्यं विधत्त–कारणे कार्योपचारात् कारयत । पुनः यूयं शृणुत–

१ देवलोकम् ।

२ छाया—

मृत्तिकामयं च बिम्बं तृणकाष्ठेष्टिकाभिः कार्यते भवनम् ।
काशस्य च कुसुमैः पूजयन्त करोति मुक्तम् ॥

**हितशिक्षां अङ्गीकृत्य । यत' भव्याः सत्–निरन्तरं सम्यक् प्रकारं वा तत् चैत्यं प्रविलोक्य सरसा–वेगेनापि अजरामरत्वं–अक्षयपदत्वं प्रजन्ति–गच्छन्ति ।**

'હિ(હ૪)વઈ ઇહાં આસ્તિકનાં લક્ષણ કહીઇ છે—

"अत्थि जिओ १ तह निचो २ कत्ता ३ भुत्ता स पुण्णपावाणं ४ ।
अत्थि धुवं निव्वाणं ५ तस्सोवाओ अ छट्ठाणा ६ ॥ १ ॥"

જીવ છે ૧ તે જીવ નિત્ય છે ૨ તે જીવ સ્વપુણ્ય પાપનો કર્તા છઇ ૩ તે જીવ આપણા પુણ્ય પાપનો ભોક્તા છે ૪ અસ્તિ–છૈ ધ્રુવ–નિશ્ચય મોક્ષ ૫. તેહ મોક્ષનો ઉપાય પણિ નિશ્ચય છે ૬ છટ્ઠાણુ સમકિતના એહ થકી વિપરીત તે મિથ્યાત્વી તિહાં પ્રથમ નાસ્તિકવાદી. યત' ચોપાઈ—

'સમકિત થાનકથી વિપરીત, મિથ્યાવાદી અતિ અવિનીત
તેહના ભાવ સવે જૂજૂઆ, જિહાં જોઈજઇ તિહાં ઊંડા કૂઆ. ૧
પહિલો [નો] નાસ્તિક ભાખે શૂન્ય, જીવ શરીર થકી નહી ભિન્ન
મદ્ય અંગથી મદિરા જેમ, પચભૂતથી ચેતન તેમ ૨
માંખણથી ઘૃત તિલથી તેલ, અગનિ અરણથી તરુથી વેલ
જિમ પડિયાર (?) થકી તરવારી, અલગો તો દાખ્યો ઇણિ વારી. ૩
જિમ જલથી પપોટા થાય, ઊપજતાં તે માંહિ સમાય
થૂભાદિક જિમ ખિતિપરિણામ, તિમ ચેતન તનુગુણપરિણામ ૪

---

१ तात्पर्यम्—
षड्भिरास्तिकस्य लक्षणानि कथ्यन्ते—
अस्ति जीवः तथा नित्यः कर्ता भोक्ता च पुण्यपापयोः।
अस्ति ध्रुवं निर्वाणं तस्योपायश्च षट् स्थानानि ॥

२ तात्पर्यम्—
सम्यक्त्वस्थानकात् विपरीतो मिथ्यावादी अत्यविनीतः ।
तस्य भावाः सर्वे भिन्ना यत्रावलोक्यन्ते तत्रापायाः कूपाः ॥ १ ॥
प्रथमस्तो नास्तिको भाषते शून्यः जीवो शरीरात् न भिन्नः ।
मद्याङ्गात् मदिरा यथा पञ्चभूतेभ्यः चेतना तथा ॥ २ ॥
नवनीतात् घृत तिलात् तैल अग्निः अरणेः तरोः वल्ली ।
यथा प्रतिहारात् (?) तरवारिः भिन्नो दर्शितोऽस्ता चेत्तदाम् ॥ ३ ॥
यथा जलाद् बुद्बुदाः भवन्ति प्रान्तरे तस्मिन् विलीयन्ते ।
स्तूपादिः यथा क्षितिपरिणामः तथा चेतना तनुगुणपरिणामका ॥ ४ ॥

नहि परलोक न पुण्य न पाप, सुख पाम्युं ते विलसो आप
वृकपदनी परि [1]भय दाषवइ, कपटी तप जपनी मति चवइ (?). [2]५

"भवाभिनन्दिनां सा च, भवशर्मोत्कटेच्छया ।
श्रूयन्ते [3]चेतदालापा, लोकशास्त्रेऽप्यसुन्दराः ॥ १ ॥"–अनु०

सा इति मोक्षेऽनिष्टप्रतिपत्तिः ।

"मदिराक्षी न यत्रास्ति, तारुण्यमदविह्वला ।
जडस्तं मोक्षमाचष्टे, [4]प्रयास इति नो मतम् ॥ २ ॥–अनु०
वरं वृन्दावने रम्ये, क्रोष्टृत्वमभिवाञ्छितम् ।
न त्वेवाविषयो मोक्षः, कदाचिदपि [5]गौतम ! ॥ ३ ॥"–अनु०

गालवस्य शिष्यामन्त्रणमिति द्वात्रिंशिकायां ( १२ पूर्वसेवाद्वा० श्लो० २३–२४–२५ ) यशोविजयोपाध्यायाः । अहं सुखी अहं दुःखी इत्यादि जीवसत्तास्थापकत्वं, [6]तत् ततो ज्ञेयम् । इति एकविंशतितमवृत्तस्यार्थः ॥ २१ ॥

* * * *

सूत्रम्—

श्राद्धैरकारिषत भागवता विहारा
यैर्दिग्गजैर्द्रविणदानघनैरुदाराः ।
ये चात्र रक्षणपराः पतितं सृजन्ति
ते नूनमूर्ध्वगतयः खलु शुद्धभावाः ॥ २२ ॥

व्याख्या—श्राद्धैरिति । यैः श्राद्धैः–श्रावकैः भागवता विहाराः–जिननिवासाः अकारिषत-कृताः । अत्र कारणे कार्योपचारः कृतोऽस्ति तेन कारिता इत्यर्थः । भगवतः–जिनस्य इमे भाग-

---

नहि परलोक न पुण्यं न पाप सुख प्राप्त तद् भुज्यतां स्वत. ।
वृकपद इव भय दर्शयित्वा कपटी तपोजपयो. मतिं ददाति (?) ॥ ५ ॥

१ माता यथा बालकस्य 'हाउ' इति दर्शनेन भापयति, तथा दर्शनिनो नारकनिगोदादीनां भयं दर्शयित्वा भापयतीत्यादि कथनेन आस्तिक्य लोपयति ।

२ सन्तुलयतां यदुक्तं श्रीहरिभद्रसूरिपुरन्दरैः षड्दर्शनसमुच्चये लोकायतमतनिरूपणावसरे—

"लोकायता वदन्त्येव, नास्ति जीवो न निर्वृति. ।
धर्माधर्मौ न विद्येते, न फलं पुण्यपापयोः ॥ ८० ॥
एतावानेव लोकोऽय, यावानिन्द्रियगोचर ।
भद्रे ! वृकपद पश्य, यद् वदन्त्यबहुश्रुताः ॥ ८१ ॥"

३ 'च-तदा' इति क-पाठ । ४ 'प्रिया स' इति जैनधर्मप्रसारकसंसदा मुद्रिते ग्रन्थे (७५ तमे पत्राङ्के) ।
५ 'गोतम!' इति ख-पाठ. । ६ 'तत्रतो' इति ख-पाठ· ।

यताः । ननु विहारा एव जिनस्य निवासाः "चैत्यविहारौ जिनसद्मनि" इत्यभिधानचिन्तामणि( का० ४, श्लो० ६० )वचनात् । तर्हि कथं भागवता इति विशेषणेन पुनरुक्तदूषणम्? उच्यते—नहि दूषणम्, यतः विशेषणपृथक्त्वे विशेष्यमात्रपरता इति । उक्तं च रघुवंशे (स० २, श्लो० १२, ७४)—"सकीचकैर्मारुतपूर्णरन्ध्रैः" इति । कथंभूतैः श्राद्धैः? दिग्गजैः—दिशां गजसमानैः । पुनः कथं० श्राद्धैः? 'द्रविणदानघनैः' द्रविणदानेन घनाः—मेघा इव तैः । कथं० विहाराः? उदाराः—प्रधानाः च—पुनः ये श्राद्धाः अत्र चैत्येषु पतित शटितमित्यादिकं सृजन्ति—नवीनं कुर्वन्ति । कथं० ? ये रक्षणतत्पराः—सम्मार्जनादिषु आसक्ताः । नूनं—निश्चितं खलु । यतः ते श्राद्धाः ऊर्ध्वगतयः—स्वर्गादिगतिभाजो भवन्ति । यतः—

"नूतनार्हद्गृहावास—विधाने यत् फलं भवेत् ।
तस्मादष्टगुणं पुण्यं, जीर्णोद्धारे विवेकिनाम् ॥ १ ॥"—अनु०

कथं० ? ते ( शुद्धभावाः )—निर्मलाशयाः, पवित्रचित्ता इति । यतः 'प्राग्वाट'ज्ञातीयश्रीधरणकसाधुकारो 'राणकपुरे' श्रीआदिनाथजिनेश्वरत्रैलोक्यदीपकचैत्यं कारयति स्म । श्री'सिद्धाचले' दम्पतीभ्यां च चतुर्थव्रतमादाय माला परिहिता इति । अथ पुनः विमलमन्त्री अम्बिकावचनतो'ऽर्बुदा'चलादिस्थाने चैत्यानि कारयति स्म इति । पुनः वस्तुपाल-तेजःपालौ 'अर्बुदा' चले लूणगवसही तथा बहूनि चैत्यानि प्रतिबिम्बानि धर्मस्थानानि च सत्रादिधर्मकार्याणि च कारयामासतुः । इत्यादयो बहवः श्रावकाः जैनप्रासादकारकाः जीर्णोद्धारकारका अभ(भू?)वन् भवन्ति (भविष्यन्ति) चेति । इति द्वाविंशतितमवृत्तस्यार्थः ॥ २२ ॥

* * * *

अथ भरतचक्रिप्रभृतितश्चैत्यकारापणं दर्शयन्नाह—

वृत्तम्—

चैत्यं सुवर्णभरितं भरतेन भव्यं
निर्मापितं कलितकेकिकलापशृङ्गम् ।
यद् वीक्ष्य मञ्जु दधति स्म मुदं हि मर्त्या
श्चामीकराद्रिशिरसीव नवाम्बुवाहम् ॥ २३ ॥

व्याख्या—चैत्यमिति । भरतेन—भरतचक्रिणा—आद्यप्रभुपुत्रेण चैत्यं निर्मापितं—कारितम् । कथंभूतं चैत्यम्? सुवर्णभरितं—सुवर्णेन भरितं—पूरितं, रचितमित्यर्थः । कथं० चैत्यम्? (भव्यं—)

१ 'भव्यं' इति पाठः श्रीजैनस्तोत्रसङ्ग्रहाख्ये मुद्रिते ग्रन्थे ।

मनोहरम् । पुनः कथं० चै०? 'कलितकेलिकलापशृङ्ग' कलिताः–कलां प्राप्ताः केकिनां–मयूराणां कलापाः–समूहा यस्मिन् तत् एवंविधं शृङ्गं यस्य तत् । हि–निश्चितं मर्त्याः–मनुष्याः मङ्क्षु–शीघ्रं मुदं–हर्षं दधति–बिभ्रति । किं कृत्वा? यत् चैत्यं वीक्ष्य–दृष्ट्वा । किमिव? चामीकराद्रिशिरसि–'मेरु'गिरिशृङ्गे नवाम्बुवाहं–नूतनमेघमिव दृष्ट्वा । चैत्यस्य मेरूपमानं शृङ्गस्य मेघोपमानम् । यतः श्री'शत्रुञ्जये' भरतेन चैत्यं कारितं तथा 'अष्टापदे' च चैत्यस्तूपाः कारिताः । यदुक्तं आगमे (सिद्धस्तवेत्यपरनाम्नि सिद्धाणंबुद्धाणंसूत्रे गा० ५) –"[1]चत्तारि अट्ठ दस दो इ(अ) वंदिया" इत्यादि गाथा द्वादशार्थां । इति त्रयोविंशतितमवृत्तस्यार्थः ॥ २३ ॥

꧁ ꧁ ꧁ ꧁

अथ [2]भरतप्रभृतित एव तीर्थादिसेवनं दर्शयन्नाह—

सूत्रम्—

**शत्रुञ्जयः शमधनाः शमता च शान्तिः**
**शत्रुञ्जयाह्वयतपः सकलं दुरापम्? ।**
**एतच्छपञ्चकजुषोऽस्ति नरस्य [3]या भा**
**नीराग! तां व्रजति को न सचेतनोऽपि ॥ २४ ॥**

व्याख्या—शत्रुञ्जय इति । हे नीराग! हे निर्गतसंसाराभिलाष! अथवा हे निःक्लेश! "रागः स्याल्लोहितादिषु ॥ गन्धा(गन्धारादौ क्लेशादिकोऽ)नुरागे मत्सरे नृपे" इति हैमः (का० २, श्लो० ६०–६१) । एतत् सकलं दुरापं–दुर्लभं वर्तते । एतत् किं तदाह—शत्रुञ्जयः–सिद्धाचलः शमधनाः–साधवः शमता–उपशान्तिः शान्तिः–(षोडशो) जिनः शत्रुञ्जयाह्वयतपः–षष्ठाष्टमरूपं तप इति । यतः—

"[4]छट्ठेणं भत्तेणं अपाणएणं तु सत्त जत्ताओ ।
जो कुणई सित्तुंजे सो तइयभवे लहइ सिद्धिम् ॥ १ ॥
"षष्ठाष्टमादितपसा, प्राप्यते फलमुत्तमम् ।
ततोऽत्र कार्यं तच्चैव, विशेषात् सर्वकामदम् ॥ १ ॥"

---

१ छाया—
चत्वारः अष्ट दश द्वौ च वन्दिताः ।
२ 'भरत(मृ)पप्रभृ०' इति क–पाठ. ।
३ 'याऽऽभा' इत्यपि सम्भवति ।
४ छाया—
षष्ठेन भक्तेन अपानकेन तु सप्त यात्राः ।
यः करोति शत्रुञ्जये स तृतीयभवे लभते सिद्धिम् ॥

इति शत्रुञ्जयमाहात्म्ये। 'एतच्छपञ्चकशुचः' एतेषां शकाराणां पञ्चक शुचते इति एतच्छपञ्चकं श्रितस्य नरस्य या भा-कान्तिः आभा शोभा वा अस्ति। यत्तदोः सम्बन्धात् कः-वह्निः सूर्यो वा तां भां न व्रजति-न प्राप्नोति। कथंभूतः कः? सचेतनोऽपि-चेतनायुक्तोऽपि "चित्तं चेयण सन्ना"[1] इत्यादि वचनात्। "को ब्रह्मण्यात्मनि रवौ मयूरेऽग्नौ यमेऽनिले" इत्यनेकार्थ (का० १, श्लो० ५)। अथवा सचेतनोऽपि-चेतनायुक्तो नरोऽपि तां न व्रजति इति परम तात्पर्यः। तथाहि—

> "चेतनां नर्तकीं कृत्वा, नृत्यं संसृतिसम्भवम्।
> भावागमेन संवीक्ष्य, योगी प्राप्नोति सम्पदम्॥ १॥"

इति ज्ञानाङ्कुशे। "सद्ध्यानध्यानसंलीनचेतना। सा हि चेतना" इति पातञ्जल(?)। इति।

> "अमात्याः १ स्वामिन' २ सिद्धा ३, योगसिद्धाश्च ४ चेतनाः ५।
> रसज्ञाः ६ कामुका ७ मेघा ८, नर्तका ९ योगिनो नव॥ १॥"

इत्यादि परमतम्॥

अथात्र दृष्टान्त'—

कश्चित् कौलधर्मा पुरुषो मद्यमांसासक्त' परस्त्रीरक्तः। यतः—

> "रम्भा चण्डादीक्षिता धर्मदारा, मांसं मद्यं भुज्यते पीयते च।
> भिक्षाभोज्यं चर्मखण्डं च शय्या, कौलो धर्मः कस्य नो भाति रम्यः? ॥१॥"—शालिनी

एवं कुर्वतस्तस्य पुरुषस्य स्पर्शन-रसन-घ्राण-नेत्र-श्रोत्रेषु विषमरोगा जाता'। दवदग्धपादप इव जातः सः। ततो जैनसाधुर्मिलितः। तेन तस्मै रोगकारणं पृष्टम्। साधुनोक्तम्-(जैन)-धर्मोऽवश्यं भवता गृहाण, शत्रुञ्जयादि शकारपञ्चकमाराधय। समाधिर्भविष्यति। ततस्तेन रोग पराभवतो व्रतं गृहीतम्। शत्रुञ्जयक्षेत्रं भजति स्म। यमिनां वैयावृत्त्यं चकार। शमतां दधौ। शान्तिजिनं स्तौति स्म। शत्रुञ्जयषष्ठतपो धरति स च स'। एवं कुर्वाणः सम्प्राप्तसकललब्धिः निर्गतसमस्तरोग' निजतेजसा पराभूतवह्निदर्प' सुवर्णवर्णसञ्जातकाय' निर्माय' अन्ते मासानशनं कृत्वा प्राप्तकेवलज्ञान' सिद्धः। इति चतुर्विंशतितमवृत्तार्थः॥ २४॥



---

1 छाया—

चित्तं चेतना संज्ञा।

2 इत्यते पद्यमिदं श्रीजयशेखरसूरिकृते प्रबोधचिन्तामणौ (अ० ३ श्लो० १०३)।

अथ प्रत्यक्षदेवशुद्धिमाह—

सूत्रम्—

हस्तं हि हेतिविफलं विकलङ्कमङ्गं
मुद्राऽप्यमुद्रसुषमा वनितोज्झितोऽङ्कः ।
तं देवमेव वदतीति हिताय नाके
मन्ये नदन्नभिनभः सुर! दुन्दुभिस्ते ॥ २५ ॥

व्याख्या—सुर इव यः स सुरः, अथवा सु-अतिशयेन राजते इति सुरः, तस्य सम्बोधनं हे सुर!-शोभमान! अहं इति मन्ये-जानामि—नाके-स्वर्गे अभिनभः-आकाशे नदन्-शब्दं कुर्वन् सन् दुन्दुभिः तमेव देवं वदति । कस्मै ? ते-तुभ्यम् । हिताय इति । इति किम् ? हि-निश्चितं यस्य देवस्य हस्तं हेतिविफलं-प्रहरणशून्यं वर्तते । पुनः यस्य अङ्गं-शरीरं विकलङ्कं-कलङ्करहितं वर्तते । पुनः यस्य मुद्रा-पद्मासनादिमयी मूर्तिरपि शान्तरसमयी । अमुद्रसुषमा-उत्कटशोभा एवंविधा वर्तते । "सुषमा सातिशायिनी" इति हैम्यां (अभि० का० ६, श्लो० १४८) । पुनः यस्य अङ्कः-उत्सङ्गः वनितोज्झितः-स्त्रीरहितो वर्तते इति । यतः—

"वपुश्च पर्यङ्कशयं श्लथं च, दृशौ च नासानियते स्थिरे च ।
न शिक्षितेयं परतीर्थनाथै-र्जिनेन्द्र! मुद्राऽपि तवान्यदास्ताम् ॥ १ ॥–उपेन्द्र०
जिनेन्द्र! यानेव विबाधते स, दुरन्तदोषान् विविधैरुपायैः ।
त एव चित्रं त्वदसूययेव, कृताः कृतार्थाः परतीर्थनाथैः ॥ २ ॥"–उपेन्द्र०

इति द्वावपि हेमसूरयः (अयोगव्यवच्छेदिकाख्यायां द्वात्रिंशिकायां श्लो० २०, ४) ।

अत्रान्यदेवे विपरीतत्वं दर्शयति—

"यद् ब्रह्मा चतुराननः समभवद् देवो हरिर्वामनः
शक्रो गुह्यसहस्रसङ्कुलतनुर्यच्च क्षयी चन्द्रमाः ।
यज्जिह्वादलतामवापुरहयो राहुः शिरोमात्रतां
तृष्णे! देवि! विडम्बनेयमखिला लोकस्य युष्मत्कृता ॥ १ ॥"–शार्दूल०

तथा—

"ब्रह्मा लूनशिरा हरिर्दृशि सरुग् व्यालुप्तशिश्नो हरः
सूर्योऽप्युल्लिखितोऽनलोऽप्यखिलभुक् सोमः कलङ्काङ्कितः ।
स्वर्णाथोऽपि विसंस्थुलः खलु वपुःसंस्थैरुपस्थैः कृतः
सन्मार्गस्खलनाद् भवन्ति विपदः प्रायः प्रभूणामपि ॥ २ ॥"–शार्दूल०

---

१ स्वर्गपति –इन्द्र० ।
जैन० स्तो० ११

[1]'એકદા તેત્રીશ કોડી દેવ મિલ્યા વિચાર થયો। હરને માતા પિતા ન જાયતે। तदा ब्रह्मणः पञ्चममुखेन गर्दभमुखाकारेण सगर्वेण प्रोक्तम्—जानाम्यहम्। अकथ्य कथ्यमाने हरेण ब्रह्मगर्दभशिरो छिन्नमिति। अन्ये त्वाहुः—

विष्णु-ब्रह्मणोर्महत्त्ववादे जाते शम्भुर्[2] शम्भु पृष्टः। तेनोक्तम्—मल्लिङ्गस्य अन्तमानय। ततः લિંગનો અન્ત લેવા વિષ્ણુ પાતાલ જાતાં વજ્રની(ના) અગ્નિસતાપથી કૃષ્ણ શરીર થયું। પાછો આવી કહ્યું–લિંગનો અ ત ન પામ્યો। બ્રિમજ બ્રહ્માને ઉંર્ધ્વ જતા લિંગથી માલા પડી પામી પૂછ્યું–કિહાંથી? માલાએ કહ્યું–હું હરલિંગ મસ્તક થકી પડી। कियान् कालः (जातः)? । षण्मासाः। [3]'પછે માલાયેં પૂછ્યું–તું કિહાં જાય છે?' लिङ्गस्यान्तं લેવા त्वत्सम समानकालो जातः, अन्तं न प्राप्तं । [4]'વિષાદ પામ્યો। માલાને કૂટસાક્ષિણી કરી શંભુને આવી કહ્યું—लिङ्गान्तो लब्ध'। इयं साक्षिणी। ततः शिपेन ब्रह्मगर्दभशिरो छिन्नम्। माला शापिता। इति पूर्वं ब्रह्मा छिन्नशिरा॥ छ॥

अथ दुर्वासा महर्षिरुर्वशीं क्षमितवान्। [5]'તિવિ કહ્યું–અપૂર્વ વાહન ઉપરી બઇસી આવીસ્યિ તો તુઝ સેતી સગ। તિહારેં ઋષિ કૃષ્ણનેં યાચી। કૃષ્ણ લક્ષ્મી ગોરૂપધારી રથે જોડી સ્વર્ગે ચાલ્યો। કૃષ્ણનેં વાર્યો છઇ જે ચાલતાં પાછિલો ભાગ જોઇસ્ય માં। વાટિ ક્રીડતાં અ-પછે કરી લક્ષ્મી અપઠાય, તિહારેં પરાણું મારેં। સ્નેહેં હરિ લક્ષ્મી સાહમું જોયું। કૃષ્ણ વચન ચૂકથી ઋષિ આંખિમાં પરાણો મેલ્યો। तेन नेत्रे सरोगो हरि'। अन्ये त्वाहुः—

[6]'નદીતટેં તાપસી સરાગદૃષ્ટિ દીઠી, તિણેં સરાપઈ सरोगलोचनो हरिरिति सम्पूर्णः॥छ॥

ध्यात्तक्षशिमो हरः। तथाहि–तपोवने [7]'તાપસોને ઘરે महादेवो भिक्षार्थं गृहीतसमस्त

---

१ तात्पर्यम्—एकदा त्रयस्त्रिंशत् कोटिदेवानां मिलिता (तेषां) विचारो जातः—हरस्य मातापितरौ न ज्ञायेते।

२ ततो लिङ्गस्यान्तमानेतुं विष्णौ पाताले ग-छति सति तत्र वेत्रः वज्राग्निसन्तापेन कृष्णोऽभवत्। प्रतिनिवृत्तोक्त तेन–लिङ्गस्यान्तो न प्राप्तः। तथैव ब्रह्मणि ऊर्ध्वो गच्छति सति लिङ्गात् पतिता माला मिलिता। (तेन) पृष्टं तेन—कुतः (पतसि)?। तयोक्तम्—अहं हरलिङ्गशिरसः पतितवती।

३ पश्चात् मालया पृष्टम्–त्वं क्व गच्छसि? तेनोक्तम्—लिङ्गस्यान्तमानेतुम्।

४ स विषाद गतः। मालां कूटसाक्षिणीं कृत्वा शम्भुमभ्युपगम्य प्रोक्तं तेन।

५ तत्कथयत्—अपूर्वं वाहनमारुह्य यदि आगमिष्यसि तर्हि त्वया सहर्म करिष्ये। तदा ऋषिः (तदर्थं) कृष्णं याचत। कृष्णं लक्ष्मीं च गोरूपिणीं कृत्वा रथे नियोज्य स्वर्गं प्राचलत्। ऋषिणा कृष्णो वारितो यदुत त्वया गमनसमये पश्चाद्भागो न द्रष्टव्यः। मार्गे क्रीडतः तत्र श्रीरूपकस्या व्यस्ख्यलते तदा प्राजनकं मारयति। स्नेहात् हरिर्लक्ष्मीमपश्यत्। वचनभ्रंशात् ऋषिणा कृष्णा प्राजनकेन लोचने प्रणोदितः।

६ नदीतटे तापसी सरागदृष्ट्या दृष्टा (तस्मात्) तस्याः शापेन।

७ तापसानां गृहे।

कीयालङ्कारो घण्टाटङ्कारतुम्बुरुझङ्काररवमुखरितदिक्चक्रवालः समागच्छति । [1]तापसी કામાતુર થાઈ તેહને ભોગવૈ । તે તાપસે જાણ્યું । શાપેં લિંગચ્છેદ કર્યો । પુરૂષ લોક સર્વ લિંગચ્છેદ થયે। । સતાન ઉત્પત્તિ નાઠી । સર્વ દેવ તાપસને પ્રસન્ન કર્યો । પાછું લિંગ હતું તિમ કર્યું । પણિ પૂર્વે સદા ઉત્થિત હતું । अतः प्रभृति भोगार्थं उत्थितं भविष्यति, अन्यथा न । ततो जना अपि एवंविधलिङ्गवन्तो जाताः, प्रजोत्पत्तिश्चेति ॥ छ ॥

[2]સૂર્યને રન્નાદેવી स्त्री यमनामा पुत्रः सूर्यतापमसहमाना પોતાનેં થાનકે પ્રતિચ્છાય મુકીને છાયા સમુદ્રતટૈં વડવારૂપે જઈ રહી । પુંઠિ પ્રતિચ્છાયાયેં શનીશ્વર ૧ ભદ્રા ૨ અપત્ય જણ્યાં । એક દિનેં યમેં ભોજન માંગ્યુ । પ્રતિચ્છાયાઈં નાપ્યુ, યમેં પાટૂ મારી । પ્રતિચ્છાઇં શાપે ક્ષયી કૃત યમેં પિતાને કહ્યું । તિહારેં સૂર્યે ચિંતવ્યુ—कथं स्वमाता एवं करोति? એ યમની માતા નહી । આલોચતાં ઘોડીરૂપે દીઠી । તિહાં જઇ બલાત્કારે ભોગવી । तया क्रुधा कुष्ठीकृतः । ततः વિશ્વકર્મા પાસૈ અંગ છોલાવ્યું ॥ अन्ये त्वाहुः—

[3]વડવારૂપ સ્ત્રીને ભોગવીને શશરાનૈ કહ્યું—તાહરી બેટી મુંઝને મુકી અલાધી રહે છે । તિવ્હા. રૈં શશરૈં કહ્યું—તાહરો તાપ સહી નથી સકતી; નિજ સ્ત્રી સ્યુ કામ હુઇ તો શરીર છોલાવૈં । તિહારૈં છોલાવ્યુ ઇતિ ॥ छ ॥

अनिलोऽप्यखिलभुक् । तथाहि—[4]कश्चित् ऋषिः પોતાને સ્થાનકે વૈશ્વાનરને આહુતિં પૂજી ભક્તિ રાષઈ છે । અન્યદા અનલનૈ ઘર સ્ત્રીનૈ ભલાવીનૈ ઋષિ પ્રયોજનનેં ગયો । પૂંઠૈં બીજઇ ઋષિ આવી તે સ્ત્રી ભોગવી અગ્નિસમક્ષં । ક્ષણાંતરે તે ઋષિ આવ્યો । ઇંગિતાકારે તે સ્ત્રી પર નરે ભોગવી જાણી પૂછ્યૂં—અનલ ૧ સ્ત્રી ૨ બિ જણૈં સત્ય ન ભાષ્યું । જ્ઞાનોપયોગૈ જાણી અનલનૈ सर्वभक्षक इति शापं दत्तवान् । ततः શુચિ અશુચિ સર્વ ભક્ષણ કરૈં तत् सर्वदेवानामु-

---

१ तापसी कामातुरा जाता । तदा तामभुनक् (हर) । एतद् वृत्तान्तं तापसैर्ज्ञातम् । (तत.) तै. शापेन लिङ्गच्छेद. कृतः । समस्तपुरुषलोकानां लिङ्गच्छेदोऽजनि, सन्तानोत्पत्तिर्नष्टा । सर्वैर्देवैस्तापस. प्रसन्नीकृत' । पुनः यथा लिङ्गमभूत् तथाऽकारि तेन, किन्तु पूर्वं सदा तद् उत्थितं आसीत् ।

२ सूर्यस्य रन्नादेवी पत्नी यमनामा (च) पुत्रः । सूर्यतापमसहमाना (रन्ना) स्वस्थानके प्रतिच्छायाममुञ्चत् । सा छाया समुद्रतटे गत्वा वडवारूपेण वसति स्म । तत पृष्ठे प्रतिच्छाया शनिश्चरभद्रेति नामापत्येऽजीजनत् । एकदा यमेन भोजन (तस्या') याचितम् । प्रतिच्छाया तस्मै नायच्छत् । यमेन पादप्रहारः कृत । प्रतिच्छायया शापेन स क्षयीकृतः । यम पित्रे न्यवेदयत् । तदा सूर्योऽचिन्तयत्–कथ स्वमाता एवं करोति? इयं यमस्य माता नास्ति । आलोचयन् स घोटकीरूपेण तामपश्यत् । तत्र गत्वा बलात्कारेण स तामभुनक् । तया क्रुधा (स) कुष्ठी कृतः । ततो विश्वकर्माणमुपेत्य तेनाङ्गमुच्छिलापितम् ।

३ वडवारूपां स्त्रीं भुक्त्वा श्वशुराय न्यवेदयत—तव पुत्री मां विहाय अन्यत्र वसति । ततः श्वशुरेण प्रोक्तम् —तव ताप सोढुं साऽसमर्था, यदि निजस्त्रिय' प्रयोजन, तर्हि शरीरमुच्छिलाप्यताम्, तेन उच्छिलापितम् ।

४ कश्चित् ऋषि. निजे स्थानके वैश्वानराय आहुतिभि भक्त्या पूजयति स्म । अन्यदाऽनलाय स्वभार्यां भलाप्य ऋषिः प्रयोजनार्थं (अन्यत्र) जगाम । पश्चादन्य' कश्चिदृषिरागत्य ता स्त्रियमभुनक् अग्निसमक्षम् । क्षणान्तरे स ऋषिरागच्छत् । इङ्गिताकारेण सा स्त्री परनरेण भुक्तेति ज्ञात्वा स अनल–पत्न्यौ अपृच्छत् । उभाभ्यां सत्य न भाषितम् । ज्ञानोपयोगेन (सर्वं वृत्तान्तं) ज्ञात्वा अनलः सर्वभक्षक इति शापं दत्तवान् । ततः स शुच्यशुचि सर्वं भक्षयति ।

पतिष्ठति, मुख यसौ देवानां, तयोऽशुमादिरसास्वादी (दिन) 'देव ઉદ્વિગ્ન થયા। तिसि देवे ऋषिनैं प्रसन्न કર્યું। तिसि ઋષિને સર્વ જીવ કરી ખઈ જીવેં આહુતિ દેવનેં પહુ છે, પાસ જીવાઈ સર્વ ભક્ષક इति पूर्णः ॥ छ ॥

सोमः कलङ्काङ्कित' । तथाहि–चन्द्रो बृहस्पतिसमीपेऽध्येतु स्थित' । तेन भुक्ता गुरुभार्या । ज्ञातं च गुरुणा । शपित' कलङ्कीकृत' इति पूर्ण' ॥

इन्द्रः उटजं प्रविश्य गौतममुनेरहिल्या नाम भार्या रेमे । द्वारि गौतम आगतः । भयात् मार्जाररूपं कृत्वा निर्गत । नायं प्रकृत(ति)बिडाल', उपयोगेन ज्ञात इन्द्रः । ततस्तेन कोपत इन्द्र देहे शापेन भगसहस्र कृतम् । स्वच्छात्रान् प्रति भोगाय प्रेषितवान् । मुनिश्च दर्वै' प्रसादितः । मुनिना भगाः सहस्रलोचनीकृता' इति पूर्णः ॥ छ ॥

ब्रह्मा चतुर्मुखः । तथाहि–મોટે ઉધાનિ ब्रह्मा तपस्यति તેહનૈ પાડવાનૈ ઇન્દ્રઈ તિલતિલરૂપ લેઇનઇ તિલોત્તમા કરે। તે તિલોત્તમા વલી બીજી અપ્સરા પૂર્વ મુખે બ્રહ્મા આગલિ આવી ગીત નૃત્ય માંડ્યા। ચિત્ત ચલ્યુ જાણી દક્ષિણ દિશિ નાટક આદર્યુ। લજ્જામાનેં કરી બ્રહ્માઇ ફિરિ જોવરાઈ નહીં તિહારે દક્ષિણ દિશિ બીજુ મુખ કર્યું। ઇમ દેવી ફિરઇ તિમ મુખ નવાં કરવો જાઇ ચારઇ દિશિ ચાર મુખ કર્યાં। માથા ઉપરિ નાચતાં પાંચમું મુખ માથાઇ ગર્દભનુ કર્યું। તે મહાદેવે ચૂટ્યૂ તિહારે चतुर्मुख इति ॥ छ ॥

हरिस्तु वामनः । तथाहि–'બલિ દાનવ બાંધવાને વામનરૂપ કરી મહી કરવાને કૃષ્ણઈ ત્રિણ પગલાં પૃથ્વી માગી। ત્રિણ પગલાં તિણિ આપ્યાં રૂપ વધારી વિષ્ણુઇ પાતાલેં મોકલ્યો इति पूर्णः ॥ छ ॥

---

१ देवा व्रीहिमा भक्षा। तैर्दैवे ऋषिराराधितः। तत्क्षेण भक्षकः सर्वभिक्षोऽकारि। ज्ञात्वो त्रिभुवनं धृतं साम्बुतिः देवा प्राप्नते (सेवैः) पञ्चभिर्विहाभिः स सर्वभक्षकः।

२ सम्मुच्चयात्—

मिह्य भुवकनमेषा क्षम्य मो भावमार्य
  त्रिदशपतिरहिल्या तापसी या सिषेवे ।
हरयतनुद्धीरे दह्यमाने पराला
  बुधितमबुधितं वा वेत्ति का पण्डितोऽपि ? ॥ १ ॥–मालिनी

३ पुरुति तपांसि ब्रह्मा (सार्धकोटिमयवर्षाणि तपः) करोति । स पातयितु इन्द्रः तिलतिलरूपमादाय तिलो त्तमामकार्षीत् । सा तिलोत्तमा अप्सराः पूर्वमुखे ब्रह्मणस्सम्मुखमागत्य गीतं नृत्यं च आरभत । ब्रह्मणः चित्त चलितं (इति) ज्ञात्वा दक्षिणदिशि नाटकमारब्धवती । लज्जया ब्रह्मा मुखं न वालयति (किन्तु कामासक्तया) तेन दक्षिणदिशि द्वितीयं मुखमकारि । यथा यथा देवी अप्सरान्यां दिशं प्रति निवर्तते तथा तथा स नूतनां मुखरचनां करोति । चतसृषु दिक्षु चत्वारि मुखानि व्यरचयत् । यदा मस्तकोपरि तिलोत्तमया नाटकं आरब्धं तदा शीर्षोपरि पञ्चमं गर्दभाकारं मुखमधारयत् । ततत् तु महादेवेन छिन्नं तदा स चतुर्मुखः ।

४ बलेर्दानवस्य बन्धनार्थं वामनरूपमादाय कृष्णो महिकाहते पदत्रयमात्रां पृथ्वीं समेव याचितवान् । त्रिपदी तैनादायि रूपं वर्धयन् विष्णुस्तं पाताले निक्षिप्तवान् ।

क्षयी चन्द्रमाः । [1]દક્ષની સત્તાવીસ પુત્રી ચંદ્રનઇં પરિણાવીં, ચંદ એક રોહિણીસ્યું આસક્ત શેપ અપમાની । તિણેં પિતાનેં કહ્યુ । પિતાઇં શાપાત્ क्षयी कृतः । देवैः प्रसादितेन तेन एकत्र पक्षे वृद्धिमानिति पूर्णः ॥ छ ॥

नागाः पुनरेवं द्विजिह्वाः । [2]क्षीર સમુદ્રથી અમૃત કાઢી કુંડ દેવતાઇં ભર્યાં, ડાભેં આચ્છાદ્યાં, સાપ રખવાલાં મુક્યાં, એકાંતઇં અમૃત પીતાં ડાભેં જીભ ફાટી બઇ થઇ ॥ अन्ये त्वाहुः—[3]અમૃતપાન કરતાં ઇન્દ્રે વજ્ર મુક્યું । जिह्वाभेदो जातः । इति पूर्णः ॥ छ ॥

राहोः शिरोमात्रता पुनरेवम्—[4]અમૃત કુંડભરી કૃષ્ણનૈ રખવાલ મુકી દેવ ગયા । કૃષ્ણ કાર્યવિક્ષેપઇં રાહુઇં અમૃત પીતાં कृष्णेन शिरश्छेदः कृतः, पीतामृतत्वात् तच्छिरोऽजरामरत्वं संवृत्तमिति अष्टकवृत्तितो वार्ता कृता सम्पूर्णकाव्यद्वयम् ॥

अथात्र [5]ભાલણકૃત કડવું લિખીઇ છે—

"સ્યુ કીજે જો મૂલજ કૂડૂં, જોતાં કાંઈ ન દીસઇ રૂડૂં ।
વિષ્ણુઇં છલ કરી રાક્ષસ માર્યા, દેહ થકી ત્રિણ નવિ ટાલ્યા ।
મહાદેવૈ મન્મથ જો બાલ્યો, પાર્વતીસ્યુ નેહ ન ટાલ્યો ॥ ૧ ॥ સ્યુ કીજૈ૦ આંકણી
બ્રહ્માતું મન પુત્રીસ્યુ ભેદ્યું, ત્રિપુરારિ તસ મસ્તક છેદ્યું ।
જેહનૈ તો નારી ઇંદ્રાણી, ઇંદ્રે અહિલ્યા રુડી જાણી ॥ ૨ ॥ સ્યુ૦
જુ નારી દીઠઇ હુઇ સુક્ખ, તુ નારદ કી વાનરમુક્ખ ।
મચ્છગંધા મોહ્યો પારાસર, વિશ્વામિત્ર મેનકા આદર ॥ ૩ ॥ સ્યુ૦

---

१ दक्षस्य २७ पुत्रीमि परिणायित· चन्द्र· । चन्द्र एकामेव रोहिणीं प्रति आसक्त, शेपा अपमानितवान् । ताभिः पित्रे प्रोक्तम् । पित्रा शापात् क्षयीकृत ।

२ क्षीरसमुद्रात् अमृत निष्कास्य कुण्डानि देवताभिर्भृतानि, दर्भैश्चाच्छादितानि । सर्पा रक्षपालरूपेण स्थापिता· । एकान्ते अमृतस्य पान कुर्वतां तेपा दर्भेण जिह्वा? भित्त्वा द्विधाजाता ।

३ अमृतपान कुर्वत्सु ( नागेपु ) इन्द्रेण वज्र निवेशितम् ।

४ अमृतेन कुण्ड भृत्वा कृष्णं रक्षपालरूपेण स्थापयित्वा देवा जग्मुः । कृष्णस्य कार्यविक्षेपे सति राहुणाऽमृतं पीतम् ।

५ (कवि)भालणकृतं कडवक लिख्यते—

किं क्रियते यदि मूलमेव कूट, यदि विचार्यते तर्हि किञ्चिदपि शुभं न भाति ।
विष्णुना च्छलेन रक्षांसि हतानि, किन्तु देहात् (राग–द्वेप–कामरूप) त्रिक न निष्कासितम् ॥१॥
महादेवेन मन्मथो भस्मीकृत किन्तु पार्वतीं प्रति स्नेहो न निवारित ।
ब्रह्मणो मन पुत्रीमकामयत, त्रिपुरारिणा तस्य मस्तक छिन्नम् ॥२॥
यस्य इन्द्राणी नारी स इन्द्रोऽहिल्यां सुरूपाममन्यत ।
यदि नार्यां दृष्टायां भवति, सुख तर्हि नारद कथं वानरमुख.? ।
मत्स्यगन्धायाममुह्यत पाराशर·, विश्वामित्रस्य मेनकायामादर· ॥३॥

पित्रा सदेवलोपित्वात् सोऽतीव मारितो बन्धितो दमितः (दूनः?)। परं विष्णुरित्येव भणति। घातकं च न लगति। ततस्तं श्रुत्वा तुष्टो विष्णुस्तस्य वरं ददौ–त्वं इन्द्रो भविष्यसीति। पुनः पुनः एवं पीडयति। ततो विष्णुः स्वभक्तमेवं पीड्यमानं दृष्ट्वा मुखं सिंहस्यान्यत् सर्वं शरीरं नरस्य एवं नरसिंहरूपं धृत्वा हिरण्यकशिपोर्वक्षो विदार्य सोऽमारयत् ॥ ४ ॥

बलिनामा दैत्य इन्द्रपदप्राप्त्यर्थं शतं यज्ञानां कर्तुमारेभे। नवनवतिर्यज्ञा अखण्डा जाताः। शततमे जायमाने देवेनाचिन्ति–मया प्रह्लादस्य इन्द्रपदं दत्तम्। असौ बलिमुत्थाप्य स्वयं गृहीतेति क्रोधे उत्पन्ने देवो वामनरूपेण भूत्वा यज्ञस्थानमागत्योवाच–भो दानीश्वर! बले! यज्ञशतविधायक! दानवेला अधुना? ब्राह्मण! किं याचसे?। अऊठक्रममात्रभूमिं मह्यं वासाय देहि। बलिना दत्ता। शुक्रोऽवदत्–बले! वामनरूपेण विष्णुरायातः त्वत्पार्श्वे याचितुम्। विशेषेण बलिः हृष्टः। तावद् वामनेन त्रिभिः क्रमैः सर्वां भूमिमाक्रम्य प्रोचे–वद अऊठतमक्रमं क मुञ्चामि?। ततस्तत्पृष्ठ्वैवाक्रम्य बलिः पाताले क्षिप्तः। तदा बलिनोचे–मां लोकाः कथं ज्ञास्यन्तीति यद् बलिरीदृगभूत्। ततो वामनोऽवदत्–दीपालिकायां चत्वारो दिनास्त्वद्राज्यम्। तदा त्वं राजा। अहं च द्वारे रक्षपालकः। ततोऽद्यापि तद्दिनेषु लोका गृहमध्ये बलिराजानं संस्थाप्य द्वारे छगणमयं गोइसं कुर्वन्ति गोपीशमित्यर्थः ॥ ५ ॥

सहस्रार्जुननामा क्षत्रियः सहस्रभुजः। तस्य भग्नी रेणुका। सा बाला जमदग्निऋषिणा परिणीता। सहस्रार्जुनोऽन्यदा जमदग्नेराश्रमे ययौ। मिथो वदतो रोष उत्पन्नः। क्षत्रियाः स्वभावादतिरोषिणः। तेन ऋषिर्दुमितः। रेणुकाऽपि दुमिता तावदेव दधौ–रे दुरात्मन्! ऋषिपीडा कृता, मया न संसह्यते इति तयोरेव परशुरामः पुत्रो भूत्वा सहस्रार्जुनं हत्वा तद्दोषेण २१ (एकविंशति)वारान् निःक्षत्रियां पृथिवीं चक्रे। इति परशुरामावतारः ॥ ६ ॥

रावणेन समग्रा पृथिवी उच्चाटिता। ततो देवः श्रीरामस्यावतारमादाय रावणं हतवान् ॥७॥

कंसादिदैत्यान् निहन्तुं देवः कृष्णावतारं जग्राह ॥ ८ ॥

बुद्धावतारः शीतलरूपः तेन म्लेच्छायतनं च ववृधे ॥ ९ ॥

अथ कल्क्यवतारमादाय म्लेच्छान् निर्घोटयिष्यति ॥ १० ॥ इति दशावताराः सम्पूर्णाः ॥

इति पञ्चविंशतितमवृत्तार्थः सम्पूर्णः ॥ २५ ॥

❀ ❀ ❀ ❀

---

१ सार्धत्रिसङ्ख्यावाचकोऽयं शब्दो गूर्जरगिरायाम्। २ 'गोहम' इति क पाठ.। ३ "भग्नी स्याद् भगिन्यन्विता" इति वाचनाचार्यश्रीसाधुसुन्दरगणिविरचिते श्रीशब्दरत्नाकरे (का० ३, श्लो० १४७)। ४ 'निर्घाटयिष्यति' इति ख–पाठ ।

अथ समवसरणे वृषभजिनो भरतमुद्दिश्य धर्ममाह—

पद्यम्—

व्याख्यानसद्मनि वृषो गदितो जिनेन
क्षेत्रे निजेन निहिते निहितोऽभिषिक्तः ।
अन्यत्र मोहचरटो विधि-विष्णु रुद्र
व्याजात् त्रिधा धृततनुर्ध्रुवमभ्युपेतः ॥ २६ ॥

व्याख्या—हे भरत! जिनेन मया—मरुदेवासुतेन वृषः—धर्मः अभिषिक्तः—भूपः कृतो वर्तते । कथंभूतो वृषः? व्याख्यानसद्मनि—समवसरणे गदितः—कथितः । पुनः कथं० वृषः? जिनेन स्वकीयेन—आत्मना निहिते—स्थापिते क्षेत्रे निहितः—स्थापितः । अन्यत्र जिनोक्तक्षेत्रव्यतिरिक्ते स्थाने मोहचरटो ध्रुवं—निश्चलं अभ्युपेतः—आगतः स्थितो वर्तते । कथं० मोह०? त्रिधा धृततनुः—त्रिविधधृतशरीरः । कस्मात्? विधि—ब्रह्मा विष्णु—कृष्णः रुद्र—महादेवः एषां व्याजात्—कपटात् ॥ अत्र दृष्टान्तः—

'कोशलायां' एका भरटानाम्नी विप्री जैनसंसर्गात् गलितमिथ्यात्वा ज्ञातनवतत्त्वा दृढशीलसत्त्वा श्राविका बभूव । सप्तक्षेत्रविषय महत्प्रभावमय निराकृतान्यक्षेत्रप्रपञ्च निहितदानफलित सदाऽक्षय जिनधर्मं मत्वा सूत्रकर्तनादि कार्यं कृत्वा तद् विक्रीय धनेन युगन्धरीमुद्गादिधान्यानि लात्वा तेषां धान्यकणानां टङ्कप्रमित एकः पुञ्जः एवं सप्त क्षेत्रत्वात् सप्त पुञ्जान् धर्मार्थं कुल्हटिकामध्ये पृथक् पृथक् मुक्त्वा नित्यं शेषान्नेन मन्त्रोऽज्जीवनं च गृहनिर्वाहं करोति, परं इदं पश्चात्तापं मनसि वहति, यत् एतैः सप्तपुञ्जैः कियान् क्षेत्रोद्धार इति? । तस्या अतीव श्रद्धाभक्तिरञ्जितया शासनदेव्या ते पुञ्जाः सुवर्णमयाः क्रियन्ते । नित्यं सा विप्री तान् कनकमयसर्वकणपुञ्जान् दृष्ट्वा सञ्जातहर्षा चतुर्विधसङ्घाय ददौ । सप्तक्षेत्रे व्ययीकृत्य इत्युक्तवेति । यतः—

"रम्ये हर्म्ये तीर्थनाथस्य बिम्बे, श्लाघ्ये सङ्घे पुस्तके च प्रशस्ते ।
सप्तक्षेत्र्यां सद्धनं विप्रकीर्णं, भव्यैरुप्तं मोक्षलक्ष्मीं प्रसूते ॥ १ ॥"—शालिनी

कथितं च धर्ममाहात्म्यम् । एवं नित्यं धर्मार्थं तान् ददाति स्म । यतः—

"देयं स्तोकादपि स्तोकं, न व्यपेक्ष्यो महोदयः ।
इच्छानुरूपो विभवः, कदा कस्य भविष्यति? ॥ १ ॥"—अनु०

१ "मरुदेवा मरुदेव्यप्याख्यातार्षभमातरि स्यात् इति इति श्रीशब्दरत्नाकरे (का० १, श्लो ४)।

२ उक्तं च—

जिणभवण १ बिंब २ पुत्थय ३ संघसरूवाइं ७ सत्त खेत्ताइं ।
तित्थुद्धारो ८ पोसहसाला ९ साहारण १ खेत्त ॥

इति सप्त क्षेत्राणि नव क्षेत्राणि च ।

सङ्घोऽपि चमत्कृतः। तस्या अधीनो जातः। अथ तस्याः पतिर्मैत्रनामा स च मिथ्यात्वी अज्ञानी नित्यं मृत्पिण्डान् पार्थिवान् करोति कुदेवादिभक्तः। एकदा दैवात् जटिलस्य अलाबुभाण्डं तेन भग्नं, ततः कुपितेन जटिलेन काम्बडिकया ताडितो नेत्रोपरि गतनेत्रो मैत्रो विप्रो जातः। स्त्रिया प्रोक्तम्—हे प्रिय! दृष्टं कुसङ्गफलम्? । यतः—

"कुदेशं च कुमित्रं च, कौषधं च कुसौहृदम्।
कुभार्यां च कुराज्यं च, दूरतः परिवर्जयेत्॥ १॥—अनु०
वैद्यं पानरतं नटं कुपठितं मूर्खं परिव्राजकं
योधं कापुरुषं विटं विवयसं स्वाध्यायहीनं द्विजम्।
राज्यं बालनरेन्द्रमन्त्रिरहितं मित्रं छलान्वेषिणं
भार्यां यौवनगर्विताां पररतां नेच्छन्ति ये पण्डिताः॥ २॥—शार्दूल०
खरं श्वानं गजं मत्तं, रण्डां च बहुभाषिणीम्।
कुराजानं कुमित्रं च, दूरतः परिवर्जयेत्॥ ३॥"—अनु०

ततो जैनधर्मो ग्राहितः, परमजैनो जातः, क्रमेण गृहेऽपि महती समृद्धिर्जाता।

एकदा विप्रपङ्क्तौ गत्वा स्थितः। विप्रैः प्रोक्तम्—अहो यतिभिर्गतनेत्रोऽपि मैत्रोऽयं प्रतिलेखितः। तदा मैत्रेण प्रोक्तम्—अहं दिव्यनेत्रो भवामि जैनधर्मप्रभावात्, यूयं गताक्षा भवत। तथैव जातम्। सर्वे पादौ श्रिताः जैनधर्मं ग्राहिताः, शासनदेवतया सर्वेऽपि दिव्यनेत्राः कृताः। गरटा मैत्रश्चायुःक्षये मृत्वा सुरौ भूत्वा मानवभवं प्राप्य मुक्तिं गमिष्येते॥

इति षड्विंशतितमवृत्तार्थः सम्पूर्णः॥ २६॥

❀ ❀ ❀ ❀

सूत्रम्—

क्षेत्राणि कानि तव धर्मनृपस्य सप्त
चैत्यादिकानि भरतः पुनराह तातम्।
सत्यं च तैः परिचितैर्हि पुराऽधुना त्वं
शालत्रयेण[2] भगवन्नभितो विभासि॥ २७॥

व्याख्या—क्षेत्राणीति। भरतः प्राह—हे प्रभो! तव धर्मनृपस्य कानि क्षेत्राणि वर्तन्ते? प्रभुः प्राह—हे चक्रिन्! चैत्यादिकानि क्षेत्राणि सप्त। पुनः भरतः तातं प्राह—हे प्रभो! त्वया यत् उक्तं तत् सत्यं, त्वदुक्तमेवाहं जानामि, श्रद्दधामि[3] चेत्यर्थः। चः समुच्चयार्थः। हि—निश्चितं हे भगवन्! अधुना त्वं अभितः—सर्वतः सालत्रयेण विभासि—रोचसे। कैः? पुरा—पूर्वभवे तैः—

१ तुम्बपात्रम्। २ 'साल०' इत्यपि पाठ। ३ 'श्रद्दधिम' इति क-पाठ.।
जैन० स्तो० १२

अथ समवसरणे वृषभजिनो भरतमुद्दिश्य धर्ममाह—

मूलम्—

व्याख्यानसद्मनि वृषो गदितो जिनेन
क्षेत्रे निजेन निहिते निहितोऽभिषिक्तः ।
अन्यत्र मोहचरटो विधि विष्णु-रुद्र-
व्याजात् त्रिधा धृततनुर्ध्रुवमभ्युपेत ॥ २६ ॥

व्याख्या—हे भरत ! जिनेन मया-मरुदेवापुत्रेण वृषः-धर्मः अभिषिक्तः-भूपः कृतो वर्तते । कथंभूतो वृषः ? व्याख्यानसद्मनि-समवसरणे गदितः-कथितः । पुनः कथं० वृषः ? जिनेन स्वकीयेन-आत्मना निहिते-स्थापिते क्षेत्रे निहितः-स्थापितः । अन्यत्र जिनोक्तक्षेत्रव्यतिरिक्ते स्थाने मोहचरटो ध्रुवं-निश्चलं अभ्युपेतः-आगतः स्थितो वर्तते । कथं० मोह० ? त्रिधा धृततनुः-त्रिविधधृतशरीरः । कस्मात् ? विधिः-ब्रह्मा विष्णुः-कृष्णः रुद्रः-महादेवः एषां व्याजात्-कपटात् ॥ अत्र दृष्टान्तः—

'कोशलायां' एका गरटानाम्नी विप्री जैनसंसर्गात् गलितमिथ्यात्वा भावनयतत्त्वा दृढशीलसत्त्वा श्राविका बभूव । सप्तक्षेत्रविषयं महत्प्रभावमय निराकृतान्यक्षेत्रप्रचयं निश्छिद्रदानफलित सदाऽक्षयं जिनधर्मं मत्वा सप्तकर्तनादि कार्यं कृत्वा तद् विक्रीय धनेन युगन्धरीमुद्गादिधान्यानि लात्वा तेषां धान्यकणानां टङ्कप्रमित एकः पुञ्जः एवं सप्त क्षेत्रत्वात् सप्त पुञ्जान् धर्मार्थं कुलहडिकामध्ये पृथक् पृथक् क्षिप्त्वा नित्यं क्षेपाभेन मन्त्रोऽञ्जीवेन च गृहनिर्वाहं करोति, परं इदं चमत्काप मनसि वहति, यत एतैः सप्तपुञ्जैः कियान् क्षेत्रोद्धार इति ? । तस्या अतीव श्रद्धाभक्तिरञ्जितया शासनदेव्या ते पुञ्जाः सुवर्णमयाः क्रियन्ते । नित्यं सा विप्री तान् कनकमयसर्वकणपुञ्जान् दृष्ट्वा सञ्जातहर्षा चतुर्विधसङ्घाय ददौ । सप्तक्षेत्रे व्ययीकृत्य इत्युक्त्वेति । यतः—

"रम्ये हर्म्ये तीर्थनाथस्य बिम्बे, श्लाघ्ये सङ्घे पुस्तके वा प्रशस्ते ।
सप्तक्षेत्र्यां सद्धनं विप्तवान्, भव्यैरस्य मोक्षलक्ष्मी प्रवृत्ते ॥ १ ॥"—शालिनी

कथितं च धर्ममाहात्म्यम् । एवं नित्यं धर्मार्थं धान्यं ददाति स्म । यतः—

"देयं स्तोकादपि स्तोकं, न व्यपेक्ष्यो महोदयः ।
इच्छानुरूपो विभवः, कदा कस्य भविष्यति ? ॥ १ ॥"—अनु०

---

१ "भरतेशा भरतेभ्यप्याचार्यम्मावरि स्थता इति इति श्रीशब्दरत्नाकरे (का १ श्लो ८) ।

२ उक्तं च—

जिणभवण १ बिंब २ पुत्थय ३ संघसरूवाइं ७ सत्त खेत्ताइं ।
जीवुद्धारो ८ पोसहसाला ९ साहारण १ भेद ॥

इति सप्त क्षेत्राणि दश क्षेत्राणि च ।

सङ्घोऽपि चमत्कृतः। तस्या अधीनो जातः। अथ तस्याः पतिर्मैत्रनामा स च मिथ्यात्वी अज्ञानी नित्यं मृत्पिण्डान् पार्थिवान् करोति कुदेवादिभक्तः। एकदा दैवात् जटिलस्य अलाबुभाण्डं तेन भग्नं, ततः कुपितेन जटिलेन काम्बडिकया ताडितो नेत्रोपरि गतनेत्रो मैत्रो विप्रो जातः। स्त्रिया प्रोक्तम्—हे प्रिय! दृष्टं कुसङ्गफलम्? । यतः—

"कुदेशं च कुमित्रं च, कौपधं च कुसौहृदम्।
कुभार्यां च कुराज्यं च, दूरतः परिवर्जयेत्॥ १ ॥—अनु०
वैद्यं पानरतं नटं कुपठितं मूर्खं परिव्राजकं
योधं कापुरुषं विटं विवयसं स्वाध्यायहीनं द्विजम्।
राज्यं बालनरेन्द्रमन्त्रिरहितं मित्रं छलान्वेषिणं
भार्यां यौवनगर्वितां पररतां नेच्छन्ति ये पण्डिताः॥ २ ॥—शार्दूल०
खरं श्वानं गजं मत्तं, रण्डां च बहुभाषिणीम्।
कुराजानं कुमित्रं च, दूरतः परिवर्जयेत्॥ ३ ॥"—अनु०

ततो जैनधर्मो ग्राहितः, परमजैनो जातः, क्रमेण गृहेऽपि महती समृद्धिर्जाता।

एकदा विप्रपङ्क्तौ गत्वा स्थितः। विप्रैः प्रोक्तम्—अहो यतिभिर्गतनेत्रोऽपि मैत्रोऽयं प्रतिलेखितः। तदा मैत्रेण प्रोक्तम्—अहं दिव्यनेत्रो भवानि जैनधर्मप्रभावात्, यूयं गताक्षा भवत। तथैव जातम्। सर्वे पादौ श्रिताः जैनधर्मं ग्राहिताः, शासनदेवतया सर्वेऽपि दिव्यनेत्राः कृताः। गरटा मैत्रश्चायुःक्षये मृत्वा सुरौ भूत्वा मानवभवं प्राप्य मुक्तिं गमिष्येते॥

इति षड्विंशतितमवृत्तार्थः सम्पूर्णः॥ २६ ॥

* * * *

सूत्रम्—

**क्षेत्राणि कानि तव धर्मनृपस्य सप्त**
**चैत्यादिकानि भरतः पुनराह तातम्।**
**सत्यं च तैः परिचितैर्हि पुराऽधुना त्वं**
**[2]शालत्रयेण भगवन्नभितो विभासि॥ २७ ॥**

व्याख्या—क्षेत्राणीति। भरतः प्राह—हे प्रभो! तव धर्मनृपस्य कानि क्षेत्राणि वर्तन्ते? प्रभुः प्राह—हे चक्रिन्! चैत्यादिकानि क्षेत्राणि सप्त। पुनः भरतः तातं प्राह—हे प्रभो! त्वया यत् उक्तं तत् सत्यं, त्वदुक्तमेवाहं जानामि, श्रद्दधामि चेत्यर्थः। चः समुच्चयार्थः। हि—निश्चितं हे भगवन्! अधुना त्वं अभितः—सर्वतः सालत्रयेण विभासि—रोचसे। कैः? पुरा—पूर्वभवे तैः—

१ शुम्बपाग्रम्। २ 'साल०' इत्यपि पाठ। ३ 'श्रद्दधिम' इति क–पाठ।
जैन० स्तो० १२

प्रसिद्धैः सप्तक्षेत्रैः परिचितैः कृत्वा करणभूतैः । स्थानशब्दः दन्त्यः सालम्बश्च । क्षेत्रसप्तकोपलक्षणत्वात् 'विंशतिस्थानकैरिति ।

अत्र पूर्वभवो यथा—'जम्बू'द्वीपपूर्व'विदेह'पुष्कलावती'विजये 'पुण्डरीकिण्यां' पुर्यां वज्रसेन धारिण्योः पञ्च पुत्राः—वज्रनाभनामा चक्री ऋषभजिनजीवः १, बाहुः भरत चक्रिजीवः साधूनामभपानानयनवैयावृत्त्यकरणात् चक्रिभोगफलं बद्धम् २, सुबाहुः साधूनां विश्रामणया बाहुबलजीव. बाहुबलमुपार्जितवान् ३, पीठः ब्राह्मीजीवः ४, महापीठः सुन्दरीजीवः ५, एतौ बाहुसुबाहुस्तुत्य(तिम)सहमानौ सर्वेषां 'कौम वाहल कइ धाम वाहल' इति भाषया मैत्र्या स्त्रीगोत्रबन्धं चक्रतुः । यतः—

"तद् भोजनं यद् गुरुदत्तशेषं, सा प्राज्ञता या न करोति पापम् ।
तत् सौहृदं यत् क्रियते परोक्षे, दम्भैर्विना यः क्रियते स धर्मः ॥ १ ॥"–इन्द्र०

षष्ठस्तु सुयशा इति नाम्ना कस्यचित् राज्ञः पुत्रः वज्रनाभस्य सारथिर्गृहस्थावस्थायां श्रेयांसजीवः ६ । वज्रसेनतीर्थङ्करपार्श्वे गृहीतदीक्षाः पञ्चापि । वज्रनाभेन विंशत्या स्थानकैः तीर्थकृन्नामकर्म समुपार्जितम् । सर्वेऽप्यायुःक्षये 'सर्वार्थसिद्धे' देवाः (जाताः) । ततोऽत्रोत्पन्नस्त्वं भगवान् सर्वातिशयैर्विराजस इत्यर्थः । इति सप्तविंशतितमपद्यार्थः ॥ २७ ॥



---

१ विंशतिः स्थानकानि ज्ञाताधर्मकथाङ्गे (अ ८ सू ६४) यथा—

'अरहंत-सिद्ध-पवयण-गुरु-थेर-बहुस्सुए-तवस्सीसु ।
वच्छलया य तेसिं अभिक्खणाणोवओगे य ॥ ३१ ॥
दंसण विणए आवस्सए य सीलव्वए निरइयारं ।
खणलव तव च्चियाए वेयावच्चे समाही य ॥ ३२ ॥
अप्पुव्वणाणगहणे सुयभत्ती पवयणे पभावणया ।
एएहिं कारणेहिं तित्थयरत्तं लहइ जीवो ॥ ३३ ॥
[ अर्हत् सिद्ध-प्रवचन-गुरु-स्थविर-बहुश्रुत-तपस्विषु ।
वात्सल्यता च तेषामभीक्ष्णं ज्ञानोपयोगश्च ॥
दर्शनं विनय आवश्यकानि च शीलव्रतं निरतिचारम् ।
क्षणलवः तपस्त्यागो वैयावृत्यं समाधिश्च ॥
अपूर्वज्ञानग्रहणं श्रुतभक्तिः प्रवचने च प्रभावना ।
एतैः कारणैस्तीर्थकरत्वं लभते जीवः ।]

श्रीनेमिचन्द्रसूरिसूत्रिते प्रवचनसारोद्धारे (द्वा १ गा ३१-३१२) श्रीप्रद्युम्नसूरिविरचिते विचारसारप्रकरणे (१०७तमे पृष्ठे) च कश्चित् पाठभिन्नता वर्तते ।

२ पीठ महापीठौ ।

३ तात्पर्यम्—
कर्म बहुलं किं वा धर्म बहुलम् ।

४ भाषया इति पाठः क प्रतौ नास्ति । ५ 'परोक्षे' इति ख-पाठः ।

सूत्रम्—

जैनो यती जिनजनो जिनसद्म जैनं
ज्ञानं जिनो जगति पञ्च शुभा जकाराः ।
नाभेयभूर्भणति तेष्वनघे सदा किं
त्वत्सङ्गमे सुमनसो न रमन्त एव? ॥ २८ ॥

व्याख्या—( जैनो यतीति ) जगति—लोके पञ्च शुभाः—श्रेयस्करा जकारा वर्तन्ते । तानाह—'जैनो यती' जिनो देवता अस्येति जैनः जिनसम्बन्धी साधुः, जिनजनः—सम्यग्दृष्टिः, जिनसद्म—जिनमन्दिरं, जैनं ज्ञानं—जिनभाषित आगमः, जिनः—अर्हन् देवः इति । नाभेयभूः—श्रीभरतः चक्री भणति—वक्ति—हे जिन! सदा सुमनसः—पण्डिताः तेषु—पञ्चजकारेषु किं न रमन्ते एव? अपि तु रमन्ते एव । कस्मिन् सति? त्वत्सङ्गमे सति । कथंभूते त्वत्सङ्गमे? अनघे—पापरहिते प्रशस्ते । यतः [1]केशिकुमारसाधुना प्रदेशीराजा प्रतिबोधितः १ । श्रीमहावीरेणापि अम्बडाय प्रोक्तम्—त्वया सुलसा मदर्थं सम्भाषणीया विलोकनीया च । तेन हरिप्रमुखं रूपं दर्शयताऽपि सा न चलितेति २ । यत्र स्थाने जिनालयः तत्र साधुनाऽपि चातुर्मासकं स्थेयम् ३ । पुष्पचूला-राज्ञी नरकावासं स्वर्गं च स्वप्ने ददर्श । पाषण्डिभिस्तत्स्वरूपं प्रोक्तं न घटितं, श्रीअन्निकासुताचार्यैस्तत् प्रोक्तं तु तथैव मिलितमिति सा प्रतिबुद्धा आर्या जातेति प्रसिद्धम् ४ । अष्टादशदोषरहितो रागद्वेषमुक्तो जिनोऽर्हन्नेव देवः । अत्र सवैया इकतीसा—

[2]छुटे अन्तराय पञ्च रंचही न राग रोस हास छक्क काम कीनो अंचहीन देपीयै
वंचना अज्ञानकी मिथ्यातको प्रपञ्च निद्द आश्रवको संचसो तो मूलथैं विलेपीये ।
एसे जो अढार दोष घातीकर्मभाव पोष ताको परिशोष याके ज्ञानमैं विशेपीइ
सोइ शुद्ध नामकोप घोषतें अनंत तोष मोषमग्गदाता त्राता देवदेव लेखीये ॥१॥[3]

—( श्रीयशोविजयगणिगुम्फिते दिक्पट ८४ बोलेतिसंज्ञके ग्रन्थे १८ )

इत्यष्टाविंशतितमवृत्तस्यार्थः ॥ २८ ॥

ॐ ॐ ॐ ॐ

---

१ जैनो यतीत्यादीनां क्रमेण उदाहरणानि ।

२ तात्पर्यम्—
विनाशोऽन्तरायपञ्चकस्य तिलमात्रमपि रागरोषयोरस्तित्वं न हासादिषट्कस्य कामस्य च क्षय
अज्ञानस्य वञ्चनाया', मिथ्यात्वस्य प्रपञ्चस्य, निद्रायाः आश्रवसञ्चयस्य च मूलतो विलेखनम् ।
एते येऽष्टादश दोषा घातिकर्मभावपोषकास्तेषां परिशोषो यस्य ज्ञाने विशेषत
स एव शब्दनामकोष तस्य घोषात् अनन्तस्तोष, स मोक्षमार्गदाता त्राता देवदेवो गण्यते ।

३ सन्तुल्यतां यदुक्तं श्रीहेमचन्द्राचार्यैः अभिधानचिन्तामणौ ( का० १, श्लो० ७२-७३ )—
"अन्तराया दान-लाभ-वीर्य-भोगो-पभोगगा' । हासो रत्यरती भीतिर्जुगुप्सा शोक एव च ॥ १ ॥
कामो मिथ्यात्वमज्ञानं निद्रा चाविरतिस्तथा । रागो द्वेषश्च नो दोषास्तेषामष्टादशाप्यमी ॥ २ ॥"

४ मुद्रितोऽयं ग्रन्थ प्रकरणरत्नाकरे (भा० १ ) ।

प्रसिद्धैः ससक्षेत्रैः परिचितैः कृत्वा कारणभूतैः । स्थानकशब्दः दन्त्यः स्थानकम् । क्षेत्रसप्तकोपलक्षणत्वात् 'विंशतिस्थानकैरिति ।

अत्र पूर्वभवो यथा—'जम्बू'द्वीपपूर्व'विदेह''पुष्कलावती'विजये 'पुण्डरीकिण्यां' पुर्यां वज्रसेन धारिण्योः पञ्च पुत्राः—वज्रनाभनामा चक्री ऋषभजिनजीवः १, बाहुः भरतचक्रिजीवः साधूनामन्नपानानयनवैयावृत्त्यकरणात् चक्रिभोगफलं बद्धम् २, सुबाहुः साधूनां विश्रामणया बाहुबलजीवः बाहुबलमुपार्जितवान् ३, पीठः ब्राह्मीजीवः ४, महापीठः सुन्दरीजीवः ५, एतौ बाहुसुबाहुस्तुत्य(तिम)सहमानौ सर्वेषां 'कौम बाहूलं कि वाम बाहूलं' इति भाषया मौषया स्त्रीगोत्रबन्धं चक्रतुः । यतः—

"यद् भोजने यद् गुरुलघ्वक्षेपं, सा प्राज्ञता या न करोति पापम् ।
तत् सौहृदं यत् क्रियते परोक्षे, दम्भैर्विना यः क्रियते स धर्मः ॥ १ ॥–इन०

पञ्चमस्तु सुयशा इति नाम्ना कस्यचित् राज्ञः पुत्रः वज्रनाभस्य सारथिर्गृहस्थावस्थायां श्रेयांसजीवः ६ । वज्रसेनतीर्थङ्करपार्श्वे गृहीतदीक्षाः षडपि । वज्रनाभेन विंशत्या स्थानकैः तीर्थकृन्नामकर्म समुपार्जितम् । सर्वेऽप्यायुःक्षये 'सर्वार्थसिद्धे' देवाः (जाताः) । ततोऽप्युत्तमस्त्वं भगवान् सर्वातिशयैर्विराजस इत्यर्थः । इति सप्तविंशतितमवृत्तार्थः ॥ २७ ॥

* * * *

---

१ विंशतिः स्थानकानि ज्ञाताधर्मकथाङ्गे ( अ ८ सू ६४ ) यथा—

'अरहंत-सिद्ध पवयण-गुरु थेर-बहुस्सुए-तवस्सीसु ।
वच्छल्लया य तेसिं अभिक्खणाणोवओगे य ॥ ९१ ॥
दंसण विणए आवस्सए य सीलव्वए निरइयारं ।
खणलव तव चियाए वेयावच्चे समाही य ॥ ९२ ॥
अपुव्वणाणगहणे सुयभत्ती पवयणे पभावणया ।
एएहिं कारणेहिं तित्थयरत्तं लहइ जीवो ॥ ९३ ॥'
[ अर्हत्-सिद्ध-प्रवचन-गुरु स्थविर-बहुश्रुत-तपस्विषु ।
वत्सलता च तेषामभीक्ष्णं ज्ञानोपयोगश्च ॥
दर्शनं विनय आवश्यकानि च शीलव्रत निरतिचारम् ।
क्षणलवः तपस्त्यागो वैयावृत्त्यं समाधिश्च ॥
अपूर्वज्ञानग्रहणं श्रुतभक्तिः प्रवचने च प्रभावना ।
एतैः कारणैस्तीर्थकरत्वं लभते जीवः ।]

श्रीनेमिचन्द्रसूरिसंदृब्धे प्रवचनसारोद्धारे ( द्वा १ गा ३१ –३१९ ) श्रीमद्भुवनसूरिविरचिते विचारसारप्रकरणे ( १०७तमे पृष्ठे ) च कश्चित् पाठभिन्नता वर्तते ।

२ पीठ-महापीठौ ।

३ तात्पर्यम्—

कर्म महत्तमं किं वा कर्म महत्तमम् ।

४ 'भाषया' इति पाठः क-प्रतौ नास्ति । ५ 'परोक्षे' इति क-पाठः ।

अत्र तथ्योपरि दृष्टान्तः—कस्मिंश्चिद् ग्रामे खी(क्षी)रकदम्बोपाध्यायो निजपुत्रं पर्वताख्यं तथा वसुनामानं राजपुत्रं तथा नारदं ऋषिं च पाठयति। एकदा कुड्यान्तरतो जैनसाधुमुखादेषु द्वौ नरकगामिनाविति श्रुत्वा क्षीरकदम्बकेन चिन्तितम्—राजपुत्रस्तु नरकगामी "राज्यं नरकान्तं" इत्युक्तेः, तेन द्वौ परीक्ष्येते। ततोऽलक्तरसेन भृतश्चर्मच्छगलो नारदाय समर्पितो यत्र कोऽपि न पश्यति तत्र त्वया हन्तव्य इत्युक्त्वा। तमादाय गतो वनान्तरे नारदश्चिन्तयितुं लग्नः। अत्र सिद्धाः केवलिनोऽहं च सर्वेऽपि पश्यन्ति, अतो न हन्तव्य एव, एत्य गुरवेऽर्पितः। कथितं च—विधिना निषेधः प्राप्तः। ज्ञातम्—सुगतिभागसौ। तथैव पर्वताय समर्पितः। तेन वनान्तरे हतः। ज्ञातम्—नरकगामी। उपाध्यायो व्रतं गृहीत्वा सुगतिं ययौ। ततो वसुर्भूपो जातः सत्यवादी लोकेऽभूत्।

एकदा नारदः पाठकशालां समेतः। तदा पर्वतोऽजाः—चोरकटा यष्टव्या इति द्विजानध्यापयति। नारदेन गदितम्—अजाः—सप्तत्रयंत्रीहयः, न जायन्ते वापिता इति अजाः; अत्र गौणार्थः, न तु मुख्यार्थः। द्वयोर्विवादे प्रभाते सकललोकसमक्षं पृष्टो वसुनृपः पर्वतदाक्षिण्यात् कूटसाक्षी बभूव। तदा देवेन सिंहासनात् पातितो मृत्वा नरकं जगाम। प्रशंसितो लोकैर्नारदः सत्यवाक् क्रमेण सुगतिं ययौ। इति एकोनत्रिंशत्तमकाव्यार्थः ॥ २९ ॥

✻ ✻ ✻ ✻

अथ पुस्तकमाश्रित्य धर्ममाह—

सूत्रम्—

सद् बृंहितं प्रवरपुस्तकमस्तपापं
पुण्योपकारि परमं परमैः प्रपूज्यम्।
सम्भालनादिकरणाच्छिवदं त्वयोक्तं
ज्ञानं त्वयि स्फुरति विश्वविकाशहेतुः ॥ ३० ॥

व्याख्या—सदिति। अयि इति कोमलामन्त्रणे। हे प्रभो! त्वया प्रवरपुस्तकं—सुवर्णाद्यक्षरमयज्ञानकोशलक्षणं शिवदं—मुक्तिदमुक्तं—कथितम्। कस्मात्? सम्भालनादिकरणात् हेतोः। कथंभूतं प्रवरपुस्तकम्? सत्—निरन्तरं अर्चितं वा बृंहितं—वृद्धिं नीतं लिखितेन लिखापनेन चेति। पुनः कथं० प्र० पु०? अस्तपापं—गतपापं, धर्मपुस्तकं—धर्मपुस्तकस्योपष्टम्भदायकं अन्यपुस्तकमपि नोपेक्षणीयम्। पुनः कथं० प्र० पु०? 'पुण्योपकारि' पुण्याय—धर्माय उपकरोतीत्येवंशीलम्। पुनः

---

१ 'कस्मिन् ग्रामे' इति ख-पाठ। २ 'भूतचर्म०' इति क-पाठः।

सूत्रम्—

तत्त्वानि तीर्थकर-तीर्थ-तपोधनाश्च
तथ्यं च तात्त्विकतपः खलु षट्तकारी।
तस्यां रतो भवति मङ्क्षु नरो हि हित्वा
चित्रं विभो! यदसिकर्म विपाकशून्यः ॥ २९ ॥

व्याख्या—(तत्त्वानीति)। खलु—निश्चितं एषा षट्तकारी वर्तते। षण्णां तकाराणां समाहारः षट्तकारी। के ते तकाराः? तानाह—तत्त्वानि—जीवाजीवादिकानि नव, तीर्थङ्कराः—चतुर्विंशतिर्जिनाः पञ्चदशकर्मभूमिसंस्थिता अपि, तीर्थानि—शत्रुञ्जयः १ रैवताचलः २ समेतशिखरी ३ अष्टापदः ४ तीर्थङ्करकल्याणकस्थानानि महामुनीनामनशनादिकस्थानानि यथाऽस्तिका सुताचार्यसिद्धिगमनं स्थानं प्रयाग इति तीर्थं जातमित्यादि तीर्थानि शाश्वतानि अशाश्वतानि, तपोधनाः—मुनयः, तथ्यं—सत्यवाक्, तात्त्विकतपः—आकाङ्क्षादिरहितं निर्मलं तपः। चकारौ समुच्चयार्थौ। हे विभो!—हे युगादिदेव! हि—निश्चितं यस्मात्—यस्मात् कारणात् नरः—सत्पुरुषः तस्यां षट्तकारिकायां रतः—आसक्तः सन् मङ्क्षु—शीघ्रं 'विपाकशून्यो' भवति विपाकेन—ज्ञानावरणाद्यष्टकर्मणां फलोदयेन शून्यः—रहित इत्यर्थः। किं कृत्वा? असिकर्म हित्वा—त्यक्त्वा असिवत् च तत् कर्म च असिकर्म तीक्ष्णत्वात् भेदच्छेदकारित्वात् खड्गोपमानं युक्तं, दुःसहं कर्म। कथं० कर्म? चित्रं—विचित्रं नानाप्रकारमिति॥

---

प्रवचनसारोद्धारे (द्वा० ४१ गा० ४५१–४५२) तु यथा—

अन्नाण १ कोह २ मय ३ माण ४ लोह ५ माया ६ रई ७ अरई ८ य।
निद्दा ९ सोय १० अलियवयण ११ चोरिआ १२ मच्छर १३ भया १४ य ॥ ४५१ ॥
पाणिवह १५ पेम १६ कीलापसंग १७ हासा १८ य जस्स इय दोसा।
अट्ठारस वि पणट्ठा नमामि देवाहिदेवं तं ॥ ४५२ ॥

[ अज्ञानं क्रोधः मदः मानः लोभः माया रतिः अरतिश्च।
निद्रा शोकः अलीकवचनं चौरिका मत्सरः भयं च ॥
प्राणिवधः प्रेम क्रीडाप्रसङ्गः हासः च यस्य इमे दोषाः।
अष्टादशापि प्रणष्टा नमामि देवाधिदेवं तम् ॥ ]

1 श्रीवज्रस्वामिनोऽनशनस्थाने पर्वतो रथावर्त्तनाम तीर्थं जज्ञे यतः श्रीहेमाचार्याः परिशिष्टपर्वणि (स० १२ श्लो० १०७–१०८) प्राहुः—

"ततः प्रदक्षिणीचक्रे तं गिरिं मघवान्रथात्।
भूरुहादीन् नमयंश्च स्यन्दनमिव मन्दिरः ॥ १ ॥
विनम्रा इव तरूणि तिर्यग्नेव च पर्वतः।
तदनन्याभिधया जज्ञे रथावर्त इति गिरिः ॥ २ ॥

अत्र तथ्योपरि दृष्टान्तः—कस्मिंश्चिद् ग्रामे खी(क्षी)रकदम्बोपाध्यायो निजपुत्रं पर्वताख्यं तथा वसुनामानं राजपुत्रं तथा नारदं ऋषिं च पाठयति। एकदा कुड्यान्तरतो जैनसाधु-मुखादेषु द्वौ नरकगामिनाविति श्रुत्वा क्षीरकदम्बकेन चिन्तितम्–राजपुत्रस्तु नरकगामी "राज्यं नरकान्तं" इत्युक्तेः, तेन द्वौ परीक्ष्येते। ततोऽलक्तरसेन भृतश्चर्मच्छगलो नारदाय समर्पितो यत्र कोऽपि न पश्यति तत्र त्वया हन्तव्य इत्युक्त्वा। तमादाय गतो वनान्तरे नारदश्चिन्तयितुं लग्नः। अत्र सिद्धाः केवलिनोऽहं च सर्वेऽपि पश्यन्ति, अतो न हन्तव्य एव, एत्य गुरवेऽर्पितः। कथितं च–विधिना निषेधः प्राप्तः। ज्ञातम्–सुगतिभागसौ। तथैव पर्वताय समर्पितः। तेन वनान्तरे हतः। ज्ञातम्–नरकगामी। उपाध्यायो व्रतं गृहीत्वा सुगतिं ययौ। ततो वसुर्भूपो जातः सत्यवादी लोकेऽभूत्।

एकदा नारदः पाठकशालां समेतः। तदा पर्वतोऽजाः–वोत्कटा यष्टव्या इति द्विजानध्याप-यति। नारदेन गदितम्–अजाः–सप्तवर्षव्रीहयः, न जायन्ते वापिता इति अजाः; अत्र गौणार्थः, न तु मुख्यार्थः। द्वयोर्विवादे प्रभाते सकललोकसमक्षं पृष्टो वसुनृपः पर्वतदाक्षिण्यात् कूटसाक्षी बभूव। तदा देवेन सिंहासनात् पातितो मृत्वा नरकं जगाम। प्रशंसितो लोकैर्नारदः सत्य-वाक् क्रमेण सुगतिं ययौ। इति एकोनत्रिंशत्तमकाव्यार्थः ॥ २९ ॥

⁂ ⁂ ⁂ ⁂

अथ पुस्तकमाश्रित्य धर्ममाह—

सूत्रम्—

सद् बृंहितं प्रवरपुस्तकमस्तपापं
पुण्योपकारि परमं परमैः प्रपूज्यम्।
सम्भालनादिकरणाच्छिवदं त्वयोक्तं
ज्ञानं त्वयि स्फुरति विश्वविकाशहेतुः ॥ ३० ॥

व्याख्या—सदिति। अयि इति कोमलामन्त्रणे। हे प्रभो! त्वया प्रवरपुस्तकं–सुवर्णाद्यक्षरम-यज्ञानकोशलक्षणं शिवदं–मुक्तिदमुक्तं–कथितम्। कस्मात्? सम्भालनादिकरणात् हेतोः। कथं-भूतं प्रवरपुस्तकम्? सत्–निरन्तरं अर्चितं वा बृंहितं–वृद्धिं नीतं लिखितेन लिखापनेन चेति। पुनः कथं० प्र० पु०? अस्तपापं–गतपापं, धर्मपुस्तकं–धर्मपुस्तकस्योपष्टम्भदायकं अन्यपुस्तकमपि नोपेक्षणीयम्। पुनः कथं० प्र० पु०? 'पुण्योपकारि' पुण्याय–धर्माय उपकरोतीत्येवंशीलम्। पुनः

---

१ 'कस्मिन् ग्रामे' इति ख–पाठ। २ 'भूतचर्म०' इति क–पाठ.।

कथं० प्र० पु०? परम–प्रधान, भावज्ञानहेतुत्वात्। पुनः कथं प्र० पु०? परमैः–गणधरादिभि' प्रपूज्यं–पूजनीयं "नमो धमीए लिवीए"इत्यागमोक्तत्वात्। तु' इति विशेषार्थे। ज्ञानं–भावज्ञान विश्वविकाशहेतु –लोकालोकप्रकाशकारणं स्फुरति–द्योतते। ज्ञानज्ञानिनोरभेदोपचारात् उपयुक्तो ज्ञानी इत्यपि शब्दार्थः। पुनर्विशेषतो द्रव्यश्रुतमेव 'विशिनष्टि पत', "नमो सुयस्स इत्यादि(ना) द्रव्यनिक्षेपस्याराध्यत्वं सुप्रतीतं अक्षरादिश्रुतभेदेषु संज्ञाव्यञ्जनाक्षरादीनां भावश्रुतकारणत्वेन द्रव्यश्रुतत्वात्, पत्रकपुस्तकलिखितस्स (च) दव्वसुय सं पत्तयपोत्थयलिहियम्" इत्यादि प्रति माशतक(स्वोपज्ञ)वृत्तौ (पृ० १०) आचारांग १ सु(अ)गडांग २ ठाणांग ३ समवायांग ४ भगवती ५ ज्ञाताधर्मकथा ६ उपासकदशांग ७ अन्तगडदशांग ८ अणुत्तरोववाईदशांग ९ प्रश्नव्याकरण १० विपाक ११ इत्येकादशाङ्गानि।

अथ उववाई १ रायपसेणी २ जीवाभिगम ३ पण्णवणा ४ जंबूदीवपन्नत्ती ५ सूरपन्नत्ती ६ चंदपन्नत्ती ७ कप्पिया ८ कप्पवडिंसिया ९ पुप्फिया १० पुप्फचूलिया ११ वह्निदसा १२ 'એ પાછલાં પાંચને નિરાવલી કહીએ इत्युपाङ्गानि ॥

अथ उत्तराध्ययन १ आवश्यक २ पिण्डनिर्युक्ति तथा ओघनिर्युक्ति ३ दशवैकालिक ४ इति चत्वारि मूलसूत्राणि ॥

अथ निशीथ १ महानिशीथ २ व्यवहार ३ दशाश्रुतस्कन्ध ४ बृहत्कल्प ५ जीतकल्प ६ इति षट् छेदग्रन्थाः ॥

अथ नंदीसूत्र १ अनुयोगद्वार २ इति ॥

अथ चउसरणपयन्नु २ आउरपच्चक्खाण ३ भक्तपरिज्ञा ४ तंदुलवियालियं ५ चंदाविज्झय ६ गणिविज्जा ७ मरणसमाहि ८ देवेंद्रस्तव ९ संस्तारक १० इति दश प्रकीर्णकानि ॥ ' એ ૪૫ પિસ્તાલીસ आगमाः। गाथा—

"इक्कारस अंगाइं ११ बारस उवंगाइं २३ दस पयन्नाइं ३३।
छ छेय ३९ मूल चउरो ४३ नंदी ४४ अणुयोग पणयाला ४५ ॥ १ ॥

---

१ छाया—नमो ब्राह्म्यै लिप्यै। २ भगवत्यां (सू० १)। ३ लिप्यादि इति क-पाठः। ४ विशेषेण व्याख्यानयति। ५ छाया—नमः श्रुताय। ६ भगवत्यां (सू० १)।

७ छाया—

द्रव्यश्रुतं यत् पत्रकपुस्तकलिखितम्।

८ दृश्यतोऽयं अनुयोगद्वारे (सू० ३०)। ९ तात्पर्यम्—एतानि पाश्चात्यानि पञ्च निरयावली कथ्यन्ते। अमी पञ्चचत्वारिंशत्।

११ छाया—

एकादशाङ्गानि द्वादशोपाङ्गानि दश प्रकीर्णकानि।
षट् छेद(सूत्राणि) मूलानि चत्वारि अनुयोगौ पञ्चचत्वारिंशत्॥

पणयालीस आगमसव्वगहाण हुंति छ लक्खा ६००००० ।
एगुणसत्तसहस्सा ६९००० छच्च सया ६०० चेव पणतीसा ३५ ॥ २ ॥"

इति 'एगुणसट्ठिसहस्सा ५९००० तिन्निसया ३०० चेव तीसा य ३०' इत्यपि पाठः, निर्युक्तिचूर्णिभाष्यवृत्त्या समेताः वसुदेवहींडि प्रथम खण्ड ११००० द्वितीयखण्ड २४००० एवं कारइ जैनसिद्धान्तसंख्या इति पूर्णः ॥ अन्ये च जैनन्यायाः—मल्लवादिकृतनयचक्रनामा ग्रन्थः । हरिभद्रसूरिकृतोऽनेकान्तजयपताकानामा ग्रन्थः, श्रीवादिदेवसूरिकृतः स्याद्वादरत्नाकरनामा ग्रन्थः । श्रीहेमचन्द्रसूरिकृतप्रमाणमीमांसानामा ग्रन्थः । जैनतर्कभाषा आधुनिकश्रीयशोविजयकृतोऽनेकान्तव्यवस्थानामा ग्रन्थः । इत्यादि जैनतर्काः ॥ जैनव्याकरणं हैमव्याकरणम् । यतः—

"किं स्तुमः शब्दपाथोधे–र्हेमचन्द्रयतेर्मतिम् ? ।
एकेनाऽपि हि येनेदृक्, कृतं शब्दानुशासनम् ॥ १ ॥"

श्वेताम्बरमते नयाः सप्तैव–नैगमः १ सङ्ग्रहः २ व्यवहारः ३ ऋजुसूत्रः ४ शब्दः ५ समभिरूढः ६ एवम्भूतः ७ इति स्यात्कारलाञ्छिताः सर्वे जैनाः सर्वत्राजेयाः "नानेकान्तं प्रतिक्षिपेत्" इति ( वीतरागस्तोत्रे प्र० ( ) हेमाचार्यवचनात् । अत्र सवैयो ( दिक्पट ८४–बोलेतिनाम्नि ग्रन्थे )—

सँागरके आगैं कहा गगरि धरैगी गर्व खर्व वेसरके आगैं कहा अर्व इंदको
नाक वृक्षके आगैं कहा आकको अंकूर छाजै सूरतेज आगैं कहा राजै धाम चंदको
कामधेनु आगैं कहा कूकरी करै गुमान भूपतिके आगैं कहा जोर है पुलिंदको
ऐसै सर्वांग शुद्ध ग्रन्थ जो सेतांबरके ताकैं आगैं कौन दर्प दुर्मतीके वृंदको ? ॥ १ ॥

---

पञ्चचत्वारिंशदागमसर्व गाथना भवन्ति षट्लक्षा. ।
एकोनसप्तति. सहस्राणि षट् शतानि चैव पञ्चत्रिंशत् ॥

१ छाया—

एकोनषष्टि. सहस्राणि त्रीणि शतानि चैव त्रिंशत् च ।

२ तृतीयचतुर्थखण्डानुपलब्धेस्तदानीमपि । ३ अद्याप्यमुद्रित' । ४ अय ग्रन्थश्चतुरशीतिसहस्रश्लोकप्रमाणक. । अस्य टीका स्याद्वादरत्नाकरावतारिका जैनचिन्तामणीत्यपराभिधाना । ५ श्रीभावप्रभसूरीणां समसमयित्वात् इद विशेषणम् ।

६ स्तुतिकारै' प्रोक्तम्—

"नयास्तव 'स्यात्' पदलाञ्छना इमे रसोपविद्धा इव लोहधातव' ।
भवन्त्यभिप्रेतफला यतस्ततो भवन्तमार्या प्रणता हितैषिणः ॥"

७ तात्पर्यम्—

सागरस्य अग्रे कथ घटिका धारयेत् गर्वं खर्वो वेसर. कथ अग्रेऽश्वादिन्द्रस्य
नाकवृक्षस्य पुरत कथं अर्कस्याङ्कुरः शोभते ? सूर्यतेजसः पुरस्तात् कथं राजते धाम चन्द्रस्य ?
कामधेनोः अग्रत कथ शुनिका कुर्यात् गर्वं भूपतेः पुरतः किं बल पुलिन्दस्य ?
एतादृशाः सर्वाङ्गशुद्धा ग्रन्था श्वेताम्बराणां तेषां पुरतः को दर्प. दुर्मतीनां वृन्दस्य ?

"धन्या भारतवर्षसम्भवजना यत् यत्र काले कलौ
नोतीर्थेश्वरकेवले निरवधौ नश्यन्मनःपर्यये ।
मुच्यत्स्वग्रविशेषसर्वपरिनिद्दर्गोगेत्यदुःखास्पदे
श्रीजैनेन्द्रवचोऽनुरागभक्ततः कुर्वन्ति धर्मोद्यमम् ॥ १ ॥"—शार्दूल०

स्यात्कारपदरहितास्तु सर्वेऽपि मिथ्यादृष्टयः । अतः षट् दर्शनान्याह—जैन स्याद्वादी आर्हत[1] १ इति, बौद्ध शून्यवादी सौगतः २ इति, शैवशासन नैयायिकः अक्षपादो यौगः ३ इति, साङ्ख्यं कापिलः ४ इति, वैशेषिक कणाद औलूक्यः ५ इति, जैमिनीयं भाट्टदर्शनं ६ इति । नैयायिक वैशेषिकयोरभेदं कश्चिन्मन्यन्ते तदा पञ्चैवास्तिकवादिनः । ततः षष्ठं नास्तिकमतं बार्हस्पत्यः नास्तिकः चार्वाकः लौकायतिक[2] इति षड्दर्शनानां एकैकस्य नामान्तराणि ज्ञेयानि[3] । अत्र दृष्टान्तः—

'मथुरा'यां पुरि गुणप्रियनामा व्यवहारी मनीनाम्नी प्रिया । तयोः पुत्रः सुन्दराह्वो वर्तते । स च दुर्विनीतो दुष्टाशयो नास्तिकमतिर्धर्मविमुखोऽस्ति । यतः ( षड्दर्शनसमुच्चये श्लो० ८२ )—

"पिब खाद च चारुलोचने !, यदतीतं वरगात्रि ! तन्न ते ।
न हि भीरु गतं निवर्तते, समुदयमात्रमिदं कलेवरम् ॥ १ ॥"—वैतालीयम्

गुणप्रियस्तु जैनधर्मरक्तः स्वगृहाग्र धर्मशालायां स्थितान् साधून् सेवते स । सुन्दरस्तु तेषां विरुद्धवचनं जल्पति । यदा साधव आगमघोषं कुर्वन्ति कारयन्ति तदा स वक्ति—एते वायसा[4] कां कां कुर्वन्ति, श्वाना इव हाऊ हाऊ कुर्वन्ति ।

एकदा साधुषु बहिर्भूमिगतेषु पुस्तकमादायानेनावकरे क्षिप्तम् । आयाता मुनयः, पुस्तकं न दृष्टम् । ज्ञातेन जनकेन हक्कितोऽसौ तत आनीतं पुस्तकम् । कथितं च किमेतस्य ज्ञानस्याशातनां करोषि ? महापापाय भविष्यति । यतः—

"ज्ञानस्य ज्ञानिनां चैव, निन्दा-प्रद्वेष-मत्सरैः ।
उपघातैश्च विघ्नैश्च, ज्ञानघ्नं कर्म बध्यते ॥ १ ॥"—अनु०

तदा दुर्विनीत उवाच—किं काद्गले कज्जले वा ज्ञानं प्रविष्टमस्ति ? । एवं देशनानर्होऽसौ पितुः स्वभावात् मृतः काकोऽभवत् । नित्यं विष्ठामत्ति । एकदा श्येनेन गले गृहीत्वा निपातितो मृत्वा

---

१ 'वि भवद्दी' इति क–पाठः । २ लक्षणापि भवाः ।

३ आद्यादारभ्याक्रमशः [illegible] भट्ट–प्रभाकर–[illegible]–अक्षपाद–कपिला इत्यपरापरे । यद्वा–जैमिनिः शिष्यो मीमांसाकृत् १ प्रभाकरः–उत्तरमीमांसाकृत् २ दुर्वेकिमाचार्यनामा वैशेषिकाचार्यः ३ अक्षपादः नैयायिकः ४, कपिलमुनिः साङ्ख्यस्य इति ।

४ 'च तेषां' इति क–पाठः ।

तस्मिन्नेव गुणप्रियगृहे शुनीपुत्रो जातः । नित्यममेध्यमश्नाति । तत्र ज्ञानशाली सूरिराययौ । तं मण्डलं दृष्ट्वा जगौ–भो भषण ! त्वं स्मरसि सुन्दरपूर्वभवम् ? । इति श्रुत्वा जातजातिस्मृतिः पूर्वकर्म निन्द्यमानः सूरिपादौ श्रितः । सूरिणा सम्यक्‌ प्रकारेण परमेष्ठिपूर्वकं धर्मध्यानं ग्राहितः । पाक्षिकमनशनं कृत्वा शुभध्यानेन मृत्वा पुनर्गुणप्रियस्यैव पुत्रो जातः । धर्ममतिरिति नाम दत्तम् । प्राप्तयौवनो मुनिसङ्गतो ज्ञाततत्त्वो लिखापितसिद्धान्तपुस्तकः । यतः—

"लेखयन्ति नरा धन्या, ये जैनागमपुस्तकान् ।
ते सर्वे वाङ्मयं ज्ञात्वा, सिद्धिं यान्ति न संशयः ॥ १ ॥"–अनु०

ये लेखयन्ति जिनशासनपुस्तकानि
व्याख्यानयन्ति च पठन्ति च पाठयन्ति ।
शृण्वन्ति रक्षणविधौ च समाद्रियन्ते
ते मर्त्य-देव-शिव-शर्म नरा लभन्ते ॥ २ ॥–वसन्त०

न ते नरा दुर्गतिमाप्नुवन्ति, न मूकतां नैव जडस्वभावम् ।
नैवान्धतां बुद्धिविहीनतां च, ये लेखयन्त्यागमपुस्तकानि ॥ ३ ॥–उप०

बाल-स्त्री-मन्द-मूर्खाणां, नृणां चारित्रकाङ्क्षिणाम् ।
अनुग्रहार्थं तत्त्वज्ञैः, सिद्धान्तः प्राकृतः कृतः ॥ ४ ॥"–अनु०

इति । तेन कृतज्ञानभक्तिः सन्मानितसाधुसङ्घः श्रावकव्रतानि प्रपाल्य सम्यगतिचारान् सम्भाल्य मृत्वा 'अच्युते' देवोऽजनि 'महाविदेहे' प्रासन्नभवो मोक्षं गमिष्यतीति ज्ञानोपरि कथानकम् । इति त्रिंशत्तमवृत्तार्थः ॥ ३० ॥

* * * *

सूत्रम्—

दानं दया दमन-दर्शन-देवसेवा
दोषापहार इति षट् प्रवरा दकाराः ।
तैः सेवितैर्दुरितराक्षस आत्तलोको
ग्रस्तस्त्वमीभिरयमेव परं दुरात्मा ॥ ३१ ॥

व्याख्या—दानमिति । इह लोके हे प्रभो ! षट् दकाराः प्रवरा वर्तन्ते । ते के तानाह—दानं दया दमनं–पञ्चेन्द्रियविषयवर्जनं दर्शनं–सम्यक्त्वं देवसेवा–जिनपूजा । दमनादिपदानां 'द्वन्द्वः' । दोषापहारः–कुलिङ्गिसंसर्गादि दोषत्यजनं इति । तुः अवधारणे । सेवितैः तैः अमीभिः

प्रवरै॰ पद्‌मिर्दकारै॰ परं–केवलं अयमेव दुरितराक्षसो ग्रस्तः–भक्षितः । कथंभूतो दुरितराक्षसः ? आच॰–गृहीतो भक्षितो लोको येन स इति । पुनः कथ० ? दुरात्मा–दुष्टात्मा । अत्र दृष्टान्त दाने श्रीऋषभजिनजीवधनसार्थवाहवत् । यत॰ ( पद्मानन्दमहाकाव्ये )—

"घनस नम्यैः सुरभिस्वभावै॰, श्रीखण्डखण्डमृगेन्दुगौरै॰ ।
पतद्‌ग्रह॰ स्त्यानघृतैरशोभि–ब्रह्माण्डभाण्डं नु भृत यशोभिः ॥ १ ॥"–पप०

सवैया तेईसा २४—

सो घन सारथवाह घनो जगि साधुकौं आपने थान बुलाये
थीनेसे घृतके पो(थाँ)ट अबोटसे मोटेसे पात भरे विहराए ।
मानसैं दानसैं निर्मल भावसैं निर्मल सुंदर सम्यक्त्व पाये
दान बडो भावप्रभ कहै जगि दान तिर्थंकरगोत बंधाए ॥ १ ॥

इति । दयायां हरियलमात्स्यिकादिवत् इति । दमने

"आँपि म मीचसी मिंच मन नयण निहाली जोइ
अप्पो अप्पा पींचीइ तो अवर न दूजो कोई ॥ १ ॥"

वेश्यया दत्तचिरर्थुकः (?) कुटिलकटिल॰ प्रतिबोधित इति । दर्शने कृष्णादिवत् । तथाहि— 'द्वारवत्यां' संयमग्रहणाक्षमः कृष्णवासुदेवोऽस्ति । यः कश्चित् दीक्षां लाति तस्य दीक्षामहोत्सवं करोमीति नियमवान् कृष्ण॰ स्वपुत्रीं निजोत्सङ्गे संस्थाप्य पृच्छति–वत्से ! त्वं स्वामिनी दासी वा भविष्यसि ? सा वक्ति—स्वामिनीति । तदा नेमिजिनान्तिके महोत्सवेन स तस्या दीक्षां दाप यति । एवं क्रियमाणाय कृष्णाय ज्ञातवार्तयाऽन्यया पुत्र्या निवेदितं यदोऽहं दासी भविष्या मीति । तेन चिन्तितम्–अन्याः सर्वा एवं मा भूवन् । ततस्तेन वीरो नाम कैविन्दो

---

१ पात्रकाः । २ सुरभिः–सुगन्धा आमोदो येषां तैः । ३ श्रीखण्डं यत्र वतद्वे घृतो यत्र एवंविधो य इन्दुः–कर्पूरः तद्वद् गौरो–शुभ्रे । ४ नुः वितर्के ।

५ तात्पर्यम्—

स धनसार्थवाहो धन्यो जगति येन साधवः स्वस्थाने आमन्त्रिताः
स्त्यानघृतवरिधपिण्डताराङ्कितैः द्रवन्ति पात्राणि भृत्वा प्रतिलाभयामासे ।
मानेन दानेन निर्मलभावेन निर्मलं सुन्दरं सम्यक्त्वं प्राप्तम्
दानं महत् (इति) भावप्रभः कथयति (यतः) जनयति दानं तीर्थंकरगोत्रं बन्धयति ॥

६ तात्पर्यम्—

अक्षिणी मा निमीलय निमीलय मनः नयनाभ्यां निभालय ।
(यदि) आत्मा आत्मानं आकर्षयति तर्हि अपरोऽन्यो न कोऽपि ॥

७ हं निम्बतीति कुविन्दः–तन्तुवायः ।

भणितः। कुविन्देन निजसुकृतं कथितम्। कृष्णेन तत्सुकृतं सभायां प्रकटीकृतम्। तथाहि—

"[3]जेण रत्तफणो नागो, वसंतो वयरीवणे।
आहउ पुढविसत्थेण, वेमई नाम खत्तिओ ॥ १ ॥–अनु०
जेण घोसवती सेणा, वसंती कलसीपुरे।
निरुद्धा वामहत्थेण, वेमई नाम खत्तिओ ॥ २ ॥—,,
जेण चक्कुक्खया गंगा, वहंती कलुसोदगं।
धारिया वामपाएण, वेमई नाम खत्तिओ ॥ ३ ॥[4]—"

---

१ कथय त्वया किं सुकृतं कृतमिति।

२ एतद् ज्ञायते त्रिषष्टिशलाकापुरुषचरित्र(प० ८, स० १०)गतैर्निम्नलिखितपद्यैः—

वभाषे वीरकोऽप्येवं, वदरीस्थो मया पुरा।
कृकलासोऽश्मना हत्वा, पातितश्च मृतश्च स. ॥ २२२ ॥
रथाङ्गकृतरेखायां, मार्गे तोय वहन् मया।
धृत वामाङ्घ्रिणाऽऽक्रम्य, तच्च दूरमपासरत् ॥ २२३ ॥
वस्त्रपटघटस्यान्त, प्रविष्टा मक्षिका मया।
द्वारे वामकर दत्त्वा, रणन्त्यो विधृताश्चिरम् ॥ २२४ ॥

३ सन्तुल्यतां यदुक्त त्रिषष्टिशलाकापुरुषचरित्रे (प० ८, स० १०)—

"येन रक्तस्फटो नागो, निवसन् वदरीवने।
निजघ्ने भूमिशस्त्रेण, वेमतिः क्षत्रियो ह्ययम् ॥ २२७ ॥
चक्रोत्खाता येन गङ्गा, वहन्ती कलुषोदकम्।
धारिता वामपादेन, वेमति· क्षत्रियो ह्ययम् ॥ २२८ ॥
येन घोषवती सेना, वसन्ती कलसी(शी?)पुरे।
निरुद्धा वामहस्तेन, वेमतिः क्षत्रियो ह्ययम् ॥ २२९ ॥"

अनेन ज्ञायते पद्यत्रयस्य तात्पर्यम्। एतच्छाया तु यथा—

येन रक्तस्फटो नागो वसन् वदरीवने।
आहतो भूमिशस्त्रेण वेमतिर्नाम क्षत्रिय· ॥
येन घोषवती सेना वसन्ती कलशीपुरे।
निरुद्धा वामहस्तेन वेमतिर्नाम क्षत्रिय ॥
येन चक्रोत्खाता गङ्गा वहन्ती कलुषोदकम्।
धारिता वामपादेन वेमतिर्नाम क्षत्रिय ॥

४ इदं पद्यत्रितय वर्तते आवश्यकसूत्रस्य वन्दनाध्ययनस्य श्रीहरिभद्रसूरिकृतटीकायां (५१४तमे पत्राङ्के), परन्तु न तत्र केवल द्वितीयतृतीयपद्ययोर्विनिमय· पाठभेदाश्च। ते एवम्—'रत्तसिरो', 'पाडिओ', 'घोसवई', 'धारिया', 'कलुसोदयं', 'धारिया'।

एतच्छायाकारै. 'वे मईनाम'पदस्य 'वै मतिर्नाम (स उत्कृष्ट.)' 'चक्कुक्खया'पदस्य च 'चक्रोरक्षता' इति प्रतिसंस्कृतमसूचि।

इत्युदित्वा सा वीरेण सह परिणायिता । दिनान्तरे कृष्णेनोक्तम्—आज्ञाकारिणीं तां कुरु । तेन गृहं गत्वा प्रोक्ता सा–पर्जनीकं(?) कुरु । रुष्टा समेत्य कृष्णाय निवेदितम्–स्वामिनी कुरु । वीरादेशं लात्वा नेम्यन्तिके दीक्षापितेति । अन्यदाऽष्टादशसहस्रसाधूनां द्वादशावर्तवन्दनेन क्षायिकसम्यक्त्वं तीर्थङ्करनामगोत्रकर्म (च) बद्धं कृष्णेन क्षपितं नरकचतुष्ककर्मदलवितानम् । यतः—

"अनाद्यनन्तसंसार–कर्मघर्मश्रमापहम् ।
वन्दनं चन्दनमिव, श्रेयःसौरभसङ्कुलम् ॥ १ ॥–अनु०
ददद् हरिर्वन्दनकानि भक्त्या, मुनीश्वराणां चरणाम्बुजेषु ।
अवाप तीर्थङ्करगोत्रकर्म, श्वभ्रादिकष्टानि तनूचकार ॥ २ ॥–उप०
'तित्थयरत्तं संमत्त खाइयं सत्तमीय तइआए ।
एयं वदणएणं बद्धं च दसारसीहेण ॥ ३ ॥
वन्दनं द्रव्यभावसम्भव, माधवस्य विदधे फलत्रयम् ।
द्रव्यतः कृतमिदं तु केवल, वीरकस्य विपुलश्रमं फलम् ॥ ४ ॥–रथोद्धता
पापतापनिचयस्य चन्दनं, दीयतां मुनिजनस्य वन्दनम् ।
पूर्वसञ्चितकुकर्मखण्डनं, वीरशासनजनौघमण्डनम् ॥ ५ ॥–"
विनयोऽहङ्कृतित्यागो, जिनाज्ञा गुरुपूजनम् ।
श्रुतसाराधना मोक्षः, षड् गुणा गुरुवन्दने ॥ ६ ॥–अनु०
नीचैर्गोत्रमविनयो–ऽमानः शासनहीलनम् ।
अबोधिर्भववृद्धिश्च, षड् दोषा गुर्ववन्दने ॥ ७ ॥–अनु०

एकादशस्तीर्थङ्करो भावीति इत्यादि । इति एकत्रिंशत्तमश्चार्थः ॥ ३१ ॥

* * * *

सप्तम्—

सैनेय-साधु-वरसक्थक-सार्वसत्थ
सैद्धान्तिका इति सुपञ्चसकारवर्गः ।
येनाहृतो भवकुपीटनिधौ निरस्तं
तेनैव तस्य जिन ! दुस्तरवारि कृत्स्नम् ॥ ३२ ॥

व्याख्या—सैनेयेति । हे जिन ! येन प्राणिना इति–एष सुपञ्चसकारवर्गः आहृतः–अङ्गीकृतः, सेवित इत्यर्थः । सु–शोभमानः पञ्चानां सकाराणां वर्गो इति तानाह—'सैनेयः' सेनाया अपत्यं

१ छाया—
तीर्थङ्करत्वं सम्यक्त्वं क्षायिकं सप्तम्याः तृतीयायाम् ।
एतत् वन्दनकेन बद्धं च दशार्हसिंहेन ॥

सैनेयः–सम्भवो जिनः, साधुः–सत्पुरुषः संवेगपक्षी "साधौ सभ्यार्यसज्जनाः" इति हैमः (का० ३, श्लो० ४३), वरसङ्घः–शुभचतुर्विधसङ्घः सर्वेभ्यो हितः सार्वो–जिनः तस्य सद्म–चैत्यं, सैद्धान्तिकाः–गीतार्था इति। तेन–सुपञ्चमकारवर्गेणैव तस्य प्राणिनो भवकूपीटनिधौ–भवजलधौ कृत्यं–कार्यं निरस्तं–त्यक्तम्। कथंभूते भवकूपीटनिधौ? दुस्तरवारि। वार्शब्दोऽत्र रेफान्तः। दुस्तराणि वारि यस्मिन् स इति। कूपीटं–जलम्।

"जले दिव्यमिरा सेव्यं, कूपीटं घृतमङ्कुरः।
विषं पिप्पलपाताल–मलिनानि च कम्बलम्॥"–अनु०

इत्यादि हैमशेषकोशे (का० ४, श्लो० ९) अर्थात् जैनशासनभक्तिकारकः। कीदृशः?—

"पावयणी धम्मकही वाई निमित्तिओ तवस्सी उ।
विज्जा सिद्धो य कई अट्ठेव पभावगा भणिआ॥ १॥"[1]

[2]पालित्तो [4]वृद्धवादी कविकुलतिलकः [5]सिद्धसेनो दिवाकृद्
विद्यासिद्धस्तथार्यः [6]खपटगुरु[7]रुमास्वातिस[8]न्मल्लवादी।
सूरिः [9]श्रीहरिभद्रः स्वपरसमयविद् [10]बप्पभट्ट(ट्टिः) प्रसिद्धः
[11]सिद्धर्षि[12]र्देवसूरिः [13]कुमरनृपनतो हेमसूरिस्तु जीयात्॥ १॥"–स्रग्धरा

इति जैनधर्मप्रभावकाः। अत्र जैनधर्मोपरि कथा—'काञ्चनपुरे' नगरे कुरुचन्द्रो राजा मिथ्यात्वी। रोहको मन्त्री जैनः भूपं प्राह–राजन्! धर्मं परीक्ष्य गृह्यते, नान्यथा—

"यथा चतुर्भिः कनकं परीक्ष्यते, निघर्षण-च्छेदन-ताप-ताडनैः।
तथा चतुर्भिः पुरुषः परीक्ष्यते, श्रुतेन शीलेन कुलेन कर्मणा॥–वंशस्थविलम्
गतानुगतिको लोको, न लोकः पारमार्थिकः।
वालुकालिङ्गमात्रेण, गतं मे ताम्रभाजनम्॥"–अनु०

---

१ छाया—

प्रावचनी धर्मकथी वादी निमित्तक. तपस्वी च।
विद्या सिद्धश्च कवि अष्टैव प्रभावका भणिता.॥

२ वर्तमानश्रुतार्थपारगामी १, नन्दीषेणवद् धर्मकथाकथक २, मल्लवादिवद् राजद्वारे जयकमलाभाग् ३, भद्रबाहुवत् निमित्तकथक· ४, महातपोगुणधारक ५, वज्रस्वामिवत् ६, कालिकाचार्यवत् सिद्धाञ्जनधारक. ७, सिद्धसेनवत् सरसमधुसुधारसभरकाव्यकृत् धर्मार्थं एतेऽष्टौ जिनधर्मप्रभावका इति 'पावयणी'गाथार्थ·।

३ पादलिप्तः सिद्धौषधभृत्। ४ मुशलफुल्लकारको वृद्धवादी चतुरशीतिहुंवडाकथक। ५ सिद्धसेन कल्याणमन्दिरादिकृत्। ६ खपुटाचार्यो बौद्धप्रतिबिम्बचालक। ७ प्रशमरतिप्रमुखपञ्चशतप्रकरणप्रणेता उमास्वातिवाचक। ८ मल्लवादी नयचक्रवालकारक। ९ चतुश्चत्वारिंशदधिकचतुर्दशशतग्रन्थकर्ता हरिभद्रसूरि। १० आमराजादिप्रतिबोधको बप्पभट्टिसूरि। ११ एकविंशतिं वारान् यो बौद्धसमीपे गतो यद्बोधनिमित्तं श्रीहरिभद्रसूरिणा ललितविस्तरानामग्रन्थो ग्रथित स उपमितिभवप्रपञ्चाकथाकार सिद्धर्षि.। १२ कुमुदचन्द्रदिक्पटजित् देवसूरिः। १३ हेमसूरि. कुमारपालभूपालप्रतिबोधकः।

जैनानां नीरागत्वं ज्ञात्वा हृष्टः। मुनिभिर्नवतत्त्वादिविचारः कथितः । राजा जैनधर्मं प्रपद्य सिद्धः। इति कथानकम्। इति द्वात्रिंशत्तमवृत्तार्थः॥ ३२॥

* * * *

सूत्रम्—

अर्हन्त अर्च्य अशरीर अहिंसकश्च
अर्चा अकारनिकरोऽकृतसन्धिकर्मा।
मर्त्योऽश्रयद् यमनिशं परवत् किमेष
सोऽस्याभवत् प्रतिभवं भवदुःखहेतुः?॥ ३३॥

व्याख्या—(अर्हन्त इति) अयं अर्च्यः—पूजनीयः। अकारनिकरः अकृतसन्धिकर्मा वर्तते। अकृतः सन्धिः सन्धानं—मेलनं येन तत् अकृतसन्धि, एवंविधं कर्म पापरूपं यस्य यस्माद् वा सः कर्मणा सह अकृतसन्धिः, कर्मविनाशकत्वादित्यर्थः। पुनः शब्दशास्त्रविचारणायामपि न कृतसन्धिकर्म यस्य सः अकृतसन्धिकर्मा । क एष अकारनिकरः तमाह—अर्हन्तः—जिनः, अकारान्तोऽयं शब्दः, 'अर्हन् अर्हन्तः' इति शब्दप्रभेदात् अर्च्यः—पूज्यः, अशरीरः—सिद्धः अर्च्यः, अहिंसकः—साधुः अर्च्यः, सर्वसावद्यविरतित्वात्।

जले जीवाः स्थले जीवा, आकाशे जीवमालिनि।
सर्वजीवमयं स्थानं, कथं भिक्षुरहिंसकः?॥ १॥

अप्रमत्तः सदोपयोगित्वादहिंसक इत्यागमः । अर्चा—जिनप्रतिमा अर्च्या—पूज्या । अर्थवशाद् विभक्तिपरिणामः। चः समुच्चायार्थः । मर्त्यो—मनुष्यः अनिशं—निरन्तरं यं अकारनिकारं अश्रयत्—असेवयत् स एषः अकारनिकरः अस्य—मर्त्यस्य प्रतिभवं—भवे भवे किं भवदुःखहेतुः अभवत्? । क इव? परवत्—शत्रुरिव। अपि तु सुखदायी एव अभवत् । अथात्र यदा सन्धिः क्रियते तदा अर्हन्तोऽर्च्योऽशरीरोऽहिंसक इति भवति। 'अतोऽत्युः' (सारस्वते सू० १०९), 'उ ओ' (सा० सू० ४५), 'एदोतोऽतः' (सा० सू० ५१) इत्यादि सूत्रत्रयं लगति। अर्चा अकार इत्यत्र 'सवर्णे दीर्घः सह' (सा० सू० ५२) इति ज्ञेयम्। मूढानामश्लिष्टोच्चारणे झटिति श्रद्धा प्रकटीभवेदिति हेतोः।

अथात्र दृष्टान्तः—कस्मिंश्चिन्नगरे द्वौ वणिजौ जन्मतः परस्परं पांसुक्रीडां कुर्वन्तौ वृद्धिं गतौ यौवनं प्राप्तौ सम्मिलितावेव तिष्ठतः। द्वयोर्मध्ये एकतरो यत् किञ्चित् कार्यं करोति तत् कार्यमन्यतरोऽपि करोति। तदा लोकैः 'एकमनीया' इति तयोर्नाम दत्तम्। एकदा सर्वज्ञो गुरुर्मि-

अथ गड्डरिकाप्रवाहं त्यक्त्वा धर्मः क्रियते । तद्वाक्यं श्रुत्वा धर्मार्थिना नृपेण धर्मपरीक्षार्थं सर्वान् पापण्डिन आकार्य समस्याऽर्पिता—"सकज्जलं वा नयणं न व त्ति" । प्रथमं बौद्धैरपूरि—

"[1]उपासिया कंचणमंडियंगी, मालाविहारे मइ अज्ज दिट्ठा ।
वक्खित्तचित्तेण न सुट्ठु णायं, सकज्जलं वा नयणं न व त्ति ॥ १ ॥"[2]

इति सर्वैः शृङ्गाररसैः पूरिता ।

"[3]पिच्छं चउद्दं गणमण्डलम्मि, पुरोम(मं)तीअ ति (पि) अंगणाए ।
वक्खित्तचित्तेण न सुट्ठु णायं, सकज्जलं वा नयणं न व त्ति ॥ २ ॥"[4]

इत्यादि ॥ अथ जैनैः—

"[5]खंतस्स दंतस्स जिइंदियस्स, अज्झप्पजोगे गयमाणसस्स ।
किं मज्झ एएण विचिंतिएण, सकज्जलं वा नयणं न व त्ति ॥३॥"[6] —उपजातिः

---

१ छाया—
उपासिका काञ्चनमण्डिताङ्गी मालाविहारे मया अद्य दृष्टा ।
विक्षिप्तचित्तेन न सुष्ठु ज्ञातं सकज्जलं वा नयनं न वा इति ॥

२ उपदेशरत्नाकरे ३ तमे पृष्ठे त्वेवम्—
मालाविहारम्मि मएज्ज दिट्ठा उवासिआ कंचणभूसिअंगी ।
वक्खित्तचित्तेण मए न नायं सकुंडलं वा वयणं न व त्ति ॥
[ मालाविहारे मयाऽद्य दृष्टा उपासिका काञ्चनभूषिताङ्गी ।
व्याक्षिप्तचित्तेन मया न ज्ञातं सकुण्डलं वा वदनं न वा इति ॥]

३ छाया—
पिच निमग्नं गगनमण्डले पुरोऽममन्त्र्या अपि अङ्गनायाः ।
विक्षिप्तचित्तेन न सुष्ठु ज्ञातं सकज्जलं वा नयनं न वा इति ॥

४ कुमारपालप्रतिबोधे १०७तमे पृष्ठे अमरसिंहकथायां यथा—
चक्खुं चउद्दं गयणमण्डलम्मि अणुरत्तचित्तेण मए न नायं ।
पुरोऽममंतीइ वि अंगणाए, सकज्जलं दिट्ठिजुयं न व त्ति ॥
[ चक्षुर्दत्तं गगनमण्डले अनुरागेण तेन मया न ज्ञातम् ।
पुरोऽममन्त्र्या अपि अङ्गनायाः सकज्जलं दृष्टियुगं न वा इति ॥]

५ छाया—
क्षान्तस्य दान्तस्य जितेन्द्रियस्य अध्यात्मयोगे गतमानसस्य ।
किं मम एतेन विचिन्तितेन सकज्जलं वा नयनं न वा इति ॥

६ उपदेश० ३ तमे पृष्ठे वर्तमाने इत्यादीनि त्रीणि चरणानि तुर्यं तु यथा—' सकुंडलं वा वयणं न व त्ति ।
कुमार० तु इत्थम्—
'मण्णे तसा(?)वावरअणुरत्तवक्खित्तचित्तेण मए न नायं ।
पुरोममंतीइ वि अंगणाए सकज्जलं दिट्ठिजुयं न व त्ति ॥
[ मन्ये त्रसस्थावरअनुरक्तव्याक्षिप्तचित्तेन मया न ज्ञातम् ।
पुरोऽममन्त्र्या अपि अङ्गनायाः सकज्जलं दृष्टियुगं न वा इति ॥]

तैरात्मा सुपवित्रितो निजकुलं तैर्निर्मलं निर्मितं
तैः संसारमहान्धकूपपततां हस्तावलम्बो ददे ।
लब्धं जन्मफलं कृतं च कुगतेर्द्वारैकसंरोधनं
ये 'शत्रुञ्जय'मुख्यतीर्थनिवहे यात्रासु कृतोद्यमाः ॥ ३ ॥–शार्दूल०
तैश्चन्द्रे लिखितं स्वनाम विशदं धात्री पवित्रीकृता
ते वन्द्याः कृतिनः सतां सुकृतिनो वंशस्य ते भूषणम् ।
ते जीवन्ति जयन्ति भूरिविभवास्ते श्रेयसां मन्दिरं
सर्वाङ्गैरपि कुर्वते विधिपरा ये तीर्थयात्रामिमाम् ॥ ४ ॥–शार्दूल०
कल्पद्रुमस्तस्य गृहेऽवतीर्ण–श्चिन्तामणिस्तस्य करे लुलोठ ।
त्रैलोक्यलक्ष्मीरपि तं वृणीते, गेहाङ्गणं यस्य पुनाति सङ्घः ॥ ५ ॥"–इन्द्र०

अत्र प्रथमं भरतस्यैव कथानकम् । यतः—

पूर्वं वृषभजिनमुखात् सकलधर्मकार्यं श्रुत्वा पुनः निजनिश्चयार्थं स्वमुखेन भरतः प्रभोरग्रे कथयामास इति सर्वत्र ज्ञेयम् । एकदा भरतचक्री 'अष्टापदे' श्रीऋषभं प्रणम्याग्रे स्थितवान् । देशनाऽन्तेऽष्टानवतिभ्रातॄन् निभाल्य चिन्तितम्–अहो ! महाव्रतधरा एते । मया दुष्टं कृतम्, यत एते भोगात् त्याजिताः । ततो भरतो भोगाय न्यमन्त्रयत भक्तिवशतः, तदा भगवान् ब्रूते स तम्–भो भरत ! तव भ्रातरस्त्यक्तान् भोगान् पुनर्मुखश्लेष्मवत् न गृह्णन्ति, तदा भरत आहारार्थं तान् निमन्त्रयामास । तदापि प्रभुणा निषिद्धः—राजपिण्डादिर्मुनीनां न कल्पते तदा स विषादवान् । तत इन्द्रपृच्छापूर्वकं पञ्चप्रकारावग्रहकथने स्वस्थीभूतो भरतो भगवन्तं बभाषे–आनीतेन भक्तपानेन मयाऽधुना किं क्रियते ? भगवता (शक्रेण ?) अभाणि–श्राद्धेभ्यो देयं तत् । गृहमागत्य तथैव चक्री कृतवान् । श्राद्धेभ्य उक्तम्–भवन्तो भोजनं कृत्वा मम गृहाग्रे स्थिताः "जितो भवान् भयं भूरि, ततो मा हन मा हन" (पद्मा० स० १८, श्लो० ११०) इति पदद्वयं वारंवारं पठनीयमिति । तन्निशम्य चक्री रहःस्थितश्चिन्तयति स—

"जितः कैरहमा ज्ञातं, कषायैर्मे कुतो भयम् ? ।
एतेभ्य एव तदहं, मा हन्यां देहधारिणः ॥ १ ॥–अनु०
धिग् धिङ् मे धर्मवैमुख्यं, हा हा संसारसक्तता ।
ही ही प्रमादमित्रत्वं, ह ह हा विषयाग्रहः ॥ २ ॥" अनु०

—(पद्मा० स० १८, श्लो० ११२, ११४)

तदा श्राद्धानां पठनार्थं भरतेन जिनस्तुतियतिश्राद्धधर्मकर्माधिकारमया आर्या वेदाः कृताः । एकदा प्रभुः 'शत्रुञ्जय'गिरिमाययौ । पुण्डरीकाय प्रोक्तम्–त्वं यतिकोटीयुतोऽत्रैव तिष्ठ, 'सिद्धक्षेत्र'प्रभावात् तव केवलज्ञानं भविष्यति । तेन तथैव कृतम् । सिद्धः पुण्डरीको यतिकोटीभिः सह । श्लोकः—

---

१ आ इति स्मरणे ।
जैन० स्तो० १४

लिता:, तस्य देशनां निशम्य प्रतिबुद्धः एको दीक्षां गृहीतवान्, इतरो न । तदा लोकैः प्रोक्त म्-कथ भगवन्! एकमनस्कौ इमौ धर्मकार्येऽधुना भिन्नमनसौ जातौ? । सर्वज्ञ' प्राह-अनयोः मेतयोः पूर्वभवम्-कस्माञ्चिदटव्यां द्वौ किरातौ वसत' स्म । कदाचित् कुतश्चित् गोधनमपहृत्य पृष्ठलमामाहरकभयाभ्रष्टौ द्वौ प्रौढगिरिशिखरं गतौ । तत्रैको मुनिर्नासाग्रमागन्यस्तनेत्रयुग्मो ध्यानमग्नो योगमुद्रालग्नो दृष्टस्ताभ्याम् । तं दृष्ट्वा एकेन संस्तुतः-अहो! अयं निर्भयो मुनि' सुखासीनो वर्तते । तदा स एको दर्शनरुचिर्जातः । अन्यस्तु कायुवत् साधुं समीक्ष्य न भद्रा जाता । कालान्तरे तौ मृत्वा निगमाविमौ जातौ स्तः । तेन दर्शनरुचिर्निस्तीर्णः, इतरस्तु नेति कथानकम् । इति प्रयस्त्रिंशत्पद्यार्थः ॥ ३३ ॥



अथ सङ्घमाभिख्याह—

[1] वसन्त—

सङ्घाधिपत्यतिलक ननु ये वहन्त
साधर्मिके सततदत्तवराशना ये ।
मुक्तिं भजन्ति लघु ते नितरां भजन्त'
पादद्वय तव विभो! भुवि जन्मभाज ॥ ३४ ॥

व्याख्या—(सङ्घेति) । हे विभो! ननु-निश्चितं ये जन्मभाजो धनाढ्याः सङ्घाधिपत्यतिलकं वहन्तो-दधतो भवन्ति । ये पुनः साधर्मिके सततदत्तवराशना-सदा दत्तभोजनवात्सल्या भवन्ति भुवि-भूमौ ते जन्मभाज'-भव्या लघु-शीघ्रं मुक्तिं व्रजन्ति । कथंभूताः ते? किं कुर्वन्तः सन्तः? हे विभो! तव पादद्वयं नितरां-भृशं भजन्त' । यतः—

"अद्य मे फलवती पितुराशा, मातुराशिषि शिखाङ्कुरिता मद् ।
यद् युगादिजिनयात्रिकलोक, प्रीणयाम्यहमशेषमखिन्न' ॥ १ ॥-स्वागता
संसारेऽसुमतां नरामरभवा' प्राप्ताः श्रियोऽनेकश'
कीर्तिः स्फूर्तिमदर्जितं च शतश' साम्राज्यमप्यूर्जितम् ।
स्वाराज्यं बहुधा सुधाशनचयाराध्यं समासादितं
लेभे पुण्यमयं कदाचिदपि न' सङ्घाधिपत्यं पुन' ॥ २ ॥-शार्दूल०

---

१ भिल्ला' इति क-पाठः ।
२ स्वागता-लक्षणम्—
'स्वागता रनभगैर्गुरुणा च"
३ स्वर्गराज्यम् । ४ 'कदापि न पुनः' इति ग-पाठः ।

अत्र दृष्टान्तः—

स्त्रिया कृतोपसर्गरणझणत्प्रविष्टनूपुरपादोपलसितसाधुवत् पालनीयमिति । तथा चतसृभिः स्त्रीभिर्यामिनीयामचतुष्कमुपसर्गितोऽपि मुनिर्न चलितः । ततस्ताः स्त्रियोऽपि प्रभाते गृहीतशीला अभवन् इति । तथा एकदा सभास्थितेन श्रीसिद्धराजजयसिंहदेवेन वन्दितो हेमाचार्यो धर्मलाभं प्रोक्तवान् । तथा भूपेन धर्मलाभस्यार्थः पृष्टः सूरिराह—

"दीर्घायुर्भव धार्मिको भव भव प्रौढप्रतापोद्धतो
विद्या-विक्रम-वृत्त-वित्त-विनयालङ्कारयुक्तो भव ।
इत्याद्याः स्फुरदाशिषः श्रुतिसुखाः सत्या भवन्ति ध्रुवं
यस्माद् विस्मयकारणं स भवतु श्रीधर्मलाभः श्रिये ॥ १ ॥—शार्दूल०

दुर्वारा वारणेन्द्रा जितपवनजवा वाजिनः स्यन्दनौघा
लीलावत्यो युवत्यः प्रकटितचमरैर्भूपिता राज्यलक्ष्मीः ।
तुङ्गं श्वेतातपत्रं चतुरुदधितटीसङ्कटा मेदिनी च
प्राप्यन्ते यत्प्रभावात् त्रिभुवनविजयी सोऽस्तु वो धर्मलाभः ॥ २ ॥—स्रग्०

सकलकुशलवल्लीपुष्करावर्तमेघो
दुरिततिमिरभानुः कल्पवृक्षोपमानः ।
भवजलनिधिपोतः सर्वसम्पत्तिहेतुः
स भवतु सततं वः श्रेयसे धर्मलाभः ॥ ३ ॥—मालिनी

कल्पद्रुचिन्तामणिकामधेनु–सुस्वामिमुख्याः सुखहेतवोऽमी ।
श्रयन्ति यस्य प्रतिहस्तकत्वं, धर्मः स वो यच्छतु वाञ्छितानि ॥ ४ ॥—उप०

लक्ष्मीर्वेश्मनि भारती च वदने शौर्यं च दोष्णोर्युगे
त्यागं पाणितले सुधीश्च हृदये सौभाग्यशोभा तनौ ।
कीर्तिर्दिक्षु सपक्षता गुरुजने यस्माद् भवेदङ्गिनां
सोऽयं सिद्धिफलप्रदाननिपुणः श्रीधर्मलाभोऽस्तु वः ॥ ५ ॥—शार्दूल०

पुण्डरीको ददौ पूर्वं, चक्रिणे भरतादये(य यम् ?) ।
गौतमः श्रेणिकस्यापि, धर्मलाभः स वः श्रिये ॥ ६ ॥—अनु०

धर्मकल्पद्रुमः श्रीमान्, स वो यच्छतु वाञ्छितम् ।
जागर्ति यस्य सेकाय, सत्कर्मश्रेणिसारणिः ॥ ७ ॥"—अनु०

ततः पुनर्भूपेन श्रीहेमाचार्यः प्रोक्तः—भवद्भिर्व्यवहारिसभायां साम्प्रतं कस्य व्याख्यानं क्रियते ? । सूरिणोक्तम्—सरसनवरसचित्रं श्रीस्थूलभद्रयतीन्द्रचरित्रं कर्मलवित्रं पवित्रं व्याख्यायते येन पूर्वं द्वादश वर्षाणि कोशा वेश्या विलसिता । पश्चाद् व्रतमादाय गुर्वाज्ञया तस्या एव

१ 'सभ्या' इति ख–पाठः ।

"'चैत्रमास्यां पूर्णमास्यां, मासान्ते केवलं तत' ।
प्रथमं पुण्डरीकस्य, श्रमणानां ततोऽभवत् ॥ १ ॥"—अनु०
शुक्लध्यानाधिरोहेण, क्षीणेष्वखिलकर्मसु ।
प्रापत् तपस्विकोटीभि', पुण्डरीक' परं पदम् ॥ २ ॥—अनु०
स्वर्गादागत्य गीर्वाणा, निर्वाणाप्तिमहोत्सवम् ।
व्यधात् तेषां महर्षीणां, मरुदेव्या इव प्रभु' ॥ ३ ॥—अनु०
तीर्थकृत् प्रथमः स्वामी, यथा श्रीऋषभस्तथा ।
तदानीं प्रथमं तीर्थं, ख्यातो 'शत्रुञ्जयो' गिरिः ॥ ४ ॥—अनु०
सिद्धो महर्षिरेकोऽपि, तीर्थतां स्थानमानयेत् ।
महर्षिकोटयो यत्र, किं पुन' सिद्धिमव्रजन् ? ॥ ५ ॥—अनु०
'शत्रुञ्जयो'ऽद्रिषु सिद्धि—क्षेत्रत्वान्मुकुटं स्फुटम् ।
नैमारूपमयं चक्र—वर्ती चैत्यमकारयत् ॥ ६ ॥—अनु०
प्रभुबिम्बं पुण्डरीक—युक्तं कृत तदन्तरा ।
आत्मानमिव विश्रान्त—रात्मानं स्वं चि(स्थि)रं न्यधात् ॥ ७ ॥"—अनु०

इति पद्मानन्दमहाकाव्ये (स० १८, श्लो०१७१–१७९) श्रेणिकृपाणनामाऽमरचन्द्रः । इति भरतचक्री सङ्घपतितिलकधारकः चैत्यकारकः सङ्घवात्सल्यनिर्मापकः पुण्यवान् कथितः । इत्येवंविधोऽपि यो भवति स मुक्तिगामी भवतीति स्थितम् । इति चतुस्त्रिंशत्तमवृत्तार्थः ॥ ३४ ॥

* * * *

अथ शीलमभिस्याह—

वृत्तम्—

शीलं कलङ्कतिमिरावलिहेलिकेलि
विस्तीर्णविश्ववलये कृतकीर्तिखेलम् ।
मर्त्यो दधाति हृदि य प्रवरस्य तस्य
किं वा विपद्विषधरी सविधं समेति ? ॥ ३५ ॥

व्याख्या—(शीलमिति) । यो मर्त्यो—मनुष्यः हृदि—हृदये शीलं—मैथुनपरिहाररूपं सदुत्तमचर्यं दधाति—धरति । किंविशिष्टं शीलम् ? 'कलङ्कतिमिरावलिहेलिकेलि' कलङ्का एव तिमिराणि—अन्धकाराणि तेषां आवलिः—श्रेणिः तस्यां हेले'—सूर्यस्य केलिरिव केलिर्यस्य तत्, तद्विनाशकत्वात् । पुनः किंविशिष्टम् ? विस्तीर्णे—विपुले विश्ववलये—भुवनमण्डले 'कृतकीर्तिखेलं' कृता कीर्त्याः खेला—क्रीडा येन तत् । वा पक्षान्तरे । विपद् एव विषधरी—सर्पिणी तस्य प्रवरस्य पुरुषस्य सविधं—समीपं किं समेति—आगच्छति ? । अपि तु न आगच्छति ।

---

१ चैत्रे मासि पूर्णे २ 'आत्मारामपदम्' ३ 'न स्थिरं' इति पाठान्तराणि प्रथा० ।

अत्र दृष्टान्तः—

स्त्रिया कृतोपसर्गरणझणत्प्रविष्टनूपुरपादोपलसितसाधुवत् पालनीयमिति । तथा चतसृभिः स्त्रीभिर्यामिनीयामचतुष्कमुपसर्गितोऽपि मुनिर्न चलितः । ततस्ताः स्त्रियोऽपि प्रभाते गृहीतशीला अभवन् इति । तथा एकदा सभास्थितेन श्रीसिद्धराजजयसिंहदेवेन वन्दितो हेमाचार्यो धर्मलाभं प्रोक्तवान् । तथा भूपेन धर्मलाभस्यार्थः पृष्टः सूरिराह—

"दीर्घायुर्भव धार्मिको भव भव प्रौढप्रतापोद्धतो
विद्या-विक्रम-वृत्त-वित्त-विनयालङ्कारयुक्तो भव ।
इत्याद्याः स्फुरदाशिषः श्रुतिसुखाः सत्या भवन्ति ध्रुवं
यस्माद् विस्मयकारणं स भवतु श्रीधर्मलाभः श्रिये ॥ १ ॥—शार्दूल०
दुर्वारा वारणेन्द्रा जितपवनजवा वाजिनः स्यन्दनौघा
लीलावत्यो युवत्यः प्रकटितचमरैर्भूपिता राज्यलक्ष्मीः ।
तुङ्गं श्वेतातपत्रं चतुरुदधितटीसङ्कटा मेदिनी च
प्राप्यन्ते यत्प्रभावात् त्रिभुवनविजयी सोऽस्तु वो धर्मलाभः ॥ २ ॥—स्रग्०
सकलकुशलवल्लीपुष्करावर्तमेघो
दुरिततिमिरभानुः कल्पवृक्षोपमानः ।
भवजलनिधिपोतः सर्वसम्पत्तिहेतुः
स भवतु सततं वः श्रेयसे धर्मलाभः ॥ ३ ॥—मालिनी
कल्पद्रुचिन्तामणिकामधेनु—सुस्वामिमुख्याः सुखहेतवोऽमी ।
श्रयन्ति यस्य प्रतिहस्तकत्वं, धर्मः स वो यच्छतु वाञ्छितानि ॥ ४ ॥—उप०
लक्ष्मीर्वेश्मनि भारती च वदने शौर्यं च दोष्णोर्युगे
त्यागं पाणितले सुधीश्च हृदये सौभाग्यशोभा तनौ ।
कीर्तिर्दिक्षु सपक्षता गुरुजने यस्माद् भवेदङ्गिनां
सोऽयं सिद्धिफलप्रदाननिपुणः श्रीधर्मलाभोऽस्तु वः ॥ ५ ॥—शार्दूल०
पुण्डरीको ददौ पूर्वं, चक्रिणे भरतादये(य यम् ?) ।
गौतमः श्रेणिकस्यापि, धर्मलाभः स वः श्रिये ॥ ६ ॥—अनु०
धर्मकल्पद्रुमः श्रीमान्, स वो यच्छतु वाञ्छितम् ।
जागर्ति यस्य सेकाय, सत्कर्मश्रेणिसारणिः ॥ ७ ॥"—अनु०

ततः पुनर्भूपेन श्रीहेमाचार्यः प्रोक्तः—भवद्भिर्व्यवहारिसभायां साम्प्रतं कस्य व्याख्यानं क्रियते ? । सूरिणोक्तम्—सरसनवरसचित्रं श्रीस्थूलभद्रयतीन्द्रचरित्रं कर्मलवित्रं पवित्रं व्याख्यायते येन पूर्वं द्वादश वर्षाणि कोशा वेश्या विलसिता । पश्चाद् व्रतमादाय गुर्वाज्ञया तस्या एव

१ 'सम्या' इति ख-पाठः ।

गृहे चित्रशालायां षड्रससमभोजनकः सद्ब्रह्मचर्यधारकः कामविकारनिवारकः स्थितवान् मुनिः सः । एतन्निशम्य कश्चिद् विप्र आह—

"विश्वामित्र-पराशरप्रभृतयो [1]ये चाम्बुपत्राशना–
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
आहारं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवा
स्तेषामिन्द्रियनिग्रहः कथमहो दम्भः समालोक्यताम् ॥१॥"—शार्दूल०

सूरिराह—

"सिंहो बली द्विरदशूकरमांसभोजी
संवत्सरेण रतिमेति किलैकवारम् ।
पारावतः खरशिलाकणभोजनोऽपि
कामी भवत्यनुदिनं वद कोऽत्र हेतुः ? ॥ १ ॥"—वसन्त०

इति ।

स स्थूलभद्रोऽखण्डशीललीलः तां कोशां प्रबोध्य गुरुसमीपमागतः सन् गुरुभिर्दुष्करकारक इति सहसमक्षं प्रोचे । वृद्धवयसः पूर्वं समागताः सिंहगुहा विल-कूपकाष्ठस्थायिनो मुनयस्त्रयः । तेषु सिंहगुहावासी मुनिर्मत्सरेण गुरुणा निवार्यमाणोऽपि द्वितीयचतुर्मासीं कोशागृहे गतः । दृष्ट्वा च तां दिव्यरूपां चलचित्ततया 'नेपाल'देशनायितरत्नकम्बलं खाले क्षिप्त्वा प्रतिबोधितः सन् आगत उवाच—युक्तं दुष्करदुष्करकारक इति । गुरुभिरुक्तम्—

यतः—

"वर सिंहगुहागेहे, दृष्टिविषाहिभूः ।
चित्रशाला कूपपट्टः, कोशायामाश्रितो स्थितः ॥ १ ॥"—अनु०

"गिरौ गुहायां विजने वनान्तरे, वासं श्रयन्तो वशिनः सहस्रशः ।
हर्म्येऽतिरम्ये युवतीजनान्तिके, वशी स एकः शकटालनन्दनः ॥२॥"—इन्द्रवंशा

"योऽग्नौ प्रविष्टोऽपि हि नैव दग्धः-छिन्नो न खड्गाग्रग(कृ)तप्रचारः ।
कृष्णाहिरन्ध्रेऽप्युषितो न दष्टो, नाक्तोऽञ्जनागारनिवासतो यः ॥३॥"—इन्द्रवज्रा

वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनं
शुभ्रं धाम मनोहरं वपुरहो नव्यो वयःसङ्गमः ।

---

१ 'वाताम्बु ... २ 'शाकपर्णं च ... ३ 'ये भुञ्जते मानवाः'— ४ 'यदि शाली भवेत् विन्ध्यस्तरेत् सागरे' इति पाठभिन्नता सुभाषित० (पृ. २६७)। ५ 'वृद्धवयसः च पूर्वं' इति क-पाठः। ६–८ श्रीजयानन्दसूरिकृते स्थूलभद्रचरित्रे ... पद्यानि (दे. ला. जै.)।

कालोऽयं [1]जलदागमस्तदपि यः कामं जिगायादरात्
तं वन्दे युवतिप्रबोधकुशलं श्रीस्थूलभद्रं मुनिम् ॥ ४ ॥–शार्दूल०

[2]रे काम! वामनयना तव मुख्यमस्त्रं
वीरा वसन्त-पिक-पञ्चम-चन्द्रमुख्याः ।
त्वत्सेवका हरि-विरञ्चि-महेश्वराद्या
हा हा हताश! मुनिनाऽपि कथं हतस्त्वम्? ॥ ५ ॥–वसन्त०

[2]श्रीनन्दिषेण-रथनेमिमुनीश्वरा-ऽऽर्द्र-
बुद्ध्या त्वया मदन! रे मुनिरेष दृष्टः ।
ज्ञातं न नेमि-मुनिजम्बु-सुदर्शनानां
तुर्यो भविष्यति निहत्य रणाङ्गणे माम् ॥ ६ ॥–वसन्त०

इति लेशमात्रस्थूलभद्रकथानकम् ॥ तथा अभयाह्वया राज्या भोगार्थं याचितोऽचलित उपसर्गितो राज्ञा शूलिकायामारोपितो रत्नसिंहासनं जातं सुदर्शनश्रेष्ठिनः । इति पञ्चत्रिंशत्तमवृत्तार्थः ॥ ३५ ॥

* * * *

सूत्रम्—

ब्राह्म्यादिका विमलशीलविभूषणाढ्याः
सत्यो हि सन्ति बहवो भवितार एव ।
तासां तु नामजपनेन जिनेश! पूतो
जातो निकेतनमहं मथिताश! यानाम् ॥ ३६ ॥

व्याख्या–ब्राह्म्यादिका इत्यादि । हि–निश्चितं हे जिनेश! ब्राह्म्यादिकाः सत्यः बहवः सन्ति । पुनः सत्यः बहवो भवितारः–भविष्यन्त्येव । कथंभूताः सत्यः? विमलशीलमेव भूषणं तेन आढ्याः–संयुक्ताः । हे जिनेश! हे 'मथिताश!' मथिता–हता आशा–अभिलाषो येन, हे निरभिलाष! । तुः अवधारणे । अहं भरतः तासां सतीनां नामजपनेन पूतः–पवित्रो जातः । कथंभूतोऽहं? यानां–लक्ष्मीनां निकेतनं गृहम् । "लक्ष्मीः पद्मा रमा या सा" इत्यादि हैमः (का० २, श्लो० १४०) । यतः ( श्रीधर्मसूरिकृते मङ्गलस्तोत्रे श्लो० १३ )—

"ब्राह्मी चन्दनबालिका भगवती राजीमती द्रौपदी
कौशल्या सुमृगावती च सुलसा सीता सुभद्रा शिवा ।
कुन्ती शीलवती नलस्य दयिता चूला प्रभावत्यपि
पद्मावत्यपि सुन्दरी दिनमुखे कुर्वन्तु वो मङ्गलम् ॥ १ ॥

१ 'जलदाविलस्तदपि' इति पाठ श्रीहीरालाल हसराजेस्त्यमिर्मुद्रिते स्थूलभद्रचरित्रे । २–२ स्थूलभद्रचरित्रे ( दे. ला. पु. जै. ) ५५८–५५९ तमे पद्ये ।

गृहे चित्रशालायां षड्रससरसभोजनकः सदृब्रह्मचर्यधारकः कामविकारनिवारको स्थितवान् मुनिः सः । एतन्निशम्य कश्चिद् विप्रः प्राह—

"विश्वामित्र पराशरप्रभृतयो [1]ये चाम्बुपत्राशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
[2]आहारं सघृतं पयोदधियुतं [3]भुञ्जन्ति ये मानवा-
स्तेषामिन्द्रियनिग्रहः कथमहो दम्भः समालोक्यताम् ॥१॥"–शार्दूल०

सूरिराह—

"सिंहो बली द्विरदशूकरमांसभोजी
संवत्सरेण रतिमेति किलैकवारम् ।
पारावतः खरशिलाकणभोजनोऽपि
कामी भवत्यनुदिनं वद कोऽत्र हेतुः ? ॥ १ ॥–वसन्त०

इति ।

स स्थूलभद्रोऽखण्डशीललील[4] तां कोशां प्रबोध्य गुरुसमीपमागतः सन् गुरुभिर्दुष्करकारक इति सहस्रशः प्रोचे । तद्वचसः पूर्वं समागता[5] सिंहगुहा-बिल-कूपकाष्ठस्थायिनो मुनयस्त्रय[6] । तेषु सिंहगुहावासी मुनिर्मत्सरेण गुरुणा निवार्यमाणोऽपि द्वितीयचतुर्मास्यां कोशागृहे गतः । दृष्ट्वा च तां दिव्यरूपां चलचित्ततया 'नेपाल'देशानायितरत्नकम्बलं खाळे क्षिप्त्वा प्रतिबोधितः सन् आगत्य उवाच—युक्तं दुष्करदुष्करकारक इति । गुरुभिरुक्तम्—

यत—

"स्मर सिंहगुहागेहं, दृष्टिर्दृष्टिविषाहिभूः ।
चित्रशाला कूपपट्टः, कोशायामिष्यसौ स्थितः ॥ १ ॥–अनु०
[7]गिरौ गुहायां विजने वनान्तरे, वासं श्रयन्तो वशिनः सहस्रशः ।
हर्म्येऽतिरम्ये युवतीजनान्तिके, वशी स एकः शकटालनन्दनः ॥२॥–इन्द्रवज्रा
योऽग्नौ प्रविष्टोऽपि हि नैव दग्ध-श्छिन्नो न खड्गाग्रग(कृ?)तप्रचारः ।
कृष्णाहिरन्ध्रेऽप्युषितो न दष्टो, नाक्तोऽञ्जनागारनिवासतो य[8] ॥३॥–इन्द्रवज्रा

वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनं
शुभ्रं धाम मनोहरं वपुरहो नव्यो वयःसङ्गमः ।

---

1 'चाताम्बु 2 'आहारं स 3 'ये कुर्वते मानवा'– 4 'प्रहो यदि भवेद् बिन्ध्यस्तरेत् सागरे' इति पाठभिन्नता सुभाषित० (पृ ११४)। 5 'तद्वचसा च पूर्वं इति प्र–पाठ । 6–8 शीलोपदेशमालावृत्तिगते स्थूलभद्रचरित्रे ४५ तमादिषट्त्रिंशत्तमपर्यन्तानि पद्यानि (दे ला जै.)।

तज्जातं हि तथा स्त्रियाऽऽहुतनरे पृष्टेऽपहर्षे कथं
  त्रुट्यद्भाण्डविवेकतो धृतह्रिया शीलश्रिये तत् स्थितम् ॥ २ ॥–शार्दूल०

जन्तूनां विधिवशादन्यथाऽपि जायते । यतः—

"हत्वा नृपं पतिमवेक्ष्य भुजङ्गदष्टं
  देशान्तरे विधिवशाद् गणिका च जाता ।
पुत्रं पतिं समधिगम्य चितां प्रविष्टा
  शोचामि गोपगृहिणी कथमद्य तक्रम् ? ॥ १ ॥"–वसन्त०

इति ।

"कोकिलानां स्वरो रूपं, नारी रूपं पतिव्रतम् ।
विद्या रूपं कुरूपाणां, क्षमा रूपं तपस्विनाम् ॥ १ ॥"–अनु०

अतो महानिशीथे प्रोक्तम् । धन्यः पुण्यः स यः शीलं पालयति । इति षट्त्रिंशत्तमवृत्तार्थः ॥३६॥

* * * *

सूत्रम्—

सीताहृतिर्जलधिलङ्घनमाहवश्च
  रक्षोवधः प्रतिहृ(कृ ?)तिर्ज्वलनप्रवेशः ।
पुण्या यतो विमलशीलतया पदार्थाः
  प्रोद्यत्प्रबन्धगतयः कथमन्यथैते ? ॥ ३७ ॥

व्याख्या–सीतेति । हे प्रभो ! यतः कारणात् एते पदार्थाः विमलशीलतया–निर्मलशीलत्वेन करणेन पुण्याः–पवित्राः वर्तन्ते, श्रोतॄणामपि धर्मप्राप्तये भवन्तीत्यर्थः । अन्यथा शीलं विना एते पदार्थाः कथं पुण्याः ? यतो लौकिकरामायणादीनि शास्त्राणि शृण्वतामपि पापाय भवन्ति ।

---

तथा—

तव ह्रियाऽपह्रियो मम ह्रीरभूच्छशिग्रहेऽपि द्रुतं न धृता तत ।
  'बहलभ्रामरमेचकतामस मम प्रिये ! क समेष्यति तत् पुनः ?' ॥"

काव्यकल्पलतायां प्रथमे प्रतानेऽपि—

"संयुक्तो दीर्घो विसर्गान्तः सानुस्वारो द्विमात्रक ।
अङ्गादिसंयुते वर्णे, व्यञ्जने चाग्रगे लगुरु ॥
तीव्रप्रयत्नोच्चारेण, ह्रादावपि लघुर्गुरु. ।
घर्मभारेषु केशान् वा, सुप्तमीन इव ह्रद. ॥

१ आकारिते पुरुषे । २ तस्मात् कारणात् ।

३ 'काऽसि' इति सुभाषितरत्नभाण्डागारे (पृ० ३७८) । ४ अत्र पाठप्रपातः प्रतिह्रये ?

यथा चेटकराजस्य सप्त पुत्र्यः–ज्येष्ठा 'क्षत्रियकुण्डन'पुरे महावीरभ्रातृनन्दी(न्दि)वर्धनस्य पत्नी १, सुज्येष्ठा वीरजिनहस्ते व्रतिनी जाता यस्यां पेढालविद्याधरेण भ्रमररूपेण निक्षिप्तवीर्यजात' सत्यकिविद्याधरो लोके महादेव उच्यते २, मृगावती 'कौशाम्बी'पुरे शतानीकनृपस्य पत्नी यस्या उदयननाम्ना पुत्रेण चण्डप्रद्योतनपुत्री वासवदत्ताऽपहृता, मृगावती सा वीरपार्श्वे दीक्षां गृहीतवतीति ३, प्रभावती 'वीतभय'पत्तने श्रीउदयननृपस्य पत्नी यया दासीप्रदत्तापतितविद्युन्मालिकृतश्रीवत्स्वामिप्रतिमा पूजिता निजगृहे उदयनराजर्षिस्तु 'गोकुले' रोगवशात् भक्षितविषमिश्रितदधिः स्वर्गं गतवान् ४, चेल्लणा 'राजगृहे' श्रेणिकनृपपत्नी ५, पद्मावती 'चम्पा'नगर्यां दधिवाहननृपस्य पत्नी ६, शिवादेवी 'उज्जयिन्यां' चण्डप्रद्योतनस्य पत्नी ७, इति सप्तापि चेटकपुत्र्यः शीलयुक्ताः । तथा सकलतीर्थङ्करमातरः शीलवत्यः ॥

सवैया इकतीसा ( दिक्पट ८४ बोलेति नाम्नि ग्रन्थे स० ४५ )—

पुंप्फके कपोल रंग रोलके निचोल सोल शीलवै अडोल याकी जातिमें महासती
यामें जगतावनकी मात अवदात गात नमें जाई इंद जात नितही महीपती ।
दानके स्वभाव जाके तपके प्रभाव जाके रीचे नहीं भाव काचे माचे साधुसंगती
धर्मकी अवलंबिनी जो दोषकी विलंबिनी निरंबिनी है ऐसी ताई क्यूं न पंचमी गती ? ॥१॥

इति निश्चयतो भावनया पालितं शीलं मोक्षाय भवति । परं व्यवहारतो लज्जयाऽपि पालितं शीलं वरम् । यतः—

"स्त्रिया कयाचित् रुचये हि कश्चि–दाकारितो मस्तकचिर्चन्द्रशालम् ।
माभ्यस्य मद्यदपराध मे ह्री–रित्युक्तितः सोऽपि ततो निवृत्तः ॥१॥–उप०

नो सेव्योऽन्यनरस्त्वया मयि गते देशान्तरे चेद् मुग्धे
कामोद्दीपनता तदा मम ह्रिया मुक्तं गदित्वेत्ययात् ।

१ तात्पर्यम्—
पुष्पस्य कपोलस्य ( गात्रविशेषस्य ) रङ्गस्य निष्कर्षकत्वेन चोलस्य शीलैव अकस्मा यस्यां जातौ महासती।
यस्यां जगत्पावनस्य मातरः अवदातगात्रा नमन्ति यस्यै इन्द्रजातिर्नित्यं महीपतयः ।
दानस्य स्वभावः यस्याः ( यस्याः ) तपसः प्रभावः यस्यै रोचते न अपकर्मावेन रक्ता साधुसङ्गती
धर्मस्य अवलम्बिनी या दोषस्य विलम्बिनी निरालम्बिनी अस्ति ईदृशी तस्याः कथं न पञ्चमी गतिः ? ॥

२ 'नहि भाव काचे माचे साधु' इति प्रकरणरत्नाकरे प्रथमे विभागे ।

३ शिरोपुष्पम् । ४ 'मम ह्रिया' इति पदेऽत्र संयुक्तत्वात् छन्दोभङ्गो दृश्यते परन्तु श्रीहेमचन्द्राचार्यैः ह्रकारप्रमुखसंयुक्ते वर्णे छन्दोभङ्गो न कथितः । यतः श्रीमद्भिः तैः छन्दोऽनुशासने प्रथमे संज्ञाध्याये 'xxx पदितः वोऽनुस्वारव्यञ्जनाह्रादिसंयोगे' इति सूत्रस्य स्वोपज्ञवृत्तौ—"विसर्गमूलीये उपध्मानीये विसर्जनीयेऽनुस्वारे व्यञ्जने ह्रादिवर्जिते संयोगे च परे ह्रस्वोऽपि गो भवति वक्रः । ह्रादीति समस्तव्यस्तग्रहणात् ह्रसंयोगे हसंयोगे रसंयोगे च न गुरुः । आदिग्रहणात् यथादर्शनम्' । ह्रादिसंयोगे च यथा—"तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि ।"

तज्जातं हि तथा स्त्रियाऽऽहुतनरे पृष्टेऽपहर्षे कथं
त्रुट्यद्भाण्डविवेकतो धृतह्रिया शीलश्रिये तेत् स्थितम् ॥ २ ॥–शार्दूल०

जन्तूनां विधिवशादन्यथाऽपि जायते । यतः—

"हत्वा नृपं पतिमवेक्ष्य भुजङ्गदष्टं
देशान्तरे विधिवशाद् गणिका च जाता ।
पुत्रं पतिं समधिगम्य चितां प्रविष्टा
शोचामि गोपगृहिणी कथमद्य तक्रम् ? ॥ १ ॥"–वसन्त०

इति ।

"कोकिलानां स्वरो रूपं, नारी रूपं पतिव्रतम् ।
विद्या रूपं कुरूपाणां, क्षमा रूपं तपस्विनाम् ॥ १ ॥"–अनु०

अतो महानिशीथे प्रोक्तम् । धन्यः पुण्यः स यः शीलं पालयति । इति षट्त्रिंशत्तमवृत्तार्थः ॥३६॥

* * * *

सूत्रम्—

सीताहृतिर्जलधिलङ्घनमाहवश्च
रक्षोवधः प्रतिहृ(कृ ?)तिर्ज्वलनप्रवेशः ।
पुण्या यतो विमलशीलतया पदार्थाः
प्रोद्यत्प्रबन्धगतयः कथमन्यथैते ? ॥ ३७ ॥

व्याख्या–सीतेति । हे प्रभो ! यतः कारणात् एते पदार्थाः विमलशीलतया–निर्मलशीलत्वेन करणेन पुण्याः–पवित्राः वर्तन्ते, श्रोतॄणामपि धर्मप्राप्तये भवन्तीत्यर्थः । अन्यथा शीलं विना एते पदार्थाः कथं पुण्याः ? यतो लौकिकरामायणादीनि शास्त्राणि शृण्वतामपि पापाय भवन्ति ।

---

तथा—

तव ह्रियाऽपह्रियो मम ह्रीरभूच्छशिग्रहेऽपि क्षुतं न धृता तत ।
वहलश्रामरमेचकतामस मम प्रिये ! क्व समेष्यति तत् पुनः ?' ॥"

काव्यकल्पलताया प्रथमे प्रतानेऽपि—

"स्वक्षो दीर्घो विसर्गान्त सानुस्वारो द्विमात्रक ।
भह्रादिसंयुते वर्णे, व्यञ्जने चाग्रगे लगुरु ॥
तीव्रप्रयत्नोच्चारेण, ह्लादावपि लघुर्गुरु ।
यर्हमारेषु केशान् वा, क्षुसमीन इव ह्रदः ॥

१ आकारिते पुरुषे । २ तस्मात् कारणात् ।

३ 'काऽसि' इति सुभाषितरत्नभाण्डागारे (पृ० २७८) । ४ अत्र पाठप्रपातः प्रतिद्वये ।

कथंभूताः पदार्थाः ? 'प्रोद्यत्प्रबन्धगतयः' प्रोद्यत्सु–उत्कृष्टेषु प्रबन्धेषु–श्रीरसादिमयेषु गति–गमनं येषां ते इति। ते के पदार्थाः ? तानाह–सीताहृति रावणेन सीताया हरणं कृतम्, तदनन्तरं रामचन्द्रेण जलधिलङ्घनं कृतम्, ततश्च रावणेन सह आहवः–सङ्ग्रामः कृतः, ततो रणेन रक्षस–रावणस्य वधः कृत–जातः। रक्षःशब्दो नपुंसकः इसान्तः। ततः प्रविष्ट(ष्टा?)ति–सीता गृहं नीता। ततो लोकापवादात् सीता अटव्यां मोचिता। ततः सीतायाः दिव्यं दत्तम्। तेन सीतया ज्वलनप्रवेशः कृतः। ततो विमलशीलतया सीता पुण्या–पवित्रा जाता। अत्रापि पुण्यशब्दो योज्य इति। सीताशब्दो दन्त्यतालव्य इति॥ अत्र लेशतः सम्बन्धमाह—

'अयोध्या'यां दशरथपुत्रौ राम-लक्ष्मणौ स्तः। पद्मेन जनकनृपपुत्री जानकी परिणीता। कैकेयीराज्ञीवरव्यतिकरात् सीतया सह राम-लक्ष्मणौ वनं गतौ। सौमित्रिणा वंशजाला-न्तरस्थितो विद्यां साधयन् शम्बूकनामा सूर्पणखापुत्रो हतः क्रीडताऽज्ञानतः। तत्रागतया सूर्पणखया दृष्टो रामः। रूपरञ्जितया कामातुरया भोगार्थं याचितः। तेन तिरस्कृता। इतश्च शम्बूकनिमित्तं लक्ष्मणस्य रामेण सह सिंहनादो मया सङ्कटे विधेय इति कृतसङ्केतस्य शम्बूकपक्षीयविद्याधरैः सह युद्धं लग्नं वर्तते स्म। तया चन्द्रणखया गत्वा रावणाग्रे सीता रूपं वर्णितम्। तस्य मनश्चलितम्। यतः—

> "द्विजराजमुखी मृगराजकटिः, गजराजविराजितमन्थगती।
> यदि सा वनिता हृदये वसिता, क्व तपः क्व जपः क्व समाधिविधिः॥१॥"–तोटकम्

अथ बालभारते (आदिपर्वणि स० १, श्लो० ३६) अपि—

> "अभ्यस्य स्मरतपने घनेऽस्याः, सौभाग्यसिन्धोः पुलिने पुलिन्दः।
> वेध्यं शराणां कुरुते न कस्य, चलं च चर्म च मनो मनोभूः ?॥१॥"–उप०

स पौलस्त्यस्तत्र गत्वा मन्त्रविद्याविज्ञाततत्स्थितिसिंहनादसङ्केतः स्वयं सिंहनादकरणच्छलेन तदनुक्त तद्गमने रामे मुनिप्रतिबोधितं जातिस्मरणवन्तं सीतासमीपस्थं रक्षार्थं युध्यमानं जटायुनामानं पक्षिणं हत्वा गृहीत्वा सीतां 'लङ्का' समाययौ। लौकिकास्तु—

> "न भूतपूर्वो(र्वो) न च केन दृष्टो, हैमः (हेमः ?) कुरङ्गो न कदापि वार्ता।
> तथापि तृष्णा रघुनन्दनस्य, विनाशकाले विपरीतबुद्धिः॥१॥"–उपेन्द्रवज्रा

इति सौवर्णमृगच्छलं कथयन्ति। ततो ज्ञातव्यतिकरौ राम-लक्ष्मणौ पुण्यवशाद् वानरविद्याधरैः सुग्रीवादिभिर्मिलितैः सह[1]-सेतुनामानौ नृपौ रावणसेवकौ सागरोपकण्ठे जित्वा चन्द्रा विद्याबलेन 'लङ्का'समीपमाजग्मतुः। अत्र लौकिकाः–सागरमध्ये पाषाणैर्बद्धपालिः वानराः पद्मब एव। यतः—

1 रामचन्द्रेण। 2 तमसु–अतिक्रम्य कुर्वं गमनं येन स तथिकम्।

"ये मज्जन्ति निमज्जयन्ति नितरां ते प्रस्तरा दुस्तरा
वार्धौ वीर! तरन्ति वानरभटानुत्तारयन्तेऽपि च।
नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः
सोऽयं दाशरथेः प्रतापमहिमा सर्वः समुज्जृम्भते ॥ १ ॥"—शार्दूल०

इत्यादि।

"विजेतव्या लङ्का चरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः।
तथाप्येको रामः सकलमवधीद् राक्षसकुलं
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ १ ॥"—शिखरिणी

अथ दूताङ्गदनाटके (पृ० ५-६) मन्दोदरी रावणं प्रत्याह—

"[3]पि(पे)क्ख पि(पे)क्ख अच्छ(च)रियं। [गाहा—]
विलसिअ(द)सरोसवाण(न)र-वरूहिणीकलयलस्स कल्लोला।
इह तुह विलासवासम्मि वीर! विरयंति पडिसद्दा(द्दं) ॥ १ ॥
अज्जवि न को वि दोसो, रहुपहुणो देव! देहि वियदेहिं (वेदेहीं)।
मन्दोदरीइ(अ) मंडनमखण्डभावं समब्भेउ(दु) ॥ २ ॥

सोपहासं रावण आह—

"एकं तावदकृत्यमेतदतुलं यन्मैथिलीयं हृता
द्वैतीयीकमिदं विमृश्य यदसौ तस्मै तदा नार्पिता।
तार्तीयीकमदश्च(मिदं तु) यत् कपिभटैर्बद्धेऽपि(द्य) वारांनिधौ
सन्धानं दशकन्धरो रचयति क्ष्मानन्दिनीमर्पयन् ॥ १ ॥"—शार्दूल०

---

१ समस्ति पद्यमिद सुभाषितरत्नभाण्डागारे (पृ० १२४), परन्तु तृतीय चरणं विहाय सर्वत्र पाठभेदा, यत प्रथम-द्वितीय-तुरीयपादा अनुक्रमेण यथा—

ये मज्जन्ति निमज्जयन्ति च परास्ते प्रस्तरा दुस्तरे, वार्धौ वीर! तरन्ति वानरभटान् संतारयन्तेऽपि च, श्रीमद्दाशरथेः प्रतापमहिमा सोऽय समुज्जृम्भते।

२ इदं नाटकं श्रीसुभटकविना प्राणायि। काव्यमालायां २८तमगुच्छकरूपेण मुद्रितं निर्णयसागराख्ययन्त्रालये।

३–४ छाया—

प्रेक्षस्व प्रेक्षस्व आश्चर्यम्। गाथा—

विलसितसरोपवानरवरूथिनीकलकलस्य कल्लोला।
इह तव विलासवासे वीर! विरचयन्ति प्रतिशब्दान् (म्)॥
अद्यापि न कोऽपि दोषो रघुप्रभोर्देव! देहि वैदेहीम्।
मन्दोदर्या मण्डनमखण्डभावं सम्भज्येत्॥

विभीषण आह—

"मनुष्यौ न मनुष्यौ तौ, वानरास्ते न वानराः ।
व्याजेन किमपि छद्म, देव! दुर्दैवमेव ते ॥ २ ॥"—अनु०

तदिदं मुच्यतां विद्याधरकुलकालरात्रिर्मैथिली इति वचसा रुष्टेन रावणेन निष्कासितो विभीषणो रामाय मिलित इति । अथ रावणं प्रति अङ्गद आह—

"समं प्रतिज्ञया येन, तीर्त्वा दुस्तरमर्णवम् ।
वनद्रुमाः सुवेलस्य, मन्यन्ते त्वद्भुजा इव ॥ १ ॥—अनु०

तदा साटोपं रावण आह—

"पारावतैः किमयमम्बुनिधिर्न तीर्णः
क्रान्ताः कथं न कपिभिः क्वचनापि शैलाः ।
तद् वेद्मि दोर्बलमसौ यदि शौर्यरेखा
माविष्करोति करवालकषोपले मे ॥ १ ॥"—वसन्त०

इति दूताङ्गदनाटके ( पृ० १०, श्लो० २४ ) लौकिकाः पठन्ति—

अथैकविंशतिदिवसानन्तरं हनुमता राममुद्रिकां समर्प्य सीताया भोजनं कारापितम् । ततो मिथो युद्धं जातम् । प्रान्ते रावणेन शक्त्या वक्षसि ताडितो लक्ष्मणो मूर्च्छया पतित' । ततो रात्रावेव हनुमत्प्रमुखैर्विद्याधरैः कन्यासहस्रयुता विशल्या नाम्नी कन्याऽऽनीता । पूर्वकृत पुण्यातिशायिन्या तया स्पर्शितः (स्पृष्टः ?) लक्ष्मणः सज्जो जातः । पर्यणायि तामिः सह, लौकिकास्तु 'विशल्यां' औषधीं पठन्तीति । प्रभाते युद्धे लग्ने हतो लक्ष्मणेन रावणश्चतुर्थ्यां गतः । तत्र सीतां लात्वा 'अयोध्यां' गतौ राम-लक्ष्मणौ । यतः सीता महासती राज्य भण्डारार्पणप्रलोभिताऽपि रावणेन न शीलाद् भ्रष्टा ।

एकदा नष्टपथागतेन रामेण ग्राम्यिकवचनं श्रुत्वा त्यक्ता । यतः—

"न राज्ञा सह मित्रत्वं, न सर्पो निर्विषः क्वचित् ।
न कुलं निर्मलं तत्र, स्त्रीजनो यत्र जीवति ॥ १ ॥—अनु०

पश्चात् पुत्र-लवाङ्कुशप्रयोगेण सीता आनीता । रामेणोक्तम्–वैदेहि! यदि, दिव्यं विधेहि, कलङ्कं पिधेहि । अथात्र दिव्याधिकार'—

"दिव्यं सप्तविधं प्रोक्तं, यथायोग्यं तथा बुधैः ।
दिव्याधिवासनापूर्वं, कर्तव्यं देवसन्निधौ ॥ १ ॥—अनु०

१ नरकभूमौ इति भैरव ।

फालं जलं घटं चैव, विषं कोषश्च पञ्चमः ।
षष्ठं च चापि (?) तुला दिव्यं, सप्तमं तप्तमापकम् ॥ २ ॥–अनु०
आज्ञाभङ्गो नृपवधः, स्त्रीवधो वर्णसङ्करः ।
परस्त्रीगमनं चौर्यं, गर्भं चैव पतिं विना ॥ ३ ॥–अनु०
वाह्वैवदण्डपारुष्यं, गर्भपातनमेव च ।
अपराधा दश प्रोक्ता, नीतिशास्त्रविशारदैः ॥ ४ ॥"–अनु०

पाठान्तरम्—

"जल१मग्निर्२घटं ३ कोशो ४, विषं ५ माषाश्च ६ तन्दुलाः ७ ।
काल८स्तुला ९ सुतस्पर्शो, १० दिव्यानां दशकं जगुः ॥ ५ ॥"–अनु०

इति दिव्याधिकारः । तेषु अग्निदिव्यमत्र रामेण दत्तम् । तदा पञ्चाशद्धनुर्मितचारिकायां खादिराङ्गारपूरितायां तत्र सीता महासती सत्यश्रावणा यथा—

"मनसि वचसि काये जागरे स्वप्नमार्गे
यदि मम पतिभावो राघवादन्यपुंसि ।
तदिह दह शरीरं मामकं पावकेदं
विकृतसुकृतभाजां येन साक्षी त्वमेव ॥ १ ॥"–मालिनी

इत्युक्ते—

"हाकारगर्भितमुखेषु वलीमुखेषु
वैमानिकेषु नयनोदकमुत्सृजत्सु ।
व्योमाङ्गणाक्रमणकौतुकदत्तफाला
ज्वालाकलापविकटाऽनलमाविवेश ॥ २ ॥"–वसन्त०

देवैः पुष्पवृष्टिर्विहिता । वह्निर्जलम् । यतः—

"सीतया दुरपवादभीतया, पावके स्वतनुराहुतिः कृता ।
पावकोऽपि जलतां जगाम यत्, तत्र शीलमहिमा विजृम्भितः ॥ ३ ॥"–रथोद्धता

तत्र जलपूरप्लाव्यमाना लोकाः हे सीते! महासति! रक्ष रक्ष अस्मानिति कथ्यमानाः । तदा सीतया मण्डलाकारहस्तचालनेन स्तम्भितं जलम् । मण्डलाकारकुण्डजलाशयो जातः । तत्कमलस्था कमला इव स्वयं जलाशयान्निर्गता सीता रामं त्रपाश्यामसुखं दृष्ट्वा प्राह—

"मा गा विषादभवनं भुवनैकवीर!
निष्कारणं विगणिता किमियं मयैव ।

१ 'चाल्नेन' इति ख–पाठ ।

देवेन केनचिदह दहने निरस्ता
निस्तारिता च भवतैव हृदि स्थितेन ॥ ४ ॥"—वसन्त०

रामो मूर्च्छां गतः । सीता तु तत्रैव जयभूषणकेवलिपार्श्वे दीक्षां लात्वा तपस्तप्त्वा मृत्वाऽच्युतेन्द्रो जातः । यदा 'विदेह'क्षेत्रे रावणजीवस्तीर्थङ्करो भविष्यति तदा सीताजीवोऽस्य गणधरो भूत्वा मोक्षमेष्यति । अथ कालान्तरेण रामोऽपि व्रतं गृहीत्वा केवली भूत्वा मुक्तिं ययौ । इति सम्बन्धलेशः सीतायाः सम्पूर्णः । इति सप्तत्रिंशपद्यार्थः ॥ ३७ ॥

* * * *

सूत्रम्—

आबालगाङ्गसलिलामलशीललीले !
हे भगि ! सुन्दरि ! पुरा चरणे निषिद्धा ।
प्रोद्यत्तपा प्रकुरु ते शुचिचित्तवृत्त्या
यस्मात् क्रिया प्रतिफलन्ति न भावशून्या ॥ ३८ ॥

व्याख्या—आबालेति । हे सुन्दरि ! हे भगि !—भगिनि ! आबालगाङ्गसलिलामलशीललीले ! बालं अभिव्याप्य इति आबालं गङ्गाया इद गाङ्गं सलिलं तद्वद् अमला शीललीला यस्याः सा तस्याः सम्बोधनं इति । त्वं तत् चरणं कुरु । कया ? शुचिचित्तवृत्त्या—निर्मलचित्तव्यापारेण कृत्वा । कथम्भूता त्वं ? पुरा—पूर्वं मया—भरतेन चरणे—चारित्रे[1] निषिद्धा । (पुनः) कथम्भूता त्वम् ? 'प्रोद्यत्तपाः' प्रोद्यत्—उत्कृष्टं तपो यस्याः सा, षष्टिसहस्राणि कृताचाम्ल्तपाः । यस्मात्—यतः क्रियाः भावशून्याः न फलन्ति । 'मैत्री भगिनी' इति भावप्रभेदे (श्लो० ४१) । अत्र लेशतः सम्बन्धः—

भरतः षट्खण्डं साधयित्वा 'अयोध्यां' समागतोऽभिषेकोत्सवप्रान्ते सम्भालनार्थं नियुक्तनरैर्निजान् आकारयामास । यतः—

"षष्टिवर्षसहस्राणि, चिरहोत्कण्ठिताशयान् ।
राजा निजान्निरैक्षिष्ट, नियुक्तनरयोजितान् ॥ १ ॥"—अनु०

ततः दुर्बलां पाण्डुपत्त्रिन[2] सोदरीं हेमन्तम्लाननलिनीमिव निःश्रीकरूपां सुन्दरीं वीक्ष्य क्रोधाध्मातचक्री तान् भूते स—रे रे नियुक्ताः ! किं मदीयेऽपि गृहे न घटाः सन्ति ? ओदनानि न सन्ति ? अथवाऽसौ किमपि नाभाति ? किं वाऽस्याः किं रोगोऽस्ति ? तर्हि किं वैद्या न सन्ति ? भूर्यस्या वर्तते ? ओषधीर्न प्रसौति ? वा किमसौ यतो दरिद्रपुत्रीवत् कृशामेनां दृष्ट्वाऽहं दुःखितो जातः । तदा चैरधिकारिनरैः प्रोक्तम्—युष्माकं गृहे सर्वमस्ति । परं यद्दिनादारभ्य नृप दक्षसाध

1 चारित्रम् ।  2 'भगिनीमपि भक्तीं च' इति पाठान्तरम् ।

नार्थं चचाल तत्प्रभृति नित्यश इयं आचाम्लानि करोति। तथा स्वामिना प्रव्रजन्ती असौ निवारिता तत्प्रभृति भावसाध्वी जाताऽसौ संसारच्छेदनाय। तदा भरतेन सुन्दरी सम्भापिता। तदा सुन्दर्या प्रोक्तम्–एवमेव। तदा चक्री प्राह स–हे सुन्दरि! हे महासत्त्वे! साधु साधु तव तत्त्वे मतिर्निर्मला रमते, त्वं प्रव्रज्यां प्रपद्यमाना प्रमादतो मया तदा निवारिता।[1] ततो दीक्षामहोत्सवेन चक्रिणा कृतेन सुन्दरी 'अष्टापद'गिरौ समवसृतस्य श्रीऋषभदेवस्वामिनः समीपे व्रतं गृहीत्वा निर्मलं चारित्रं पालयामास। इति पूर्णः अस्याः सम्बन्धस्तपोऽधिकारेऽपि वाच्यः। यतः—

"दातव्यं धन्यवद् दानं, शीलं सीतेव निर्मलम्।
सुन्दरीवत् तपः कार्यं, भावना भरतेशवत्॥ १॥"–अनु०

इत्यष्टत्रिंशत्तमवृत्तार्थः॥ ३८॥

＊　＊　＊　＊

अथ तप आश्रित्याह—

सूत्रम्—

ब्राह्मी सुसुन्दरिकया सह तं वनस्थं
वल्ल्यावृताङ्गवरबाहुबलिं बभाषे।
गर्जाश्रयं जहिहि कर्मलयं लभस्व
दुःखाङ्कुरोद्दलनतत्परतां विधेहि॥ ३९॥

व्याख्या–(ब्राह्मीति।) सुसुन्दरिकया सुभगिन्या साध्व्या सह ब्राह्मी तं वल्ल्यावृताङ्गवरबाहुबलिं बभाषे–जगाद। वल्लिभिः आवृतं–आच्छादितं अङ्गं यस्य सः, वरश्चासौ बाहुबलिश्च तम्। कथंभूतं तम्? वनस्थं–वनवासिनमिति। हे भ्रातः! त्वं गर्जाश्रयं जहिहि–त्यज। गर्जे–गजे आश्रयो–निवासः (यस्य) तं, गजारोहणमित्यर्थः। "गर्जः गज" इति शब्दप्रभेदः (?)।[2] त्वं कर्मलयं लभस्व–कर्मनाशं प्राप्नुहि। अत एव त्वं दुःखाङ्कुरोद्दलनतत्परतां विधेहि–दुःखाङ्कुरस्य उद्दलने–उत्पाटने तत्परतां–आदरत्वं विधेहि–कुरु। कायोत्सर्गस्तपोमध्ये कथितोऽस्ति–"[3]पायच्छित्तं विणओ" इत्यादि (अतिचारगाथायां सप्तमी) गाथा। अत्र सम्बन्धः—

---

१ त्वया भरतेन। २ वैजयन्तीकोशे भूमिकाण्डे (श्लो० ६०) "स्तम्बेरमो गजो गर्ज. इति पाठ.।
३ सम्पूर्णा गाथा तच्छाया चैवम्—

"पायच्छित्त विणओ, वेयावच्च तहेव सज्झाओ।
झाण उस्सग्गो वि अ, अब्भिंतरओ तवो होइ॥"
[प्रायश्चित्त विनयो वैयावृत्त्य तथैव स्वाध्याय।
ध्यानमुत्सर्गोऽपि च अभ्यन्तर तपो भवति॥]

यदा षट्खण्डं जित्वा 'अयोध्या'यां समेतः श्रीभरतोऽष्टानवतिभ्रातॄणां दीक्षाऽनन्तरं सत्सा नम्रत्वेऽभावे चक्रस्य सुवेगनामानं दूतं बाहुबलेराकारणाय प्रमोच। स दूतो 'बहुली'देशं 'तक्षशिला'नगरीं गत्वा भरतसुखोदन्तमुदित्वा बाहुबलेराह्वानकारणं कथयामास—चेद् भवान् बाहुबली तत्र नागमिष्यति तदा विरोधो भविष्यति। बलिष्ठो भरत इन्द्रेण सहैकत्र सिंहासने तिष्ठति। अस्य सेवां सर्वेऽपि राजानः कुर्वन्ति। अस्य चलितं चतुरङ्गसैन्यं को रुणद्धि? सर्वैः सर्वत्र चक्री इति गीयते। यदि राज्येन जीवितव्येन कार्यं तदैनं नमस्व इत्युक्ते दूतेन सति बाहुबलिः प्राह—

"सदा यदाज्ञां स्वशिरःकिरीटं, कुर्वन्ति किं नाम न ते नरेन्द्राः।
यस्यानुजः स्फूर्जति धर्मशौर्यो, महाभटो बाहुबली बलिष्ठः ॥ १ ॥—उप०
चक्री स चक्रभ्रमतो बभूव, तदभिग्रहाद् बिभ्यति ये वराकाः।
ते तस्य सेवां रचयन्तु त हु, न कुम्भकारादधिकं करोमि ॥ २ ॥"—उप०

इत्याद्युक्त्वा त्वं दूतोऽवध्य इति मुक्तः। स आगत्य चक्रिणं यथोक्तं जगौ। भरतोऽपि समग्रसैन्यमादाय 'बहुली'देशं ययौ। चक्रि-बाहुबलिनोर्द्वयोरपि सैन्ययोर्युद्धं लग्नम्। अथ महारण्ये प्रवृत्ते मा भूत् सकललोकक्षय इति विचार्य देवाः श्रीऋषभाज्ञया सैन्ययुग्मं युध्यमानं निवार्य चक्रिणं प्रबोधयामासुः। काव्यानि (पद्मानन्दे स० १७, श्लो० २३०,२३१,२३३,२३५)—

"किं न पूर्वमभवन् भुवो धवा, मेदिनी कमपि नैव सन्वगात्।
प्रीडमप्यभूत नाथमर्तरि, भ्रमभाजि दधती नवं नवम् ॥ १ ॥—रथोद्धता
नैतया कति पतित्वचारिणो, मारिता बत परेषु लुब्धया।
रागिणो गुणनिधीन् यदृच्छया, जीवतोऽपि कति ते यमत्यजन् ॥ २ ॥—रथो०
वैभवेऽपि भुवनस्य भोग्यता—मेति तत्यमितमेव भूतलम्।
श्रीभरेऽपि सति भोग्यताऽधिकं, स्वस्य किञ्चिदपि नोपकारकम् ॥ ३ ॥—रथो०
बहुनीचर्नैविलासगागरे, रुद्धमस्ति न किपद्धरावलम्।
भूलवोऽयमपि तद्यदुच्यतां, युध्यतां सह कुलेन विग्रहः ॥ ४ ॥"—रथो०

इति। हे भरत! त्वं रणं त्यज! गृहं याहि! पाहि जनान्! तदा भरतेन भणितम्—मम चक्ररत्नं 'विनीतां' न प्रविशेत्, द्वितीयं कार्यं नहि। ततो देवा आगत्य बाहुबलिं बोधयन्ति स्म। तेनोक्तम्—तावदत्र राज्यं पालयामि। इम लोभिन भरत न नमामि। अयुध्यमानेन सर्वं नाहं युध्ये ततो विषादमञ्जनार्थं द्वाभ्यां स्वामिभ्यां दृग्-वाग्-भुज-दण्ड-युद्धैर्योध्यं। येन गजादिसंहारो न स्यात्। ततो भरतस्य दृष्टियुग्मं सङ्कुचितं रविदर्शनात् कैरवमत् मिथो विलोकनात्, न बाहुबले

---

१ इमे पद्य वर्तेते पद्मानन्दमहाकाव्ये (स० १०) चतुर्विंशती०० २२। २ ववचः। ३ विमान' इति क—पाठः।

रिति जितं बाहुबलिना । अथ तयोर्वाग्युद्धम् भरतेन क्ष्वेडा तेने । ततो बाहुबलिना सिंहारवः[1] कृतः । ततः ( पद्मा० स० १७, श्लो० ३०३ )—

"क्रमेण कार्श्यं भरतेश्वरस्य, क्ष्वेडा खलस्यैव जगाम मैत्री ।
बलोदधेर्बाहुबलेः पुनः सा, सन्मित्रमैत्रीव परां प्रवृद्धिम् ॥ १ ॥"—उप०

शास्त्रीयवादेऽपि बाहुबलिर्जयं प्राप इति । अथ भुजाभ्यां युध्यमानौ तौ बाहुबलिना व्योम्नि भरत उछालितः पतन् कृपया धृत इति प्राप्तजयः सौनन्देय[2] इति । अथ मुष्टियुद्धेऽपि बाहुबलेर्विजयो जात इति । अथ दण्डेनापि भूमण्डलान्तरा कण्ठभारं भरतो ममज्ज । इति युद्धैः समग्रैरमुना जितोऽहं किं नास्मि चक्रीति वितर्कभाग् । ततो यक्षैश्चक्रं चक्रिहस्तेऽर्पितम् । प्रत्ययो जातः । ततो भरतोऽनुजं जगौ । काव्यानि ( पद्मा० स० १७, श्लो० ३४०–३४६ )—

"अद्यापि किञ्चिन्न विनष्टमास्ते, मा चक्रपातात् प्रलयं प्रयाहि ।
मन्यस्व मन्यस्व ममानुवृत्तिं, दत्से कथं भ्रातृवधात् कलङ्कम् ॥ १ ॥—उप०
ईत्युन्नदन्तं[3] प्रसरन्मदं तं, ज्येष्ठार्षभिं बाहुबलिर्बभाषे ।
किं लोहखण्डेन करस्थितेन, विगर्हसे बाहुबलेर्बलौघम् ? ॥ २ ॥—उप०
कु(क्ष?)तोऽसि युद्धैर्निखिलैर्न किञ्चि–चक्रस्य ते सर्पति यस्य दर्पः ।
तद् ब्रूहि दण्डेन निहत्य चूर्णी–करोमि नालीदलवद् बलेन ॥ ३ ॥—उप०
प्रोल्लासयाम्यभ्रपथेऽथ वात–क्रान्तार्कतूलावलिलीलया किम् ? ।
घनेन लोहाधिकरण्युरोऽन्तः, किं वज्रवत् क्षोणितले क्षिपामि ? ॥ ४ ॥—उप०
अरान् सहस्रं विशरारुभावं नयेऽस्य किं वा लवशो विदार्य ।
करोम्यधिष्ठायकतां प्रपन्नान्, यक्षान् विलक्षान् कणशो विशीर्य ॥ ५ ॥—उप०
अन्यानिव क्षोणिधवाननेन, मामप्यमुं भापयसे किमु त्वम् ? ।
लब्धं त्वया स्वस्य बलप्रमाणं, चक्रस्य सम्प्रत्यवलोकय द्राक्[4] ॥ ६ ॥—उप०
तेनेति चक्रोदितगर्हणाभि–र्भालस्थलस्थभृकुटीकरालः ।
चक्री क्रुधा बाहुबलेर्वधार्थं, सर्वौजसा प्रेर्य मुमोच चक्रम् ॥ ७ ॥"—इन्द्रवज्रा

तत् चक्रं गत्वा बाहुबलिनः प्रदक्षिणां दत्त्वा पुनर्भरतहस्ते ययौ । स्वगोत्रजान् न हन्ति चक्रम् । 'बहली'पतिः आह स—हे भरत! त्वया सन्धा भग्ना । यतो दण्डयुद्धं मुक्त्वा चक्रं मुक्तम् । न्यायभ्रष्टस्त्वम् । निर्मले कुले कलङ्को दत्तः । काव्यम्—

"एकेन्द्रियस्यापि तवास्य[5] चक्रिन्!, चक्रस्य मद्रक्षणदक्षिणस्य ।
योऽभूद् विवेकः स न ते कृतोरु–लोभक्रुधो मद्वधबद्धबुद्धेः ॥ १ ॥"—इन्द्र०

---

१ सिंहनाद । २ सुनन्दाया अपत्य सौनन्देय—बाहुबलि । ३ 'इत्थ नदन्त' इति क–पाठ । ४ 'प्राक्' इति ख–पाठ । ५ पद्मा० स० १७, ३५८तमे पद्ये 'तवापि' इति पाठ. ।

यदा षट्खण्डं जित्वा 'अयोध्या'यां समेतः श्रीभरतोऽष्टानवतिभ्रातॄणां दीक्षाऽनन्तरं तस्यानमस्येशामावे चक्रस्य सुवेगनामानं दूतं बाहुबलेराकारणाय मुमोच। स दूतो 'बहुली'देश-'तक्षशिला'नगरीं गत्वा भरतसुखोदन्तमुदित्वा बाहुबलेराह्वानकारणं कथयामास—येद् भवान् बाहुबली तत्र नागमिष्यति तदा विरोधो भविष्यति। बलिष्ठो भरत इन्द्रेण सहैकत्र सिंहासने तिष्ठति। अस्य सेवां सर्वेऽपि राजानः कुर्वन्ति। अस्य चलितं चतुरङ्गसैन्यं को रुणद्धि? सर्वैः सर्वत्र चक्री इति गीयते। यदि राज्येन जीवितव्येन कार्यं तदैनं भजस्व इत्युक्ते दूतेन सति बाहुबलिः प्राह—

"सदा तदाज्ञां स्वशिरःकिरीटं, कुर्वन्ति किं नाम न ते नरेन्द्राः।
यस्यानुजः स्फूर्जति वर्यवीर्यो, महामहा बाहुबली बलिष्ठः ॥ १ ॥—उप०
चक्री स चक्रप्रभवो बभूव, तन्निग्रहाद् बिभ्यति ये वराकाः।
ते तस्य सेवां रचयन्तु न तु, न कुम्भकारादधिकं करोमि ॥ २ ॥"—उप०

इत्याद्युक्त्वा त्वं दूतोऽवध्य इति मुक्तः। स आगत्य चक्रिणं यथोक्तं जगौ। भरतोऽपि समग्रसैन्यमादाय 'बहुली'देशं ययौ। चक्रि-बाहुबलिनोर्द्वयोरपि सैन्ययोर्युद्धं लग्नम्। अथ महारम्भे प्रवृत्ते मा भूद् सकललोकक्षय इति विचार्य देवाः श्रीऋषभाज्ञया सैन्ययुग्मं युध्यमानं निवार्य चक्रिणं प्रबोधयामासुः। काव्यानि (पद्मानन्दे स० १७, श्लो० २३०,२३१,२३३,२३५)—

'किं न पूर्वममवन् भुवो मेवा, मेदिनी कमपि नेयमन्वगात्।
श्रीडमप्यसृत नाग्रमर्तरि, अंशभाजि दधती नवं नवम् ॥ १ ॥—रथोद्धता
नैतया कति पतित्वधारिणो, मारिता बत परेषु लुब्धया।
रागिणो गुणनिधीन् यदृच्छया, जीवतोऽपि कति से यमस्त्यजन् ॥ २ ॥—रथो०
वैभवेऽपि भुवनस्य भोग्यता—मेति तल्पमितमेव भूतलम्।
श्रीभरेऽपि सति भोज्यताऽधिकं, स्वस्य किञ्चिदपि नोपकारकम् ॥ ३ ॥—रथो०
तद्धुनीवनैविलागसागरे, रुद्धमस्ति न कियद्धरातलम्।
भूलवोऽयमपि तद्धुन्यतां, युध्यतां सह कुलेन विग्रहः ॥ ४ ॥"—रथो०

इति। हे भरत! त्वं रणं त्यज। गृहं याहि। पाहि जनान्। तदा भरतेन भणितम्—मम चक्ररत्नं 'विनीतां' न प्रविशेत्, द्वितीयं कार्यं नहि। ततो देवा आगत्य बाहुबलिं बोधयन्ति स्म। तेनोक्तम्—तातवत् राज्यं पालयामि। इमं लोभिनं भरतं न भजामि। अयुध्यमानेन समं नाहं युध्ये ततो विषादभञ्जनार्थं द्वाभ्यां स्वामिभ्यां दृग्-वाग्-भुज-दण्ड-मुष्टेर्योध्यं। येन गजादिसंहारो न स्यात्। ततो भरतस्य दृष्टियुगं सङ्कुचितं रविदर्शनात् कैरववत् मिथो विलोकनात्, न बाहुबले

१ इमे पद्ये वर्तेते पद्मानन्दमहाकाव्ये (स १७) चतुर्भुक्ताङ्की ७७ ९१। २ तदा। ३ 'विभाग' इति क—पाठः।

अथ दानादित्रयाणामुपसंहारेण भरतः स्वगतमाह—

सूत्रम्—

यत् साधवे वितरणं न कृतं च शीलं
व्याघ्रादिभीतिभिदुरं न तपोऽपि तप्तम् ।
यत् क्रूरकर्मभिदतो जिन ! तैर्विभावै-
र्वध्योऽस्मि चेद् भुवनपावन ! हा हतोऽस्मि ॥ ४० ॥

व्याख्या—यदिति । यत्–यतः मया–भरतेन साधवे वितरणं न कृतं, तस्मिन् काले राजपिण्डस्य साधूनामग्राह्यत्वात् । च–पुनः मया शीलं तथाविधं न कृतं–न पालितम् । अपि–पुनः मया तपो न तप्तम् । कथंभूतं तपः ? व्याघ्रादिभीतिभिदुरं–व्याघ्र-व्याल-ज्वलनादिभयनाशनशीलम् । पुनः यत् मया क्रूरकर्मभित्–क्रूरकर्मभेदकं अनुष्ठानं–निश्चलतया सामायिकादिव्रतं न कृतम् । अतो हेतोः हे जिन ! अहं तैः–प्रसिद्धैः विभावैः–प्रमाद-कषायादिभिः वध्योऽस्मि–मारणीयोऽस्मि चेत् । हे भुवनपावन ! हा इति खेदे । अहं हतोऽस्मि । तेन पूर्वं मा हन मा हन इति ब्रुवन्तो द्वारि स्थिताः शिक्षिताः श्रावकाः सन्ति स्म । इति चत्वारिंशत्तमवृत्तार्थः ॥ ४० ॥

* * * *

अथ भावमाश्रित्याह—

सूत्रम्—

रम्येऽत्र दर्पणगृहे वृषभाङ्गजन्मा
स्वीयोर्मिकापतनतः परपुद्गलेन ।
शोभां विभाव्य वदतीत्यव देव ! रागात्
सीदन्तमद्य भयदव्यसनाम्बुराशेः ॥ ४१ ॥

व्याख्या—रम्ये इति । रम्ये–मनोहरे अत्र–अस्मिन् दर्पणगृहे वृषभाङ्गजन्मा–भरतचक्री इति वदति । किं कृत्वा ? परपुद्गलेन शोभां विभाव्य । कस्मात् ? स्वीयोर्मिकापतनतः–निजमुद्रिकापतनात् । इति किम् ? । हे देव !–हे जिन ! अद्य–साम्प्रतं त्वं मां अव–पाहि । कथंभूतं माम् ? सीदन्तं–विषीदन्तम् । कस्मात् ? रागात्–संसाराभिष्वङ्गात् । कथंभूताद् रागात् ? 'भयदव्यसनाम्बुराशेः' भीतिप्रदकष्टानां समुद्रस्तस्मात् । "व्यसनं निष्फलोद्यमे ॥ दैवानिष्टफले श(स)क्तौ स्त्रीपान-मृगयादिषु । पापे विपत्तावशुभे" इति हैमानेकार्थः (का० ३, श्लो० १००७–१००८) । इत्येकचत्वारिंशत्तमवृत्तार्थः ॥ ४१ ॥

* * * *

इत्युक्त्वा मुष्टिमुत्पाट्य चक्रयुव भवन्त चूर्णयामि इति ब्रुवन् भरतस्य पार्श्वे गतोऽपो दध्यौ । काव्यम् ( पद्मा० स० १७, श्लो० ३६१-३६३ )—

"राज्यस्य लोभादग्रुनैव धिग् धिग्, मयाऽप्यदो भ्रातृवधो विधेयः ।
न तेन राज्येन ममास्ति कार्य—'मित्थं मयाऽद्' क्रियते यदर्थम् ॥ १ ॥—उप०
लोभेन कोपेन विनिर्जितेऽस्मिन्, जितेऽपि को मे प्रमदो मदो वा ।
याभ्यां जितोऽसावहमप्यहो चेत्, याभ्यां जितोऽस्मात् किमु गौरव तत् ? ॥२॥—उप०
राज्येऽपि लोभं भरतेऽपि कोपं, त्यक्त्वा ततस्तातपथं प्रपद्ये ।
येद् राज्यलक्ष्मी' परिणामरम्या, तत्याज तातोऽपि कुतस्तदेताम् ? ॥ ३ ॥—इन्द्रवज्रा

इदं गदित्वा बाहुबलि' पूर्वोत्पाटितमुष्टिना शिरःकेशान् समूलमुन्मूलयति स । भाव व्रतस्य तस्योपरि देवैः पुष्पवृष्टिश्चक्रे । कथं लघुभ्रातॄन् नमामि ? । तत उत्पादितकेवलस्तातपादान्तं गमिष्यामि । तत्रैव प्रतिमां प्रपद्य भरतस्तं प्रणम्य स्वस्थानं जगाम । स राजर्षि' प्रावृट्कालेऽपि निष्कम्प आसीत् । काव्यम् ( पद्मा० स० १७, श्लो० ३९३,३९४,३९२ )—

"तस्य वल्लिकुलकुञ्जनिकाये—ऽभूत् खगै' कृतकुलायनिकाये ।
वैरिणोर्विहगयोरविरोध—श्छायया दलतवैरविरोध' ॥ १ ॥—स्वागता
तत्र वल्लिवलयेन सवल्ले, खेलन खगकुलस्य रवया ।
बिभ्रतां फणभृतां फणव्रजे', पल्लवद्विगुणता व्यसन्यत ॥ २ ॥—रथो०
पावित्र्यं परमर्षिबाहुबलिनः साधो' समाराधये
यस्यांह्रिद्वयसेवया भुवमभूद् दर्भोऽङ्कुरा पूतता ।
किं ब्रूमो जगतोऽपि हि व्यवहृतौ तेनार्हतामप्यसौ
प्राक् पीठे स्नपनेऽप्यपावनकृतिप्रष्ठ' प्रतिष्ठास्वभूत् ॥ ३ ॥"—शार्दूल०

इत्येव वर्षान्ते श्रीऋषभजिनेन प्रेरिताभ्यां ब्राह्मी-सुन्दरीभ्यां समागत्य वने कार्योत्सर्गस्थो बाहुबलिरिति प्रोक्त'—गजारोहणं त्यज, तदा तव केवलज्ञान भवष्यति ऋषभस्वामिना प्रोक्त मस्तीति स्वस्थानं गते ते । अथ बाहुबलिश्चिन्तयति स—ज्ञात मया, मान एव गजः । अधुनाऽनेन सृतम् । सर्वान् लघूनपि प्रव्रज्यावृद्धान् वन्दे । एवं विचार्य तोऽभिमानं मुक्त्वा यावत् पादमुदक्षिपत् तावत् त्रुटितघनघातिकर्मा केवलज्ञानं प्राप । अथ साधुवेषं देव्या दत्तं प्राप्य केवलज्ञानी इत्येव म्नपिमण्डलद्वयो प्रोक्तमस्तीति समवसरणे गत्वा प्रदक्षिणां दत्त्वा तीर्थाय नम' कृत्वा स मुनिः केवलिसभां भेजे । क्रमेण श्रीऋषभेण सम'मष्टापद'गिरौ मुक्तिं जगाम । इति बाहुबलि सम्बन्धः । इति एकोनचत्वारिंशत्तमवृत्तार्थः ॥ ३९ ॥

---

१ पद्मा० ३६१तमे पद्ये तु मयाद्यमित्थं क्रियते' इति पाठः । २ विधितमीक्ष्यमिह्वरे ।

अथ दानादित्रयाणामुपसंहारेण भरतः स्वगतमाह—

सूत्रम्—

यत् साधवे वितरणं न कृतं च शीलं
व्याघ्रादिभीतिभिदुरं न तपोऽपि तप्तम् ।
यत् क्रूरकर्मभिदतो जिन ! तैर्विभावै-
र्वध्योऽस्मि चेद् भुवनपावन ! हा हतोऽस्मि ॥ ४० ॥

व्याख्या—यदिति । यत्–यतः मया–भरतेन साधवे वितरणं न कृतं, तस्मिन् काले राजपिण्डस्य साधूनामग्राह्यत्वात् । च–पुनः मया शीलं तथाविधं न कृतं–न पालितम् । अपि–पुनः मया तपो न तप्तम् । कथंभूतं तपः ? व्याघ्रादिभीतिभिदुरं–व्याघ्र-व्याल-ज्वलनादिभयनाशनशीलम् । पुनः यत् मया क्रूरकर्मभित्–क्रूरकर्मभेदकं अनुष्ठानं–निश्चलतया सामायिकादिव्रतं न कृतम् । अतो हेतोः हे जिन ! अहं तैः–प्रसिद्धैः विभावैः–प्रमाद-कषायादिभिः वध्योऽस्मि–मारणीयोऽस्मि चेत् । हे भुवनपावन ! हा इति खेदे । अहं हतोऽस्मि । तेन पूर्वं मा हन मा हन इति ब्रुवन्तो द्वारि स्थिताः शिक्षिताः श्रावकाः सन्ति स्म । इति चत्वारिंशत्तमवृत्तार्थः ॥ ४० ॥

* * * *

अथ भावमाश्रित्याह—

सूत्रम्—

रम्येऽत्र दर्पणगृहे वृषभाङ्गजन्मा
स्वीयोर्मिकापतनतः परपुद्गलेन ।
शोभां विभाव्य वदतीत्यव देव ! रागात्
सीदन्तमद्य भयदव्यसनाम्बुराशेः ॥ ४१ ॥

व्याख्या—रम्ये इति । रम्ये–मनोहरे अत्र–अस्मिन् दर्पणगृहे वृषभाङ्गजन्मा–भरतचक्री इति वदति । किं कृत्वा ? परपुद्गलेन शोभां विभाव्य । कस्मात् ? स्वीयोर्मिकापतनतः–निजमुद्रिकापतनात् । इति किम् ? । हे देव !–हे जिन ! अद्य–साम्प्रतं त्वं मां अव–पाहि । कथंभूतं माम् ? सीदन्तं–विषीदन्तम् । कस्मात् ? रागात्–संसाराभिष्वङ्गात् । कथंभूताद् रागात् ? 'भयदव्यसनाम्बुराशेः' भीतिप्रदकष्टानां समुद्रस्तस्मात् । "व्यसनं निष्फलोद्यमे ॥ दैवानिष्टफले श(स)क्तौ स्त्रीपान-मृगयादिषु । पापे विपत्तावशुभे" इति हैमानेकार्थः (का० ३, श्लो० १००७–१००८) । इत्येकचत्वारिंशत्तमवृत्तार्थः ॥ ४१ ॥

* * * *

इत्युक्त्वा मुष्टिमुत्पाट्य चक्रयुत भवन्तं चूर्णयामि इति ब्रुवन् भरतस्य पार्श्वे गतोऽपि दध्यौ । काव्यम् ( पद्मा० स० १७, श्लो० ३६१–३६३ )—

"राज्यस्य लोभादमुनेव धिग् धिग्, मयाऽप्यहो भ्रातृवधो विधेयः ।
न तेन राज्येन ममास्ति कार्य–'मित्थं मयाऽद्य'[1] क्रियते यदर्थम् ॥ १ ॥–उप०
लोभेन कोपेन विनिर्जितेऽस्मिन्, जितेऽपि को मे प्रमदो मदो वा ।
याभ्यां जितोऽसावहमप्यहो चेत्, ताभ्यां जितोऽस्मात् किमु गौरवं तत् ? ॥२॥–उप०
राज्येऽपि लोभं भरतेऽपि कोपं, त्यक्त्वा ततस्तातपथं प्रपद्ये ।
चेद् राज्यलक्ष्मीः परिणामरम्या, तत्याज तातोऽपि कुतस्तदेताम् ? ॥ ३ ॥–इन्द्रवज्रा

इद गदित्वा बाहुबलिः पूर्वोत्पाटितमुष्टिना शिरःकेशान् समूलमुन्मूलयति स्म । साधु ततस्तस्योपरि देवैः पुष्पवृष्टिश्चक्रे । कथं लघुभ्रातृन् नमामि ? । तत उत्पादितकेवलज्ञानस्तत्पादान्तं गमिष्यामि । तत्रैव प्रतिमां प्रपन्नः भरतस्तं प्रणम्य स्वस्थानं जगाम । स राजर्षिः प्रावृट्कालेऽपि निष्कम्प आसीत् । काव्यम् ( पद्मा० स० १७, श्लो० ३९३,३९४,३९२ )—

"तस्य वल्लिकुलकुञ्जनिकाये–ऽभूत् खगैः कृतकुलायनिकाये ।
वैरिणोर्विहगयोरविरोध–च्छायया दलततेरविरोधः ॥ १ ॥–स्वागता
तत्र वल्लिवलयेन सत्कुले, खेलनं खगकुलस्य रक्षया ।
बिभ्रतां फणभृतां फणमणेः, पल्लवद्विगुणता व्यतन्यत ॥ २ ॥–रथो०
पादिम्य परमर्षिबाहुबलिनः साधोः समाराधये
वल्मीहिद्वयसेवया ध्रुवमभूद् दर्भेऽङ्कुरा पूतता ।
किं ब्रूमो जगतोऽपि हि व्यवहृतो येनार्हतामप्यसौ
प्राक् पीठे स्नपनेऽप्यपावनकृतिभ्रष्टः प्रतिष्ठास्वभूत् ॥ ३ ॥"–शार्दूल०

इत्येवं वर्षान्ते श्रीऋषभजिनेन प्रेरिताभ्यां ब्राह्मी-सुन्दरीभ्यां तत्रागत्य वने कायोत्सर्गस्थो बाहुबलिरिति प्रोक्तः–गजारोहणं त्यज, तदा तव केवलज्ञानं भविष्यति ऋषभस्वामिना प्रोक्तमस्तीति स्वस्थानं गते स्तः । अथ बाहुबलिश्चिन्तयति स्म–ज्ञातं मया, मान एव गजः । अधुनाऽनेन सृतम् । सर्वान् लघूनपि प्रव्रज्यावृद्धान् वन्दे । एवं चिन्तयतोऽभिमानं मुक्त्वा यावत् पादमुदक्षिपत् तावत् त्रुटितघनघातिकर्मा केवलज्ञानं प्राप । अथ साधुवेषं देव्या दत्तं प्राप्य केवलज्ञानी इत्यत ऋषिमण्डलवृत्तौ प्रोक्तमस्तीति समवसरणे गत्वा प्रदक्षिणां दत्त्वा तीर्थाय नमः कृत्वा स मुनिः केवलिसभां भेजे । क्रमेण श्रीऋषभेण समं 'अष्टापद'गिरौ मुक्तिं जगाम । इति बाहुबलि सम्बन्धः । इति एकोनचत्वारिंशत्तमवृत्तार्थः ॥ ३९ ॥

---

१ पद्मा० ३६१तमे पद्ये तु 'मकार्यमित्थं क्रियते' इति पाठः । २ शिशिरशीतसमन्विते ।

द्रव्यलिङ्गं गृहाण । तदा केवलश्रीगृहे भरतः केशलोचं चकार । रजोहरणमुख्योपकरणं व्रतलक्षणं समीपदेवतादत्तं जग्राह ।

यतः—

"आत्तदीक्षो नमश्चक्रे, शक्रेण भरतस्ततः ।
सम्प्राप्तकेवलोऽपि स्या-न्न नमस्यो ह्यदीक्षितः ॥ १ ॥"—अनु०

दशसहस्रमितैर्भूपैस्तमनु दीक्षा गृहीता । इन्द्रेण भरतपुत्र आदित्ययशा राज्येऽलङ्कृतः । अथ भरतो यतिदीक्षाकालात् पूर्वलक्षं भुवि भव्यान् प्रबोधयन् परिवारयुतो विजहार । 'अष्टापदे' गत्वा चतुर्विधाहारत्यागेनैकमासान्ते भरतकेवली सिद्धिं ययौ, सिद्धानन्तचतुष्टय इति । कौमारे सप्ततिः पूर्वलक्षा अतिवाहिताः भरतेन । वृषभध्वजे राज्यं कुर्वति सति मण्डलिकत्वे भरतो वर्षाणामेकं सहस्रमत्यवाहयत् । छद्मस्थे प्रभुर्यथा वर्षैकसहस्रोनानि षट्पूर्वलक्षाणि चक्रित्वेऽयं व्यतिक्रामति स । जातकेवलः पूर्वलक्षमेकं विजह्रे—

इत्यायुश्चतुरशीति-पूर्वलक्षाः प्रपाल्य सः ।
सिद्धिं ययौ सुरास्तस्य, निर्वाणमहिमां व्यधुः ॥ १ ॥—अनु०

इति भरतचक्रिसम्बन्धः पूर्णः । इति द्वाचत्वारिंशत्तमवृत्तार्थः ॥ ४२ ॥

* * * *

अथ स्तवनसमाप्तिमङ्गलमाचरन् स्तुतिकारकाणां फलं दर्शयति—

सूत्रम्—

त्रैलोक्यरूपविषये सुपरीक्षणेऽत्र
बिम्बं त्वदीयमतुलं नयनामृताभम् ।
कर्मापहारि हृदयाम्बुरुहे निधाय
ये संस्तवं तव विभो! रचयन्ति भव्याः ॥ ४३ ॥

व्याख्या—त्रैलोक्य इति राका इति युग्मम् । हे विभो ! हे जिन ! ये पुरुषाः तव संस्तवनं रचयन्ति—कुर्वन्ति । किं कृत्वा ? त्वदीयं—तव इदं बिम्बं—प्रतिबिम्बं स्वरूपं वा हृदयाम्बुरुहे—हृत्कमले निधाय—धृत्वा । कथंभूतं त्वदीयं बिम्बम् ? अत्र त्रैलोक्यरूपविषये—त्रिभुवनस्वरूपवस्तुनि परीक्षणे—परीक्षाकरणे अतुलं—उपमानरहितम् । पुनः किंविशिष्टं बिम्बम् ? नयनामृताभं—लोचनेषु सुधातुल्यम् । पुनः किं० बिम्बम् ? कर्मापहारि—अष्टकर्मनिर्नाशकम् । (इति) त्रिचत्वारिंशत्तमवृत्तार्थः ॥ ४३ ॥

* * * *

मूलम्—

शुद्धात्मदर्शसदन भरतस्य जज्ञे
शुद्धात्मदर्शनमहो शुभभावयोगात् ।
इत्युक्तिलेशकथकस्य ममैधि नाथ !
स्वामी त्वमेव भुवनेऽत्र भवान्तरेऽपि ॥ ४२ ॥

व्याख्या—शुद्धेति । शुद्धात्मदर्शसदनं–निर्मलदर्पणगृहं कर्तृपदम् । अहो इति आश्चर्ये । भरतस्य चक्रिणः शुद्धात्मदर्शनं जज्ञे–जातम् । शुद्धस्य–निर्मलस्य आत्मनो दर्शनं–विलोकनं यस्मिन् तत्, विगलितघनघातित्वेन केवलज्ञानं जातमित्यर्थः । कस्मात् ? शुभभावयोगात् । अत्र सम्पूर्णाधिकारत्वात् स्तवनकारः स्वगतं कथयति । हे नाथ ! अत्र भुवने भवान्तरेऽपि मम त्वं स्वामी एधि–भूयाः । अस्तेः एधि रूपम् । कथंभूतस्य मे ? इति–अमुना प्रकारेण उक्तिलेश कथकस्य जैनधर्मवाक्यलेशप्रमापकस्येत्यर्थः । अत्र सम्प्रदायः—

श्रीऋषभप्रभुमुक्तिगमनानन्तरं श्रीभरतेन 'सिंहनिषद्या'ख्यं प्रासादं मणिमयमेकयोजनायामं त्रिगव्यूतसमुच्छ्रयं चतुर्द्वारं षोडशरत्ननिर्मितप्रतिद्वारतोरणं द्वारेषु मण्डपप्रेक्षामण्डपपीठिकादिर्वं वर्धकिरत्नेन निर्मापितम् । चतुर्विंशत्यर्हं मानवर्णादिसहितप्रतिमायुतमिति । पुनः चैत्याद् बहिरेकोनशतं भ्रातॄणां स्तूपान् कारयामास चक्री देवैः प्रतिबोधितः । यतः बालभारते (प० ११, स० १, श्लो० २५–२६)—

"सृतयो हि भवानुचारिका, भव जन्तौ भवनित्यबालकम् ।
गमयत्यसुमङ्गमङ्गतः, कुरुते तन्मयतां मुधा जनः ॥ १ ॥
भवनि स्वजनो न कस्य को, न भविष्यत्यथ वा भवभ्रमे ।
जगदेककुटुम्बिनो जनाः, क विषमे जनयन्तु सच्छुचम् ॥ २ ॥"

यदुक्तं रघुवंशे (स० ८, श्लो० ८७)—

"मरणं प्रकृतिः शरीरिणां, विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्, यदि जन्तुर्न तु लाभवानसौ ॥ १ ॥"

मुक्तिं गतः प्रभोः शोकं विहाय चक्री भोगान् बुभुजे । ततः स्वामिनिर्वाणवासरात् पञ्चपूर्व-लक्षेषु गतेषु रत्नदर्पणधाम्नि सितभक्ती तत्र सर्वाङ्गप्रतिबिम्बितः, केवलिनो ज्ञाने यथोर्ध्वपुरुषाकृतिलोकः । तदा मुद्रिका कराद् पतिता । ततो भूपः स्वरूप दर्पणभित्तौ निभालयन् पतित मुद्रां निःश्रीकां तामङ्गुलीं ददर्श । अहो सधवानां मध्ये विधवामिव गतशोभां विमृश्य सर्वान् छङ्कारान् मुमोच चक्री । ततो निःश्रीकं स्वशरीरं समीक्ष्य सर्वमसारतां भावयन् अपूर्वकरणक्रमात् प्राप्तक्षपकश्रेणिः केवलज्ञानं प्राप सः । आसनकम्पेन शीघ्रमिन्द्रस्तत्राययौ । तेनोक्तः–स्वामिन् !

---

१ मत्स्यनि । २ संसारवासिकाः ।

द्रव्यलिङ्गं गृहाण। तदा केवलश्रीगृहे भरतः केशलोचं चकार। रजोहरणमुख्योपकरणं व्रतलक्षणं समीपदेवतादत्तं जग्राह।

यतः—

"आत्तदीक्षो नमश्चक्रे, शक्रेण भरतस्ततः।
सम्प्राप्तकेवलोऽपि स्या–न्न नमस्यो ह्यदीक्षितः॥ १॥"–अनु०

दशसहस्रमितैर्भूपैस्तमनु दीक्षा गृहीता। इन्द्रेण भरतपुत्र आदित्ययशा राज्येऽलङ्कृतः। अथ भरतो यतिदीक्षाकालात् पूर्वलक्षं भुवि भव्यान् प्रबोधयन् परिवारयुतो विजहार। 'अष्टापदे' गत्वा चतुर्विधाहारत्यागेनैकमासान्ते भरतकेवली सिद्धिं ययौ, सिद्धानन्तचतुष्टय इति। कौमारे सप्ततिः पूर्वलक्षा अतिवाहिताः भरतेन। वृषभध्वजे राज्यं कुर्वति सति मण्डलिकत्वे भरतो वर्षाणामेकं सहस्रमत्यवाहयत्। ब्रह्मस्थे प्रभुर्यथा वर्षैकसहस्रोनानि षट्पूर्वलक्षाणि चक्रित्वेऽयं व्यतिक्रामति स। जातकेवलः पूर्वलक्षमेकं विजहे—

इत्यायुश्चतुरशीति–पूर्वलक्षाः प्रपाल्य सः।
सिद्धिं ययौ सुरास्तस्य, निर्वाणमहिमां व्यधुः॥ १॥–अनु०

इति भरतचक्रिसम्बन्धः पूर्णः। इति द्वाचत्वारिंशत्तमवृत्तार्थः॥ ४२॥

* * * *

अथ स्तवनसमाप्तिमङ्गलमाचरन् स्तुतिकारकाणां फलं दर्शयति—

सूत्रम्—

त्रैलोक्यरूपविषये सुपरीक्षणेऽत्र
बिम्बं त्वदीयमतुलं नयनामृताभम्।
कर्मापहारि हृदयाम्बुरुहे निधाय
ये संस्तवं तव विभो! रचयन्ति भव्याः॥ ४३॥

व्याख्या—त्रैलोक्य इति राका इति युग्मम्। हे विभो! हे जिन! ये पुरुषाः तव संस्तवनं रचयन्ति–कुर्वन्ति। किं कृत्वा? त्वदीयं–तव इदं बिम्बं–प्रतिबिम्बं स्वरूपं वा हृदयाम्बुरुहे–हृत्कमले निधाय–धृत्वा। कथंभूतं त्वदीयं बिम्बम्? अत्र त्रैलोक्यरूपविषये–त्रिभुवनस्वरूपवस्तुनि परीक्षणे–परीक्षाकरणे अतुलं–उपमानरहितम्। पुनः किंविशिष्टं बिम्बम्? नयनामृताभं–लोचनेषु सुधातुल्यम्। पुनः किं० बिम्बम्? कर्मापहारि–अष्टकर्मनिर्नाशकम्। (इति) त्रिचत्वारिंशत्तमवृत्तार्थः॥ ४३॥

* * * *

युग्मम्—

राकागणेश्वरनिभास्तेजःपुञ्जैरतीव पुण्याढ्या ।
तेऽनन्तसुखसमेता अचिरान्मोक्षं प्रपद्यन्ते ॥ ४४ ॥ युग्मम्
—आर्याच्छन्दः

ते भव्याः पुरुषाः अचिरात्—स्तोककालेन मोक्षं—मंगलस्थानं प्रपद्यन्ते—प्राप्नुवन्ति तदनुक्रमाभि कामाह—कथंभूताः ते ? राका—पूर्णचन्द्रोपलक्षिता तिथिः—पूर्णिमा, अत्र अधिकारात् चैत्रपूर्णिमा तया उपलक्षितो गणेश्वरः—चैत्रपूर्णिमायां लब्धकेवलज्ञानपुण्डरीकगणपतिः तेन निभाः—सदृशाः। कैः ? तेजःपुञ्जैः । अत्र श्लेषपदत्वात् राकागणेश्वरैः श्रीपूर्णिमागच्छपतिभिः श्रीसुधर्मस्वामि परम्परागतपट्टाम्बुजप्रभापतिभिर्निभा इति । पुनः कथंभूताः ? अतीव पुण्याढ्याः—पुण्यं सुकृतं तेन, प्राप्तदेवभवा इत्यर्थः । ततोऽनन्तरं पुनः कथं० ? अनन्तसुखसमेताः—अनन्तचतुष्टयसमेताः इति । अत्र ये संस्तवं रचयन्तीति पूर्वकाव्योक्तं तत्सामर्थ्यः—व्यवहारतो जिनशरीरादिवर्णनम् । यतः—

"सुवर्णवर्णं गजराजगामिनं, प्रलम्बबाहुं सुविशाललोचनम् ।
नरामरेन्द्रैः स्तुतपादपङ्कजं, नमामि भक्त्या वृषभं जिनोत्तमम् ॥ १ ॥"—वंशस्थम्

इति । अथ यत्र ज्ञानदर्शनगुणवर्णना क्रियते सा निश्चयनयस्तुतिः ।

"सर्वज्ञम् भूतसहस्रनेत्रमनेक—मेकाक्षरभावलिङ्गम् ।
अव्यक्तमव्याहतविश्वलोक—मनादिमध्यान्तमपुण्यपापम् ॥ १ ॥"—उप०

इत्यादि सिद्धसेनकृतद्वात्रिंशद्द्वात्रिंशिकायाम् । पुनर्यतः—

"ज्ञानविष्णुः सदा प्रोक्त—श्चारित्रब्रह्म उच्यते ।
सम्यक्त्वं तु शिवः प्रोक्तो—ऽप्यर्हन्मूर्तिस्त्रयात्मिका ॥ १ ॥—अनु०
क्षिति-जल-पवन-हुताशन—यजमाना ऽऽकाश-सोम-सूर्याख्याः ।
इत्येतेऽष्टौ भगवति, वीतरागे गुणा मताः ॥ २ ॥—आर्या
क्षितिरित्युच्यते क्षान्ति—र्जलं ज्योतिः प्रसन्नता ।
निःसङ्गता भवेद् वायु—र्हुताशो योग उच्यते ॥ ३ ॥—अनु०
यजमानो भवेदात्मा, तपोदानदयादिभिः ।
अलेपकत्वात् तदाकाश—सङ्काशः सोऽभिधीयते ॥ ४ ॥—अनु०
सौम्यमूर्तिरुचिश्चन्द्रो, वीतरागः समीक्ष्यते ।
ज्ञानप्रकाशकत्वेन, आदित्यः सोऽभिधीयते ॥ ५ ॥—अनु०
पुण्यपापविनिर्मुक्तो, रागद्वेषविवर्जितः ।
श्रीअर्हद्भ्यो नमस्कारः, कर्तव्यः शिवमिच्छता ॥ ६ ॥—अनु०

१ अव्यक्तमव्याहतविश्व०। २-३ 'या च', 'अलेपकत्वादाकाश' इति पाठान्तरे तत्त्वनिर्णयप्रासादे (पृ ०५)।

अकारेण भवेद् विष्णू, रेफे ब्रह्मा व्यवस्थितः ।
हकारेण हरः प्रोक्त-स्तस्यान्ते परमं पदम् ॥ ७ ॥–अनु०

अकार आदिधर्मस्य, आदिमोक्षप्रदेशकः ।
स्वरूपे परमं ज्ञानं, अकारस्तेन उच्यते ॥ ८ ॥–अनु०

रूप(पि?)द्रव्यस्वरूपं वा, दृष्ट्वा ज्ञानेन चक्षुषा ।
दृष्ट्वा लोकमलोकान्तं, रकारस्तेन उच्यते ॥ ९ ॥–अनु०

हता रागाश्च द्वेषाश्च, हता मोहपरिग्रहाः[1] ।
हतानि येन कर्माणि, हकारस्तेन उच्यते ॥ १० ॥–अनु०

सन्तोपेणाभिसम्पूर्णः, प्रातिहार्याष्टकेन च ।
ज्ञात्वा पुण्यं च पापं च, नकारस्तेन उच्यते ॥ ११ ॥–अनु०

भवबीजाङ्कुरजनना, रागाद्याः क्षयमुपागता यस्य ।
ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥ १२ ॥–आर्या

इत्यादि स्वरूपतो निश्चयतोऽर्हं इत्यक्षरमध्ये यं परमेष्ठिवाचकं सिद्धचक्रस्यादिबीजं जिनबिम्ब-स्तुतिद्वारेण अचिरान्मोक्षं प्रपद्यन्ते । इति फलद्वारसहितेन स्तवनस्यान्ते परममाङ्गल्यभूतं दर्शितम् । इति चतुश्चत्वारिंशत्तमवृत्तार्थः ॥ ४४ ॥

* * * *

अथ स्तवनकारः स्वप्रशस्तिमाह—

मूलम्—

भावप्रभाख्यवरसूरिगणाधिपेन
श्रीजैनधर्मवरसंस्तवनं सुरम्यम् ।
शिष्यस्य कौतुककृते रचितं सुबोधं
कल्याणमन्दिरसदन्तिमपादलग्नम् ॥ ४५ ॥

व्याख्या—भावेति । 'भावप्रभाख्यवरसूरिगणाधिपेन' श्रीभावप्रभनाम्ना वरसूरिणा–गच्छपतिना कर्तृपदेन श्रीजैनधर्मवरसंस्तवनं नाम्ना रचितं–कृतम् । कस्मै ? शिष्यस्य कौतुककृते–शिष्यजनस्य हर्षार्थम् । कृते इत्यव्ययं तादर्थ्ये । यतः—

"कौतुकं नर्मणीच्छाया–मुत्सवे कुतुके मुदि ।
पारम्पर्यगतख्यात–मङ्गलोद्वाहसूत्रयोः ।
गीतादौ भोगकाले च ॥"

इति हैमानेकार्थः (का० ३, ६३५–६३६) । कथंभूतं (श्री)जैन० ? सुरम्यम्–अतिमनोहरम् । पुनः कथं० जैन० ? सुबोधं–उत्तानार्थम् । पुनः कथं० जैन० ? 'कल्याणमन्दिरसदन्तिमपादलग्नं' कल्याणमन्दिरनाम्नः श्रीपार्श्वनाथस्य श्रीसिद्धसेनस्तुतिकारकृतस्य सदन्तिमपादं–शोभनप्रान्तचरणे लग्नं–संलग्नं–प्रह्वीभूतं, आश्रितमित्यर्थः ॥ ४५ ॥

---

१ 'परीषहा.' इति पाठान्तर तत्त्व० ( पृ० ७७ ) ।

इति श्री'पूर्णिमा'गच्छीयप्रधानशाखीयसुधर्मस्वामिपरम्परागतपट्टाम्बुजतपनवादिमदमर्दनकृतमिथ्यात्वतर्जनश्रीभट्टारकश्रीविद्याप्रभसूरिर्बभूव। तत्पट्टाम्बुजभास्करललितवचनविनोदितभविकनिकरभट्टारकश्रीश्रीललितप्रभसूरिर्जज्ञे। तत्पट्टचकोरशीतरश्मिप्रसीकृतदृष्ट(ष्ट)मतुविनयनयशिक्षितशिष्यसमुदयभट्टारकश्रीविनयप्रभसूरिः समजनि। तत्पट्टोदयाचलदिनकरसद्गुणनिकरसचारित्रधरसकलविद्यामन्दिरकीर्तिकमलामहिमाकलितमहीमण्डलभट्टारकासम्भ्रम० श्रीश्रीमहिमाप्रभसूरीश्वरा बभूवुः।

कवित्तम्—

खेचर १ खगमगधरन २ अवर सुरतुरग ३ रु सुरगम ४ सेस ५ महेश वृषल ६ गिरौ ७ वहुगेन ८ वृषभैभव ९ इन पर छवि अति धरत करत उज्जल इह आनद पूज्य श्रीमहिमाप्रभ सूरिरावरो सुजस प्रमानइ कवि कहइ कल्याण तुव अरि अजस उन पट १ उन रिपु २ पुछ उनहि ३ मद उनहि ४ नयन ५ नासा ६ उनहि अलक ७ रु अंबर ८ गलगुनहि ॥ ९ ॥

तत्पट्टे द्विसप्तविसप्तैकमित (१७७२) वर्षे माघशुक्लपक्षसुदिने श्री'श्रीमालि'ज्ञातीयवृद्धशाखालङ्कारहारश्रीवीराद्वयवंशावतंसदोसीश्रीजयसीसुतदोस्युसम्भीतेजसीनाम्ना श्रेष्ठिना सकलमहाजनचमत्कारहारेण सुकलत्रपुत्रपरीवारसहितेन उदारचित्तेन सहस्रशो मिलितमहाजनैश्चतुर्विधसङ्घैः सह सुवासनाभिगीयमानेषु धवलमङ्गलेषु, गा धर्वैर्घोषमानेषु वादित्रेषु, मङ्गमोदकादिभिः पत्र्यमानेषु जिनगुणेषु, दीयमानेषु दानेषु, प्रभावनापूजापुरस्सरबहुद्रव्यव्ययेन कृतपरमोत्सवश्रीभट्टारकश्रीश्रीभावप्रभसूरिः सपरीवारो विजयते। तेन सूरीश्वरेण श्री'ऊकेश'वंशज्ञातीय'वाघी'गोत्रसाहाश्रीमाणकणभार्याबाईअमदेवीकुक्षिसम्भवेन श्रीजैनधर्मवरसंस्तवनस्तोपज्ञवृत्तिर्विरचिता शिष्याणामनुग्रहहेतवे चन्द्रनवसप्तैकमित (१७९१) वर्षमार्गशीर्षशुक्लपक्षाष्टम्यां तिथौ सम्पूर्णा जाता। पण्डितजनैर्विशोधनीया मयि कृपां कृत्वा ॥

इति श्रीकल्याणमन्दिरान्त्यपादसमस्यामयं श्रीजैनधर्मवरसंस्तवनं श्रीभट्टारकश्रीश्रीभावप्रभसूरिणा विरचितं सवृत्तो वृत्तिम सम्पूर्णम् ॥

श्रीमदखिलभूपालमालमुम्बितपादपीठविशिष्टनरपालश्रीविक्रमादित्यभूपालसमयातीतभूमिनन्दसप्तप्रमिते (१७९१) वर्षे वैशाखमासे कृष्णपक्षे श्रीम'दणहिल्लपुर'पत्तने 'ढंढेर'पाटके श्री'पूर्णिमा'गच्छे प्रधानशाखायां भट्टारकश्रीभावप्रभसूरिचरणसरोजचञ्चरीकायमानशिष्यभाणरत्नेन पुस्तकमिदं लिपीकृतम्।

॥ श्री शुभं भवतु ॥ श्रीकल्याणमस्तु ॥ श्रीः ॥

---

१ तात्पर्यम्—

खचराः आकाशचारी (आकाशगामी) सुधाः सुरतुरगः (उच्चैःश्रवाः) सुरगजः (ऐरावतः) शेष(नाग)ः, महेशवृषभः, गीः (सरस्वती) बहुगुणा वृषभध्वजः (महादेवः) एतेषामुपरि छविं अत्यन्तं धारयन्ति कुर्वन्ति उज्ज्वल इति आशीर्वादं पूज्यश्रीमहिमाप्रभसूरिराजस्तव सुयशः प्रमिमीते इति कविः कल्याणः कथयति तव अरेः अपयशः अस्य पटः (गजचर्म) अस्य रिपुः (राहुः) पुच्छकमस्य (वर्षोपलाः) मदोऽस्य (ऐरावतस्य) नयनं (भैरवस्य), नासिका (महेशवृषभस्य), अस्या अलकानि (सरस्वत्या वेणी) सुधा अम्बरं गलकृष्ण (इव)।

# अथास्य काव्यक्रमेण बीजकं लिख्यते



॥ इति श्रीजैनधर्मवरस्तवस्य वृत्तौ लेशतो बीजकं समाप्तम् ॥

इति श्री'पूर्णिमा'गच्छीयप्रधानशाखीयसुधर्मस्वामिपरम्परागतपट्टाम्बुजतपनवादिमदमर्दनकृतमिथ्यात्वतर्जनश्रीभट्टारकश्रीविद्याप्रभसूरिर्बभूव। तत्पट्टाम्बुजभास्करललितवचनविबोधितभविकनिकरभट्टारकश्रीश्रीललितप्रभसूरिर्जज्ञे। तत्पट्टचकोरशीतरश्मिभक्तीकृतदृष्ट(द)मनुविनयनयविचित्रशिष्यसमुदयभट्टारकश्रीविनयप्रभसूरिः समजनि। तत्पट्टोदयाचलदिनकरसद्गुणनिकरधारिधरसकलविद्यामन्दिरकीर्तिकमलामहिमाकलितमहीमण्डलभट्टारकवल्लभ०श्रीश्रीमहिमाप्रभसूरीश्वरा बभूवुः।

कवित्तम्—

शंकर १ खगमग्गधरन २ अवर सुरतुरग ३ रु सुरगज ४ सेस ५ महेस वयल ६ गिरी ७ उडुगेन ८ वृषभैध्वज ९ इन पर छवि अति धरत करत उजल इह आनह पूज्य श्रीमहिमाप्रभ सूरिराधरो सुजस प्रमानह कवि कहइ कल्याण तुय अरि अजस उन पट १ उन रिपु २ मुख उनहि ३ मद उनहि ४ नयन ५ नासा ६ उनहि अलक ७ रु अंबर ८ गलगुनहि ॥ १ ॥

तत्पट्टे द्विसप्ततिसप्तैकमित( १७७२ )वर्षे माघशुक्लपक्षसुदिने श्री'श्रीमालि'ज्ञातीयवृद्धशाखाऽलङ्कारहारश्रीवीरावंशावतंसवोसीश्रीजयतसीसुतदोस्यसुतस्य श्रीतेजसीनाम्ना श्रेष्ठिना सकलमहाजनप्रकारहारेण सुकलत्रपुत्रपरीवारसहितेन उदारचित्तेन सहस्रशो मिलितमहाजनैश्चतुर्विधसङ्घैः सह सुवासनाभिर्गीयमानेषु धवलमङ्गलेषु, गान्धर्वैर्वाद्यमानेषु वादित्रेषु, भट्टभोजकादिभिः पठ्यमानेषु जिनगुणेषु, दीयमानेषु दानेषु, प्रभावनापूजापुरस्सरबहुद्रव्यव्ययेन कृतपरमोत्सवश्रीभट्टारकश्रीश्रीभावप्रभसूरिः सपरीवारो विजयते। तेन सूरीश्वरेण श्री'उकेश'वंशज्ञातीय'वाघी'गोत्रसाहाश्रीमाणकचन्दभार्यावाहिमदेवीकुक्षिसम्भवेन श्रीजैनधर्मवरसंस्तवनस्तोपज्ञवृत्तिर्विरचिता शिष्याणामनुग्रहहेतवे चन्द्रनवसप्तैकमित ( १७९१ ) वर्षमार्गशीर्षशुक्लपक्षाष्टम्यां तिथौ सम्पूर्णा जाता। पण्डितजनैर्विशोधनीया मयि कृपां कृत्वा ॥

इति श्रीकल्याणमन्दिरान्त्यपादसमस्यामयं श्रीजैनधर्मवरसंस्तवनं श्रीभट्टारकश्रीश्रीभावप्रभसूरिणा विरचितं सवृत्तो वृत्तिश्च सम्पूर्णम् ॥

श्रीमदखिलभूपालमौलिचुम्बितपादपीठविक्षिप्तनरपालश्रीविक्रमादित्यभूपालसमयातीतभूमिनन्दसप्तचन्द्रप्रमिते ( १७९१ ) वर्षे वैशाखमासे कृष्णपक्षे श्रीम'दणहिल्लपुर'पत्तने 'ढंढेर'पाटके श्री'पूर्णिमा'गच्छे प्रधानशाखायां भट्टारकश्रीभावप्रभसूरिचरणसरोजचञ्चरीकायमानशिष्यभाणरत्नेन पुस्तकमिदं लिपीकृतम्।

॥ श्री शुभं भवतु ॥ श्रीकल्याणमस्तु ॥ श्रीः ॥

---

१ तात्पर्यम्—

शङ्करः खगापगावरी ( आकाशगङ्गा ) तथा सुरतुरगः ( उच्चैःश्रवाः ) सुरगजः ( ऐरावणः ) शेष( नाग )ः, महेशवृषभः धीः ( सरस्वती ) उडुगणः वृषभध्वजः ( महादेवः ) एतेषामुपरि छविं यथार्थं धारयन्ति कुर्वन्ति उज्ज्वलं इति आशीर्वचं पूज्यमहिमाप्रभसूरिराजवरस्य सुयशः प्रमिमीत इति कविः कथयति कल्याणं तव अरेः अपयशः यथा पटः ( वस्त्रम् ) यथा रिपुः ( शत्रुः ) मुखकमलं ( उच्चैःश्रवसः ) मदोन्मत्त ( ऐरावणस्य ) नयनं ( शेषस्य ), नासिका ( महेशवृषभस्य ), यथा अलकानि ( सरस्वत्याः वेणी ) तथा अम्बरं कालकूटम् ( इव )।

श्रीभावप्रभसूरिसूत्रितः

# ॥ गुंहलिकापरपर्यायगोधूलिकार्थः ॥

श्रीमहिमाप्रभसूरिसद्गुरुभ्यो नमः ॥ ऐं नमः ॥

नत्वा पार्श्वजिनेन्द्राय महिमाप्रभसद्गुरवे ।
ब्रवीमि गुंहलीकार्थं सूरिर्भावप्रभाह्वयः ॥ १ ॥

श्रीमति जिनशासने देवगुरुप्रमुखपुरतो भक्तिहेतोर्माङ्गल्यहेतोः सिद्धान्तविनयहेतोः लोकेऽपि च सुखभक्षिकाभाजनसमीपभूमण्डले तदक्षयहेतोः स्वस्तिकरचना क्रियते । अत्र केचित् तु गुरुकुलभ्रष्टा ज्ञानविकलास्तां नाङ्गीकुर्वन्ति तेऽनन्तसंसारिणो ज्ञेयाः । यतः साधुस्तान्यर्चनादीनि मनसाऽपि न प्रार्थयेत् । परं श्रावकैस्तु गुरुभक्त्या तानि कर्तव्यान्येव । अन्यथा तत्रैव पञ्चत्रिंशोत्तराध्ययने प्रोक्तानां क्रियमाणानां च वन्दनादीनामप्यकर्तव्यापत्तेः । यतस्तत्र (अष्टादशी) गाथा—

"अच्चणं रयणं चेव, वंदणं पूअणं तहा ।
इड्ढीसक्कारसम्माणं, मणसा वि न पत्थए ॥ १ ॥"[1]

अत्र रयणं रञ्जनं इत्यस्यार्थो 'गुंहली' इति कथित इति । स्वस्तिकरचनाया नाम गोधूलिका इत्यादि संस्कृते । प्राकृतभाषायां तु गुंहुलिका गुंहुली इत्यादि नामान्तराणि कथ्यन्ते । तेषां काव्यव्युत्पत्तिरत्रोच्यते । प्रथमत उपयोगार्थं कोशा लिख्यते—

"गीर्वाणी-बाण-भू-रश्मि-वज्र-स्वर्गोऽक्षि-वारिषु ।
दिशि धेनौ श्रुतेश्वर्यां, गणेशे चापि गौः स्मृतः ॥ १ ॥" (सुधा०, श्लो० १३)[2]

तथा च—"हः शूलिनि करे नीरे, क्रोधे गर्भप्रभाषणे । निवासे च" इति (सुधा०, श्लो० ४५)[3]

इति एकाक्षरनिघण्टौ ॥ ७ ॥

"गौर्वज्रं गौः प्रभा भूमि-र्वाणी तोयं त्रिविष्टपम् ।
धेनुर्वस्तो वृषो दिग् गौ-र्नेत्रं लज्जा गुरू रमा ॥ १ ॥
इन्द्रियं श्रीरुमा च" इति
"हो हर्षो हिरण्याक्षोऽथ तस्करः ॥"

इति सौभरिनामकोषे ॥ ७ ॥

---

१ छाया—

अर्चनं रञ्जनं चैव वन्दनं पूजन तथा ।
ऋद्धिसत्कारसन्मान मनसाऽपि न प्रार्थयेत् ॥

२-३ श्रीसुधाकलशप्रणीतायां एकाक्षरनाममालिकायामिति । जैन० स्तो० १७

[1]अम्बरमम्बुनि पत्रमरातिः, पीतमहीनगणस्य ददाह ।
यस्य वधूस्तनयं गृहमब्जा, पातु स वो हरलोचनवह्निः ॥ १ ॥

अस्यार्थः—स देवः कृष्णः वः—युष्मान् पातु—रक्षतु । स कः ? यस्य—देवस्य अम्बरं—वस्त्रं पीतं वर्तते । यस्य गृहं अम्बुनि—जले समुद्रे वर्तते । पुनः यस्य अहीनगणस्य—सर्पराजसमूहस्य अराति-शत्रुः गरुडः पत्रं—वाहनं वर्तते । यस्य वधूः अब्जा—समुद्रजा—कमला वर्तते । पुनः हरलोचनवह्निः यस्य तनयं—पुत्रं कन्दर्पं ददाह । इति सम्पूर्णोऽर्थः । अस्मिन् काव्ये व्यस्तालङ्कारोऽस्ति ॥

इति सर्कं सम्पूर्णं शिष्याणां पठनाय श्रीकल्याणमस्तु ॥



1 सुभाषितरत्नभाण्डागारे (पृ १९० श्लो ५८) प्रेक्षमाणं इदं काव्यं प्रक्षिप्तमिति प्रतिभाति परन्तु प्रतियुगके विषमत्वात् अत्रोपन्यस्तम् ।

कानि–सुखानि यस्यां प्रणतौ सा गोधूलिका तीर्थङ्करादिसुखकृतप्रणतिरस्तु । "कं सुखे शीर्षे जले च" (          ) प्रसिद्धम् ॥ ३ ॥

अथ मरुदेवागतमङ्गलमाह—

गौः–वृषभः तेन वृषभलाञ्छनेन उपलक्षितः अः–अर्हन् तस्य धूलिः अर्थात् शरीरलग्नधूलिः तस्याः सकाशात् अर्थात् आलिङ्गनात् कानि–सुखानि यस्याः सा गोधूलिका भगवज्जननी मरुदेवा सुखायास्तु । यतः (पद्मानन्दमहाकाव्ये स० ८, श्लो० ५२)—

"धूलिधूसरममुं मरुदेवा–ऽऽश्लिष्य मीलिनयना स्वयमासीत् ।
अन्तरे वपुरिदं सुखपूरैः, पूरितं कियदितीव दिदृक्षुः ॥ ४ ॥" (स्वागता)

अथ गुरुगतमङ्गलमाह—

गौः–गुरुः तस्य धूलिः अर्थात् चरणकमलरजः तस्याः कानि–सुखानि यस्यां प्रणतौ सा गोधूलिका । गुरुचरणकमलरजःस्पर्शसुखप्रणतिः सुखायास्तु ॥ ५ ॥

अथ सरस्वतीगतमङ्गलमाह—

गोभिः–जलैः धूल्या च उपलक्षितः कः–आत्मा रूपं यस्याः सा गोधूलिका–सरस्वती ज्ञानवृद्धयेऽस्तु । "को ब्रह्मण्यात्मनि रवौ" इति कोषे (हैमेऽनेकार्थसङ्ग्रहे का० १, श्लो० ५) । अत्र श्लिष्टार्थत्वात् गौः–श्रुतदेवीबीजं गकारं विनाऽपि अरपि बीजम् । यतः—

"अस्त्वौर्वोऽपि सरस्वती मनुगतो जाड्याम्बुविच्छित्तये
गोशब्दो गिरि वर्तते स नियतं योगं विना सिद्धिदः ॥"

इति लघुस्तवे । सरस्वत्या हि जलानि धूल्याविलानि भवन्तीति युक्तोऽयमर्थः ॥ ६ ॥ इति मङ्गलाचरणार्थः ॥

अथ प्रस्तुतमाह—

गोः–पृथिव्याः प्रधाना धूली–कुङ्कुमादिः यस्यां रचनायां सा गोधूली, मध्यपदलोपत्वात् गोधूली एव गोधूलिका चेति । धूलिशब्दो ह्रस्वो दीर्घश्च ईव्विधानविकल्पात् गोधूली इत्यत्र सम्बन्धमात्रत्वात् केसरखटिकाद्युचितद्रव्यपरिग्रहः ॥ ७ ॥

(गौः–धूली) अथवा । गौः–अग्निः तद्वत् तद्वर्णसमाना धूली–कुङ्कुमादिः यस्यां रचनायां सा । शेषं पूर्ववत् ॥ ८ ॥

गोभिः–जलैः द्रवीकृता प्रधानधूली–कुङ्कुमादिरसो यस्यां रचनायां सा । शेषं पूर्ववत् ॥ ९ ॥
अथवा । गवि–पृथिव्यां प्रधानधूलिः–कुङ्कुमादिः यस्यां रचनायां सा । शेषं पूर्ववत् ॥ १० ॥

---

१ "कं सुखे वारि शीर्षे च" इति पाठो विश्वलोचने (श्लो० ३) ।

२ अथ लघुस्तवनाम्न. सरस्वतीस्तोत्रस्य पञ्चमपद्यस्य उत्तरार्धं । पूर्वार्धस्तु यथा—

"यत् सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधै–
स्तार्तीय तदहं नमामि मनसा त्वद्बीजमिन्दुप्रभम्"

"( शून्ये विन्दौ सुखे स्वस्तु, धर्मे ) गौरदके दृशि ॥
स्वर्गे दिशि पशौ रश्मौ, वज्रे भूमाविषौ गिरि ॥ १ ॥"

इति हैमानेकार्थसंग्रहे (का० १, श्लो० ६)।

'ग्रुगमिभ्यां डोः' (सिद्ध० उणादि० ८६७) इति सूत्रेण गमेर्डो प्रत्यये डित्वाट्टिलोपे गच्छतीति गौः दृग्रस्वर्गेषु स्त्रीपुंसयोः । अन्ये तु आचार्याः "वागादौ स्त्रियां स्वर्गादौ पुंसि पशौ द्वयोः बलाक्ष्णोः क्लीबे" इत्याहुः । उदके यथा—"गावो वहन्ति विमलाः शरदि स्रवन्त्याम्" इत्यादि । इति हैमानेकार्थस्य केरवाकरकौमुद्यां टीकायाम् ॥ ७ ॥

"स्वर्गे रश्मौ च वज्रे च, बलीवर्दे च गौ पुमान् ।
स्त्री-बाण-रोहिणी-नेत्र-दिग्-वाग्-भूष्वप्सु भूम्नि च ॥ १ ॥"

"हेमचन्द्रयोऽमुं सर्वेष्वर्थेषु पुंस्त्रीलिङ्गमाहु" इति धातुरत्नाकरे श्रीसाधुसुन्दरोपाध्यायाः ॥७॥

"गौर्वज्रे सुरूपे धेनौ वाचि दिग्-बाणयोर्गिरि ॥
भू-मयूख-सुख-स्वर्ग-सत्य-वहृष उक्षि-मातृषु ॥ १ ॥"

'ला आदाने' "ल इन्द्रे चलने सूते लिः लावे ली श्लेषकर्मेव ॥" इति महीपकोषे ॥ ७ ॥

"बाणे चापि पशौ भूमौ, दिशि रश्मिजले दृशि ।
स्वर्गे मातरि वज्रेऽपो, सुखे सत्ये च गोध्वनि ॥ १ ॥"

इति अनेकार्थध्वनिमञ्जर्याम् ॥ ७ ॥

"ल इन्द्रे चलनेऽपि च" इति अमरानेकाक्षर्यां ( काव्यकल्पलतायां प्र० ३, स्त० ५, पृ० १११ ) ॥ ७ ॥

अथ मङ्गलाचरणविचारणायां प्रथमतः श्रीनाभिराजाङ्गजश्रीऋषभदेवगतमङ्गलमाह—गौः—वृषभः 'सर्वं वाक्यं सावधारणं भवति' इति न्यायात् तेन वृषभलाञ्छनेन उपलक्षितः अः—अर्हन् । 'असिआउसानमः' इति वचनात् 'विशेषणमात्रत्वात् विशेष्यः प्रतीयते' तेन श्रीनाभेय जिनः तस्य धूलिका ( धूलौ भवा धूलिका )—धूलिक्रीडा गोधूलिका सुखाय भवत्वित्यन्वयः । अत्र 'एदोतोऽतः' (सा० सू० ५१) इति सूत्रेणाकारलोपः । एवमग्रेऽपि यथास्थान ज्ञातव्यम् ॥ १ ॥

अथवा गौः—स्वर्गः आधारे आधेयोपचारात् तन्निवासिनो देवाः तैः सह अः तस्य धूलिका—धूलिक्रीडा गोधूलिका । शेषं पूर्ववत् ॥ २ ॥

अथ सकलतीर्थङ्करादिगतमङ्गलमाह—

गोभिः—ज्ञानैः अन्योन्याविनाभावात् ज्ञान-दर्शन-चारित्रैर्निजोचितगुणस्थानान्वितैः कृत्वा उपलक्षिताः वा, न विद्यन्ते धूलयः—अपराधाः येषां ते तीर्थङ्कराः गणधराः साधवश्च तेभ्यः

अथवा । गौः—लज्जा चारित्रधर्मरक्षणलज्जा तया न धू०—पा० यस्यां सा गोऽधूलिका ॥२५॥
अथवा । गावः—वाणाः उपयोगलक्षणाः तैर्न धू०—पा० य० सा गोऽधूलिका ॥ २६ ॥
अथवा । गावः—मातरः अष्टप्रवचनमातरः ताभिः न धू०—पा० य० सा गोऽधूलिका ॥२७॥
अथवा । गौः—वाणी जिनवाणी तया न धू०—पा० य० सा गोऽधूलिका ॥ २८ ॥

इति अध्यात्मदशायां गोधूलिकाशब्दार्थः ॥

अथ लोकेऽपि गोधूलिकाशब्दोऽस्ति ।

यतः गौः—पृथिवी तज्जातित्वात् मृत्तिका खटिका वर्णिका उपलक्षणत्वात् गोमयमपि, एतेषां लेपनेन न धूलिः—रजो यस्यां भूमौ सा गोधूलिका मृत्तिका गोमयादिभिरञ्चितभूमिमण्डलानि गुंहलीचतुष्क इत्यादीनि दीयन्ते क्रियन्ते च लोके प्रसिद्धम् । उक्तं च अर्धशीर्षकपीडानिवारणमन्त्रकथायां 'ॐ नमो अउट्ठावली' इत्यादिपदपङ्क्तौ 'गुंहुली करइ मांडलांयइ' इत्यादि । संस्कृते गोधूलिकाशब्दः गोधूलिका गोधूलिः गोधूली प्राकृते तु गुंहुली गुंहुलिया गुंहुलिका ह्रस्वत्वं मकारागमश्च भवत्यलाक्षणिक इति ॥ २९ ॥

अथ द्वितीयं पदं गोहली गुंहली इति कोऽर्थः ? उच्यते—गवि—पृथिव्यां हलवत् हलकर्षणोपचारो यस्याः स्वस्तिकरचनाया साः गोहलिका ॥ ३० ॥

अथवा । हलिः इति महद्धलं धातुरत्नाकरोक्तं तदुपचारो यस्यां सा गोहलिः ॥ ३१ ॥

अथवा । गुः—कान्तिः हः—हर्षः अनयोः ली—श्लेषो यस्यां सा गुहली ॥ ३२ ॥

अथवा । गुः—कान्तिः हः—हर्षः अनयोः ला—आदानं यस्यां सा गुहलिका । अत्र 'गुः' इति पदेन सधवता सुनेपथ्या सुरूपा चोक्ता । 'हर्ष'पदेन चित्तप्रसन्नता चोक्ता ॥ ३३ ॥

अथवा । गौः—ज्ञानं वाणी प्रभा कान्तिश्च एतेषां हः—निवासः आधारः आचार्यः "ओयंसि तेयंसि वच्चंसि" (               ) इत्यादिवचनात् तेषां अग्रे ला—इन्द्राण्य इव लाः—सधवाः श्राविकाः ताभ्यः सकाशात् भवा गोहलिका ॥ ३४ ॥

अथवा । गौः—ज्ञानं तेन न हः—क्रोधो यस्याः सा एवंविधा सधवा ला—इन्द्राणीव तस्याः भवा गोऽहलिका ॥ ३५ ॥

अथवा । गौः—श्रीः रमा वा तया उपलक्षितो हः—हर्षो यासां ताः सधवाः लाः—इन्द्राण्य इव ताभ्यो भवा गोहलिका ॥ ३६ ॥

अथवा । गवां—श्रीणां शोभानां प्रभाणां च हः—निवासः आधारः अर्थात् सकलशोभामिलितदीपावलिकलितं दीपावलिकापर्व तस्मिन् लसतीति ला गोहला । गोहला एव गोहलिका ॥३७॥

अथवा । गवा—श्रिया केवलज्ञानलक्ष्म्या उपलक्षितः अः—अर्हन् तस्य हः—निवासः चैत्यः तत्र लसति—द्योतते या सा ला । क्वचिड्डप्रत्यये सिद्धम् । गोहलिका स्वार्थे कः आप्म काप्यत (?) इति सिद्धम् ॥ ३८ ॥

अथवा । गौः—श्रीः प्रभावः ताभ्यां उपलक्षितो हः—निवासः जिनप्रासादः तत्र लसतीति लः—जिनः तस्य इयं मूर्तिः ली तस्याः अग्रे भवा गोहलिका ॥ ३९ ॥

अम्बरमम्बुनि पत्रमरातिः, पीतमहीनगणस्य ददाह ।
यस्य वधूस्तनयं गृहमब्जा, पातु स वो हरलोचनवह्निः ॥ १ ॥

अस्यार्थः—स देवः कृष्णः वः—युष्मान् पातु—रक्षतु । स कः ? यस्य—देवस्य अम्बरे—वस्त्रे पीतं वर्तते । यस्य गृहं अम्बुनि—जले समुद्रे वर्तते । पुनः यस्य अहीनगणस्य—सर्पराजसमूहस्य अरातिः—शत्रुः गरुडः पत्रं—वाहनं वर्तते । यस्य वधूः अब्जा—समुद्रजा—कमला वर्तते । पुनः हरलोचनवह्निः यस्य तनयं—पुत्रं कन्दर्पं ददाह । इति सम्पूर्णोऽर्थः । अस्मिन् काव्ये व्यस्तालङ्कारोऽस्ति ॥

इति षट्कं सम्पूर्णं शिष्याणां पठनाय श्रीकल्याणमस्तु ॥



१ सुभाषितरत्नभाण्डागारे (पृ १९० श्लो ५८) मेरुस्मार्थं इदं काव्यं प्रक्षिप्तमिति प्रतिभाति प्राप्त प्रतिपुस्तके विषमाक्षरात् प्रक्षेपितत्वात् ।

श्रीभावप्रभसूरिसूत्रितः

# ॥ गुंहलिकापरपर्यायगोधूलिकार्थः ॥

श्रीमहिमाप्रभसूरिसद्गुरुभ्यो नमः ॥ ऐं नमः ॥

नत्वा पार्श्वजिनेन्द्राय महिमाप्रभसद्मने ।
ब्रवीमि गुंहलीकार्थं सूरिर्भावप्रभाह्वयः ॥ १ ॥

श्रीमति जिनशासने देवगुरुप्रमुखपुरतो भक्तिहेतोर्माङ्गल्यहेतोः सिद्धान्तविनयहेतोः लोकेऽपि च सुखभक्षिकाभाजनसमीपभूमण्डले तदक्षयहेतोः स्वस्तिकरचना क्रियते । अत्र केचित् तु गुरुकुलभ्रष्टा ज्ञानविकलास्तां नाङ्गीकुर्वन्ति तेऽनन्तसंसारिणो ज्ञेयाः । यतः साधुस्तान्यर्चनादीनि मनसाऽपि न प्रार्थयेत् । परं श्रावकैस्तु गुरुभक्त्या तानि कर्तव्यान्येव । अन्यथा तत्रैव पञ्चत्रिंशोत्तराध्ययने प्रोक्तानां क्रियमाणानां च वन्दनादीनामप्यकर्तव्यापत्तेः । यतस्तत्र (अष्टादशी) गाथा—

"अच्चणं रयणं चेव, वंदणं पूअणं तहा ।
इड्ढीसक्कारसम्माणं, मणसा वि न पत्थए ॥ १ ॥"[1]

अत्र रयणं रञ्जनं इत्यस्यार्थो 'गुंहली' इति कथित इति । स्वस्तिकरचनाया नाम गोधूलिका इत्यादि संस्कृते । प्राकृतभाषायां तु गुंहुलिका गुंहुली इत्यादि नामान्तराणि कथ्यन्ते । तेषां काव्यव्युत्पत्तिरत्रोच्यते । प्रथमत उपयोगार्थं कोशा लिख्यते—

"गीर्वाणी-बाण-भू-रश्मि-वज्र-स्वर्गाऽक्षि-वारिषु ।
दिशि धेनौ श्रुतेश्वर्यो, गणेशे चापि गौः स्मृतः ॥ १ ॥" (सुधा०, श्लो० १३)[2]

तथा च-"हः शूलिनि करे नीरे, क्रोधे गर्भप्रभाषणे । निवासे च" इति (सुधा०, श्लो० ४५)[3] इति एकाक्षरनिघण्टौ ॥ ७ ॥

"गौर्वज्रं गौः प्रभा भूमि-र्वाणी तोयं त्रिविष्टपम् ।
धेनुर्वस्तो वृषो दिग् गौ-र्नेत्रं लज्जा गुरू रमा ॥ १ ॥
इन्द्रियं श्रीरुमा च" इति
"ह्रो हर्षो हिरण्याक्षोऽथ तस्करः ॥"

इति सौभरिनामकोषे ॥ ७ ॥

---

१ छाया—

अर्चनं रञ्जनं चैव वन्दनं पूजनं तथा ।
ऋद्धिसत्कारसन्मानं मनसाऽपि न प्रार्थयेत् ॥

२-३ श्रीसुधाकलशप्रणीतायां एकाक्षरनाममालिकायामिति ।
जैन० स्तो० १७

"( शून्ये बिन्दौ सुखे खस्तु, सूर्ये ) गौरुक्षके दृशि ॥
स्वर्गे दिशि पशौ रश्मौ, वज्रे भूमाविषौ गिरि ॥ १ ॥"

इति हैमानेकार्थसूत्रे (का० १, श्लो० ६)।

'घुगमिभ्यां डोः' (सिद्ध० उणादि० ८६७) इति सूत्रेण गमेर्डौ प्रत्यये डित्वाट्टिलोपे गच्छतीति गौः दृक्स्वर्गेषु स्त्रीपुंसयो'। अन्ये तु आचार्याः "वागादौ स्त्रियां स्वर्गादौ पुंसि पशौ द्वयो' जलाक्ष्णोः क्लीबे" इत्याहुः। तत्रके यथा—"गावो वहन्ति विमलाः शरदि समन्ताम्" इत्यादि। इति हैमानेकार्थस्य कैरवाकरकौमुद्यां टीकायाम् ॥ ७ ॥

"स्वर्गे रश्मौ च वज्रे च, बलीवर्दे च गौः पुमान्।
स्त्री-बाण-रोहिणी-नेत्र-दिग्-वाग्-भूप्स्वप्सु भूम्नि च ॥ १ ॥"

"हेमचन्द्रयोऽम्बुं सर्वेष्वर्थेषु पुंस्त्रीलिङ्गमाहु" इति धातुरत्नाकरे श्रीसाधुसुन्दरोपाध्यायाः ॥७॥

"गौर्वज्रे सुरपे धेनौ वाचि दिग्-बाणयोर्गिरि ॥
भू-मयूख-सुख-स्वर्ग-सत्य-वहृष उक्षि मातृषु ॥ १ ॥"

'ला आदाने' "ल इन्द्रे चलने शृते लिः लावे ली श्लेषकर्मणि ॥" इति महीपकोषे ॥ ७ ॥

"बाणे चापि पशौ भूमौ, दिशि रश्मिजले दृशि।
स्वर्गे मातरि वज्रेऽथो, सुखे सत्ये च गोध्वनि ॥ १ ॥"

इति अनेकार्थध्वनिमञ्जर्याम् ॥ ७ ॥

"ल इन्द्रे चलनेऽपि च" इति अमरानेकाक्षर्या ( काव्यकल्पलतायां प्र० ३, स्त० ५, पृ० १११ ) ॥ ७ ॥

अथ मङ्गलाचरणविचारणायां प्रथमतः श्रीनाभिराजाङ्गजश्रीऋषभदेवगतमङ्गलमाह— गौः—वृषभः 'सर्वं वाक्यं सावधारणं भवति' इति न्यायात् तेन वृषभलाञ्छनेन उपलक्षितः अः—अर्हन्। 'असिआउसानम' इति वचनात् 'विशेषणसङ्गत्या विशेष्यः प्रतीयते' तेन श्रीनाभेय जिनः तस्य धूलिका ( धूलौ भवा धूलिका )—धूलिक्रीडा गोधूलिका सुखाय भवत्विस्यन्वयः। अत्र 'एदोतोऽतः' (सा० सू० ५१) इति सूत्रेणाकारलोप'। एवमग्रेऽपि यथास्थानं ज्ञातव्यम् ॥ १ ॥

अथवा गौः—स्वर्ग' आधारे आधेयोपचारात् तन्निवासिनो देवा' तैः सह अः तस्य धूलिका— धूलिक्रीडा गोधूलिका। शेषं पूर्ववत् ॥ २ ॥

अथ सकलतीर्थङ्करादिगतमङ्गलमाह—

गोभिः—ज्ञानैः अन्योन्याविनाभावात् ज्ञान-दर्शन-चारित्रैर्निजोचितगुणस्थानान्वितैः कृत्वा उपलक्षिताः वा, न विद्यन्ते धूलयः—अपरजांसि येषां ते तीर्थङ्कराः गणधराः साधवश्च तेभ्य'

कानि–सुखानि यस्यां प्रणतौ सा गोधूलिका तीर्थङ्करादिसुखकृतप्रणतिरस्तु । "कं सुखे शीर्षे जले च" (   ) प्रसिद्धम् ॥ ३ ॥

अथ मरुदेवागतमङ्गलमाह—

गौः–वृषभः तेन वृषभलाञ्छनेन उपलक्षितः अः–अर्हन् तस्य धूलिः अर्थात् शरीरलग्नधूलिः तस्याः सकाशात् अर्थात् आलिङ्गनात् कानि–सुखानि यस्याः सा गोधूलिका भगवज्जननी मरुदेवा सुखायास्तु । यतः (पद्मानन्दमहाकाव्ये स० ८, श्लो० ५२)—

"धूलिधूसरमसुं मरुदेवा–ऽऽश्लिष्य मीलितनयना स्वयमासीत् ।
अन्तरे वपुरिदं सुखपूरैः, पूरितं कियदितीव दिदृक्षुः ॥ ४ ॥" (स्वागता)

अथ गुरुगतमङ्गलमाह—

गौः–गुरुः तस्य धूलिः अर्थात् चरणकमलरजः तस्याः कानि–सुखानि यस्यां प्रणतौ सा गोधूलिका । गुरुचरणकमलरजःस्पर्शसुखप्रणतिः सुखायास्तु ॥ ५ ॥

अथ सरस्वतीगतमङ्गलमाह—

गोभिः–जलैः धूल्या च उपलक्षितः कः–आत्मा रूपं यस्याः सा गोधूलिका–सरस्वती ज्ञानवृद्धयेऽस्तु । "को ब्रह्मण्यात्मनि रवौ" इति कोषे (हैमेऽनेकार्थसङ्ग्रहे का० १, श्लो० ५) । अत्र श्लिष्टार्थत्वात् गौः–श्रुतदेवीबीजं गकारं विनाऽपि अरपि बीजम् । यतः—

"अस्त्यौर्वोऽपि सरस्वती मनुगतो जाड्याम्बुविच्छित्तये
गोशब्दो गिरि वर्तते स नियतं योगं विना सिद्धिदः ॥"

इति लघुस्तवे । सरस्वत्या हि जलानि धूल्याविलानि भवन्तीति युक्तोऽयमर्थः ॥ ६ ॥ इति मङ्गलाचरणार्थः ॥

अथ प्रस्तुतमाह—

गौः–पृथिव्याः प्रधाना धूली–कुङ्कुमादिः यस्यां रचनायां सा गोधूली, मध्यपदलोपत्वात् गोधूली एव गोधूलिका चेति । धूलिशब्दो ह्रस्वो दीर्घश्च ईव्विधानविकल्पात् गोधूली इत्यत्र सम्बन्धमात्रत्वात् केसरखटिकाद्युचितद्रव्यपरिग्रहः ॥ ७ ॥

(गौः–धूली) अथवा । गौः–अग्निः तद्वत् तद्वर्णसमाना धूली–कुङ्कुमादिः यस्यां रचनायां सा । शेषं पूर्ववत् ॥ ८ ॥

गोभिः–जलैः द्रवीकृता प्रधानधूली–कुङ्कुमादिरसो यस्यां रचनायां सा । शेषं पूर्ववत् ॥ ९ ॥

अथवा । गवि–पृथिव्यां प्रधानधूलिः–कुङ्कुमादिः यस्यां रचनायां सा । शेषं पूर्ववत् ॥ १० ॥

---

१ "कं सुखे वारि शीर्षे च" इति पाठो विश्वलोचने (श्लो० ३) ।

२ अथ लघुस्तवमाम्न. सरस्वतीस्तोत्रस्य पञ्चमपद्यस्य उत्तरार्धं । पूर्वार्धस्तु यथा—

"यत् सद्यो वचसा प्रवृत्तिकरणे दृष्टप्रभावं बुधैः—
स्तार्तीयं तदहं नमामि मनसा त्वद्बीजमिन्दुप्रभम्"

अथवा। गौः–पृथिवी "भूस्तु भूमिरिव क्षितौ ॥ स्थाने च" इति हैमानेकार्थवचनात् (ध्म० १, श्लो० ९–१०)। अत्र गोशब्दः स्थानवाची। तेन पवित्रस्थानगुपचितस्थाने प्रधाना धूली यस्यां रचनायां सा। शेषं पूर्ववत् ॥ ११ ॥

अथवा। गवा–वाण्या वचनपर्यायमध्या उपलक्षणत्वात् सधवमहिलामङ्गलगीतध्वन्युपलक्षिता प्रधानधूली–कुङ्कुमादि' यस्यां रचनायां सा गोधूली ॥ १२ ॥

अथवा। गौः–गुरुः हिताहितोपदेशकः तस्याग्रे प्रधानधूली–कुङ्कुमादि' यस्यां रचनायां सा गोधूली ॥ १३ ॥

अथवा। गौः–गुरुः धर्मोपदेशकः तेन उपलक्षणत्वात् तच्चरणन्यासेन प्रधाना धूलिः–रजो यस्यां वसतौ उपाश्रये तत्र वा गोधूलिका। कप्रत्यय'। प्रत्ययागिता वा भवन्ति कर्णाटक कर्णाटक इत्यादिवत् हृदिविकल्पत्वम्। हृद्यो सत्यामपि गोधूलिका। प्राकृते इत्यलं समा-नम् ॥ १४ ॥

अथवा। गोखुरैरुत्थातधूलिसमये जातं गोधूलिकं अंशकलग्नमिति यावत् ज्योतिःशास्त्र- प्रसिद्ध तद्वत्। गवा–वाण्या अर्थात् गुरुणा शास्त्रार्थकथनेन निषिध्यमानधूलिसमये निवार्यमाण- पापरजोऽवसरे मया–समवादि' कृता गोधूलिका उपचारत्वेन (प्र)सिद्धा ॥ १५ ॥

अथवा। गाव–वृषभाः सिद्धान्तधमापवा गीतार्थाः तेषामग्रे प्रधानधूल्या मया गोधू-लिका ॥ १६ ॥

अथाध्यात्मदशायां गोधूलिकार्थो लिख्यते—

गाव'–इन्द्रियाणि गुणगुणिनोरभेदात् तद्विषया' शब्दादयः पञ्च ते धूलयः–रजांसि इव यस्याः अध्यात्मदशायां सा गोधूलिका अध्यात्मस्वरूपमयी ॥ १७ ॥

अथवा। गवा–ज्ञानेन न विद्यते धूलिः–पापरजो यस्यां अध्या० सा गोऽधूलिका ॥ १८ ॥

अथवा। गौः–स्वर्गः श्री' रमा च एते पदार्थाः धूलय'–रजांसि इव यस्यां अध्या० सा गोधूलिका अध्यात्मदशा ॥ १९ ॥

अथवा। गाव'–सुखानि इन्द्रियजन्यसुखानि आ–समन्ता(त्) धूलयः–रजांसि एव यस्यां अध्या० सा गोधूलिका। अत्र 'एदोतोत' (सा० सू० ५१) इति सूत्रेण कचिदाकारस्यापि लोप' ॥२०॥

अथवा। गौ'–चित्तभूमिः तस्यां न विद्यन्ते धूलयः–अघरजांसि यस्यां अध्या० सा० गोधू लिका अध्यात्मदशा ॥ २१ ॥

अथवा। गवा–वह्निना तपसा न धूलयः–अघरजांसि यस्यां अध्या० सा गोधूलिका अध्या-त्मदशा ॥ २२ ॥

अथवा। गावः–जलानि शमजलानि तै न धूलयः–अघरजांसि यस्यां० सा गोऽधूलिका अध्यात्मदशा ॥ २३ ॥

अथवा। गौः–नेत्रं ज्ञाननेत्रं तेन न धूलयः–पापरजांसि यस्यां० सा गोऽधूलिका अध्या-त्मदशा ॥ २४ ॥

अथवा । गौः–लज्जा चारित्रधर्मरक्षणलज्जा तया न धू०–पा० यस्यां सा गोऽधूलिका ॥२५॥
अथवा । गावः–प्राणाः उपयोगलक्षणाः तैर्न धू०–पा० य० सा गोऽधूलिका ॥ २६ ॥
अथवा । गावः–मातरः अष्टप्रवचनमातरः ताभिः न धू०–पा० य० सा गोऽधूलिका ॥२७॥
अथवा । गौः–वाणी जिनवाणी तया न धू०–पा० य० सा गोऽधूलिका ॥ २८ ॥

इति अध्यात्मदशायां गोधूलिकाशब्दार्थः ॥

अथ लोकेऽपि गोधूलिकाशब्दोऽस्ति ।

यतः गौः–पृथिवी तज्जातित्वात् मृत्तिका खटिका वर्णिका उपलक्षणत्वात् गोमयमपि, एतेषां लेपनेन न धूलिः–रजो यस्यां भूमौ सा गोधूलिका मृत्तिका गोमयादिभिरञ्चितभूमिमण्डलानि गुंहलीचतुष्क इत्यादीनि दीयन्ते क्रियन्ते च लोके प्रसिद्धम् । उक्तं च अर्धशीर्षकपीडानिवारणमन्त्रकथायां 'ॐ नमो अउड्डावली' इत्यादिपदपङ्क्तौ 'गुंहुली करइ मांडलांघइ' इत्यादि । संस्कृते गोधूलिकाशब्दः गोधूलिका गोधूलिः गोधूली प्राकृते तु गुंहुली गुंहुलिया गुंहुलिका ह्रस्वत्वं मकारागमश्च भवत्यलाक्षणिक इति ॥ २९ ॥

अथ द्वितीयं पदं गोहली गुंहली इति कोऽर्थः ? उच्यते—गवि–पृथिव्यां हलवत् हलकर्षणोपचारो यस्याः स्वस्तिकरचनाया साः गोहलिका ॥ ३० ॥

अथवा । हलिः इति महद्धलं धातुरत्नाकरोक्तं तदुपचारो यस्यां सा गोहलिः ॥ ३१ ॥

अथवा । गुः–कान्तिः हः–हर्षः अनयोः ली–श्लेषो यस्यां सा गुहली ॥ ३२ ॥

अथवा । गुः–कान्तिः हः–हर्षः अनयोः ला–आदानं यस्यां सा गुहलिका । अत्र 'गुः' इति पदेन सधवता सुनेपथ्या सुरूपा चोक्ता । 'हर्ष'पदेन चित्तप्रसन्नता चोक्ता ॥ ३३ ॥

अथवा । गौः–ज्ञानं वाणी प्रभा कान्तिश्च एतेषां हः–निवासः आधारः आचार्यः "ओयंसि तेयंसि वच्चंसि" ( ) इत्यादिवचनात् तेषां अग्रे ला–इन्द्राण्य इव लाः–सधवाः श्राविकाः ताभ्यः सकाशात् भवा गोहलिका ॥ ३४ ॥

अथवा । गौः–ज्ञानं तेन न हः–क्रोधो यस्याः सा एवंविधा सधवा ला–इन्द्राणीव तस्याः भवा गोऽहलिका ॥ ३५ ॥

अथवा । गौः–श्रीः रमा वा तया उपलक्षितो हः–हर्षो यासां ताः सधवाः लाः–इन्द्राण्य इव ताभ्यो भवा गोहलिका ॥ ३६ ॥

अथवा । गवां–श्रीणां शोभानां प्रभाणां च हः–निवासः आधारः अर्थात् सकलशोभामिलितदीपावलिकलितं दीपावलिकापर्व तस्मिन् लसतीति ला गोहला । गोहला एव गोहलिका ॥३७॥

अथवा । गवा–श्रिया केवलज्ञानलक्ष्म्या उपलक्षितः अः–अर्हन् तस्य हः–निवासः चैत्यः तत्र लसति–द्योतते या सा ला । क्वचिड्प्रत्यये सिद्धम् । गोहलिका स्वार्थे कः आम काप्यत (?) इति सिद्धम् ॥ ३८ ॥

अथवा । गौः–श्रीः प्रभावः ताभ्यां उपलक्षितो हः–निवासः जिनप्रासादः तत्र लसतीति लः–जिनः तस्य इयं मूर्तिः ली तस्याः अग्रे भवा गोहलिका ॥ ३९ ॥

अथवा। गौः–पृथिवी "भूस्तु भूमिरिम क्षितौ ॥ स्थाने च" इति हैमानेकार्थवचनात् (का० १, श्लो० ९–१०)। अत्र गोशब्दः स्थानवाची। तेन पञ्चकाशुषितस्थाने प्रधाना धूली यस्यां रचनायां सा। शेषं पूर्ववत् ॥ ११ ॥

अथवा। गवा–वाण्या वचनपर्यायमथ्या उपलक्षणत्वात् सधवमहिलामञ्जुलगीतध्वन्युपलक्षिता प्रधानधूली–कुङ्कुमादिः यस्यां रचनायां सा गोधूली ॥ १२ ॥

अथवा। गौः–गुरुः हिताहितोपदेशकः तस्याग्रे प्रधानधूली–कुङ्कुमादिः यस्यां रचनायां सा गोधूली ॥ १३ ॥

अथवा। गौः–गुरुः धर्मोपदेशकः तेन उपलक्षणत्वात् सचरणन्यासेन प्रधाना धूलिः–रजो यस्यां वसतौ उपाश्रये तत्र सा गोधूलिका। कप्रत्ययः। प्रत्ययाश्चिन्हो वा भवन्ति कर्णाटक-कर्णाटक इत्यादिवत् वृद्धिविकल्पत्वम्। इयो सत्यामपि गोधूलिका। प्राकृते ह्रस्वत्वं समानम् ॥ १४ ॥

अथवा। गोखुरैरुत्खातधूलिसमये यत गोधूलिकं अंशकलग्नमिति यावत् ज्योतिःशास्त्रप्रसिद्ध तद्वत्। गवा–वाण्या अर्थात् गुरूणां शास्त्रार्थकथनेन निपिष्यमानधूलिसमये निवार्यमाणपापरजोऽवसरे भवा–सभ्यामि कृता गोधूलिका उपचारत्वेन (प्र)सिद्धा ॥ १५ ॥

अथवा। गावः–वृषभाः सिद्धान्तभाषया गीतार्थाः तेषामग्रे प्रधानधूल्या भवा गोधूलिका ॥ १६ ॥

अथाध्यात्मदशायां गोधूलिकार्थो लिख्यते—

गावः–इन्द्रियाणि गुणगुणिनोरभेदात् तद्विषया शब्दादयः पञ्च ते धूलयः–रजांसि इव यस्याम् अध्यात्मदशायां सा गोधूलिका अध्यात्मस्वरूपमयी ॥ १७ ॥

अथवा। गवा–ज्ञानेन न विद्यते धूलिः–पापरजो यस्यां अध्या० सा गोऽधूलिका ॥ १८ ॥

अथवा। गौः–स्वर्गः श्रीः रमा च एते पदार्थाः धूलयः–रजांसि इव यस्यां अध्या० सा गोधूलिका अध्यात्मदशा ॥ १९ ॥

अथवा। गावः–सुखानि इन्द्रियजन्यसुखानि आ–समस्ता(त्) धूलयः–रजांसि एव यस्यां अध्या० सा गोधूलिका। अत्र 'एदोतोतः' (सा० सू० ५१) इति सूत्रेण क्वचिदाकारस्यापि लोपः ॥२०॥

अथवा। गौः–चित्तभूमिः तस्यां न विद्यन्ते धूलयः–अघरजांसि यस्यां अध्या० सा० गोधूलिका अध्यात्मदशा ॥ २१ ॥

अथवा। गवा–महिना तपसा न धूलयः–अघरजांसि यस्यां अध्या० सा गोधूलिका अध्यात्मदशा ॥ २२ ॥

अथवा। गावः–जलानि शमजलानि तैः न धूलयः–अघरजांसि यस्यां० सा गोऽधूलिका अध्यात्मदशा ॥ २३ ॥

अथवा। गौः–नेत्रं ज्ञाननेत्रं तेन न धूलयः–पापरजांसि यस्यां० सा गोऽधूलिका अध्यात्मदशा ॥ २४ ॥

श्रीभावप्रभसूरिकृतः

# ॥ सभाचमत्कारः ॥

## ( गूर्जरगिरा गुम्फितः )

मरुदेवीनो लाडलो नाभि राय कुलचंद ।
शत्रुंजय शिखरे नमो भावे ऋषभ जिणंद ॥ १ ॥
परमार्हत आदी भली सुलसा रेवति जेह ।
जिनशासन अनुरागिणी सर्व श्राविका एह ॥ २ ॥
गमने गजपति हारिओ गज लंछन जस पाय ।
बीजो जिनवर वंदिये अजित नाम कहाय ॥ ३ ॥
देवी माता जनमीओ अर नामे अरिहंत ।
सरण करतां जेहनुं सुन्दर काम सरंत ॥ ४ ॥
सुरनरनायक जेहस्युं धारइं छइं अति प्रीत ।
सांमलि सुन्दर! ताहरे संभव जिन छे चित्त ॥ ५ ॥
चार अतिशय जन्मना केवल तणा अग्यार ।
ओगणीश देवतणा कर्या श्रीश्रेयांस उदार ॥ ६ ॥
चंचल मन जीत्युं इणिं इम चिंतवि कपिराय ।
लंछनमसि आवी रह्यो अभिनन्दन जिनराय ॥ ७ ॥
दीपे जेहनी देहडी मेघघटा अनुमान ।
राजिमती जीवनजडी नेमनाथ भगवान् ॥ ८ ॥
दुरमति मनथी मुंकइं आणो सुमति स्वभाव ।
सुमति जिणेसर सेविइं भवजल तारण नाव ॥ ९ ॥
भेंसो लंछन जेहने राती जेहनी काय ।
वासुपूज्य जिन प्रणमिइं आनंद अंग न माय ॥ १० ॥
चित आरती दूरे करें पूरें वंछित काम ।
छट्ठो जिनवर सेविइं पद्मप्रभ ए नाम ॥ ११ ॥
लोक रीत छें एहवी जे वाहलां कहिवाय ।
अंतरंग जे राखिइं मल्लिप्रभु सुखदाय ॥ १२ ॥

अथवा । गोः–सुखं प्रभा उद्द्योतश्च ताभ्यां उपलक्षित' हः–निवास जीवाजीवाधारक्षेत्रं जगत् यस्मात् स जिनजन्ममहोत्सवसमयः तस्मिन् समये कनकगिरिशिखरे लाः–इन्द्राश्च लाः–इन्द्राश्च सरूपाणामेकशेषे द्वन्द्वे पूर्वपदस्य लोपत्वात् तेभ्यो लेभ्यो मया गोहलिका । अत्र तन्दुलमय्यामष्टमङ्गल्यां चाल्पापि गोहलिकारचना प्रोक्ता ॥ ४० ॥

अथवा । गोः–सुखं प्रभा च ताभ्यां उपलक्षितं अहः–दिवस' यस्मात् जिनजन्मसमयात् स', शेष तथैव । यत –"नारका अप्यमोदन्त" इति "उद्द्योतस्त्रिजगत्यासीत्" इति प्रसिद्धं जिनजन्मावसरे । अत्राहःशब्दोऽकारान्त' समासप्रत्ययत्वात् । एवमत्र प्राकृते ह्रस्वत्वं मकारागमश्च । तेन गुहलिका गुहली शेषं स्वभावत सिद्धम् ॥ ४१ ॥

इत्येवं सर्वत्र शुभस्थाने मङ्गलार्थं गोहलिकारचनाविषयः प्रोक्त' । अत्र काव्यानि—

इत्थं क क न विद्यते शुचिपदे गोधूलिकागोचरो
 यस्त्वप्लवहस्त्यवानवनितागानोत्सवैः पूर्वकम् ।
नीतः श्रीजिनदेशनान्तविषयं सच्छालिकालिर्यकि–
 स्तच्छायाऽनुभवोऽनुभावभवनं वहत् प्रसिद्धोऽप्ययम् ॥ १ ॥"–शार्दूल०

श्रीतीर्थङ्करशासनोन्नतिकरी व्याख्यासमालङ्कृति'
 साधुभ्यो विनयं नय च ददती मत्यूहविध्वंसिनी ।
सन्मुक्ताफलपूरिताक्षयगुणाकल्पाकृतिः कौङ्कुमी
 माङ्गल्यैकमयी व्यधीकृतवमा गोधूलिका गीयते ॥ २ ॥–,,

भो भो धर्मधनाः ! सरोजवदना' ! पीनस्तना' ! पावनाः !
 लीलाऽलङ्कृतभूषनाः । सपधनाः ! गाथोल्लसच्चन्दनाः ! ।
लब्ध्वा मर्त्यभवं तथा शुभवतां सौभाग्यमारोग्यतां
 धत्त तत्फललब्धये गुरुपुरो गोधूलिकागौरवम् ॥ ३ ॥–,,

सगुरुपदकृपातो ज्ञातकिञ्चिद्रहस्य'
 शिवपथकथकार्हच्छासने भव्यभक्ति ।
समयरचनार्थं सूरिभावप्रभाख्यो
 गदति गलितपाप स्पष्टगोधूलिकार्थम् ॥ ४ ॥–मालिनी

इति श्रीभावप्रभसूरीणामियं कृति' शिष्यादीनां शुद्धिलक्षणपक्षनार्थं सम्पूर्णा । संवत् १९५८ ।

---

१ वीतरागस्तोत्रे दशमे प्रकाशे सप्तमस्य पद्यस्येदमाद्य चरणम् । सम्पूर्णं तत् पद्यं तु यथा—
 नारका अप्यमोदन्त यस्य कल्याणपर्वसु ।
 पवित्रं तस्य चारित्रं को वा वर्णयितुं क्षमः ? ॥

२ ग्रु–गुग्ग अथवा–देखो भासौ ता ।

कनकवरण काया भली मुखटंको श्रीकार ।
श्रीनेमि[३]जिन इकवीसमा सेवकजन आधार ॥ २८ ॥
रामानंदन सुं[३]विधि दिल (रुच्यो) राख्यो न रहे छुपाय ।
पूरण चंद्रनी ज्योत्स्ना हारी जेहनी काय ॥ २९ ॥
आठ कर्म टालिं करी मुगतिं पहोता देव ।
कुंथुं[३] जिणंद कलानिधि करिइं तेहनी सेव ॥ ३० ॥
शीतल उपवन वायरो शीतल गंग कल्लोल ।
शीतल[३] जिणेसर सेवतां निशिदिन हुइं रंगरोल ॥ ३१ ॥
चउवीस जिणवर नाम सुंदर सात क्षेत्र सोहामणा
ए कतूहल एम कीधो मन हरखे परखद तणा ।
श्रीमहिमाप्रभसूरीश तेहना विनेयी 'भावे' कह्यो
एक एकथी करी दुगुणा हेमचंद्र हेतइं लह्यउ ॥ ३२ ॥

॥ इति सभाचमत्कार संपूर्ण ॥ सुरचंद लिखितं ॥



जो सेवीजे चूंपस्यु त्रिकरणशुद्धिई सार ।
'श्रीसुपार्श्व जिन सातमा पामीजे भवपार ॥ १३ ॥
निज निर्मल ज्ञाने करी निरखे लोकालोक ।
विमल जिनेश्वर मनि वस्यो जिम दिनकरस्यु कोक ॥ १४ ॥
आदर कीजइ तेहस्युं जे पहुचाडइ आश ।
चन्द्रप्रभ जिन आठमा टाले गर्भावास ॥ १५ ॥
लछन जेहनइ केसरी वीरमांहिं जे धीर ।
त्रिशलानन्दन वदई महावीर गिरिधीर ॥ १६ ॥
जिनभवन छइ जेतलां त्रिभुवन मांहि सार ।
शाश्वतां नइ अशाश्वतां प्रणमीजइ निरधार ॥ १७ ॥
चउ गति छेदे चउ दया आपइ अविचल ठाम ।
अनंतनाथ आराहिइं त्रिभुवनना जे स्वामि(मि) ॥ १८ ॥
पांचो वरचीटांगणां पुस्तक भक्ति अपार ।
ज्ञान वधइ जगि जेहथी लहिइं परम विचार ॥ १९ ॥
चरणई लंछन काछबो कायलकांति सुहाय ।
मुनिसुव्रत जिन प्रणमिइ आनद अंग न माय ॥ २० ॥
त्रिभुवन मांहिं जेह छइ स्वर्ग मर्त्य पातालि ।
प्रतिमा पूजुं प्रेमस्यु लोपइ ते जगि काल ॥ २१ ॥
धर्म शब्द सघलइं कहइ पण अणलहिते धर्म ।
धर्म जिणेसर पनरमा पूजों जाइ कर्म ॥ २२ ॥
पंच महाव्रत पालता समता रस शृंगार ।
साधुशिरोमणि वंदिइं गिरुआ गुण आधार ॥ २३ ॥
मनवंछित आपइ सदा जंगम सुरतरु जेह ।
पार्श्वनाथ प्रभुता धणी सेवो धरि सुसिनेह ॥ २४ ॥
आदि अंत जिनवर तणी थई सेवोपची जेह ।
पंचमहाव्रत धारिणी प्रणमीजइ जगि तेह ॥ २५ ॥
जन्मसमइं जिनराजनइं शान्ति थई सवि देश ।
शान्ति जिणेसर सोलमा नमिइं जाइ किलेस ॥ २६ ॥
श्रेयांस प्रमुख श्रावक भला धीर धसक पर्यंत ।
दीपावक जिनधर्मना श्रावक! सुण शोभंत ॥ २७ ॥

उपाध्यायश्रीविनयविजयगणिगुम्फितं

# ॥ परिपाटीचतुर्दशकम् ॥

नमिऊण वद्धमाणं थुणामि जिणचेइए विविहरूवे ।
'चत्तारि अट्ठ दस दो अ' इमाएँ गाहाएँ संगहिए ॥ १ ॥
[ नत्वा वर्धमानं स्तौमि जिनचैत्यानि विविधरूपाणि ।
'चत्तारि अट्ठ दस दो य' अस्यां गाथायां सङ्गृहीतानि ॥ १ ॥ ]

प्रथमा परिपाटी–अष्टापदतीर्थवन्दनम्–

चत्तारि अट्ठ दस दो य वंदिया जिणवरा चउव्वीसं ।
परमट्ठनिट्ठिअट्ठा सिद्धा सिद्धिं मम दिसंतु ॥ २ ॥
[ चत्वारः अष्ट दश द्वौ च वन्दिता जिनवराः चतुर्विंशतिः ।
परमार्थनिष्ठितार्थाः सिद्धाः सिद्धिं मम दिशन्तु ॥ २ ॥ ]
चत्तारि दक्खिणाए पच्छिमओ अट्ठ उत्तरदिसाए ।
दस पुव्वाए दो अट्ठावयम्मि वंदे चउव्वीसं ॥ ३ ॥
[ चत्वारो दक्षिणायां पश्चिमायां अष्ट उत्तरदिशायाम् ।
दश पूर्वायां द्वौ अष्टापदे वन्दे चतुर्विंशतिम् ॥ ३ ॥ ]
पुव्वाए उसभमजिअं दक्खिणओ संभवाइचत्तारि ।
अड पच्छिमे सुपासाइ धम्माई दस उ उत्तरओ ॥ ४ ॥
[ पूर्वस्यां ऋषभमजितं दक्षिणतः सम्भवादिचत्वारः ।
अष्ट पश्चिमे सुपार्श्वादयः धर्मादयः दश तु उत्तरतः ॥ ४ ॥ ]
वण्णतणुमाणलंछणपमुहेहिं अलंकिया नियनिएहिं ।
भरहेसरनिम्मविया अट्ठावय जिणवरा एए ॥ ५ ॥
[ वर्णतनुमानलाञ्छनप्रमुखैः अलङ्कृता निजनिजैः ।
भरतेश्वरनिर्मापिता अष्टापदे जिनवरा एते ॥ ५ ॥ ]

द्वितीया परिपाटी–सम्मेतशिखरतीर्थवन्दनम्—

चत्तारिउ अरिमुक्का अट्ठ दस दो य जिणवरा एवं ।
सम्मेयसेलसिहरे वीसं परिनिव्वुए वंदे ॥ ६ ॥
[ त्यक्तरिपवः अरिमुक्ता अष्ट दश द्वौ च जिनवरा एवम् ।
सम्मेतशैलशिखरे विंशतिं परिनिर्वृतान् वन्दे ॥ ६ ॥ ]

---

१ इयं तु पूर्वोक्ता गाथा । २ 'चतुर अदरे मुक्का' इत्यपि भाति ।

(१)

| | | | | |
|---|---|---|---|---|
| अ | ऋषभ | अजित | संभव | अभिनंदन |
| | सुमति | पद्मप्रभ | सुपार्श्व | चंद्रप्रभ |
| | जिनभवन | पुस्तक | प्रतिमा | साधु |
| | साध्वी | श्रावक | सुविधि | शीतल |

(२)

| | | | | |
|---|---|---|---|---|
| सि | श्राविका | अजित | श्रेयांस | अभिनंदन |
| | वासुपूज्य | पद्मप्रभ | विमल | चंद्रप्रभ |
| | अनंत | पुस्तक | साधु | धर्म |
| | शान्ति | श्रावक | कुंथु | शीतल |

(४)

| | | | | |
|---|---|---|---|---|
| आ | अर | संभव | श्रेयांस | अभिनंदन |
| | मल्लि | विमल | चंद्रप्रभ | मुनिसुव्रत |
| | प्रतिमा | साधु | धर्म | नमि |
| | सुविधि | कुंथु | सुपार्श्व | शीतल |

(८)

| | | | | |
|---|---|---|---|---|
| उ | नेमि | सुमति | पद्मप्रभ | पार्श्व |
| | वासुपूज्य | मल्ली | सुपार्श्व | विमल |
| | चंद्रप्रभ | साध्वी | शान्ति | श्रावक |
| | नमि | सुविधि | कुंथु | शीतल |

(१६)

| | | | | |
|---|---|---|---|---|
| सा | महावीर | जिनभवन | अनन्त | पुस्तक |
| | मुनिसुव्रत | प्रतिमा | धर्म | साधु |
| | पार्श्व | सुविधि | शान्ति | श्रावक |
| | नेमि | साध्वी | कुंथु | शीतल |

[ अष्टेति अष्ट कर्माणि 'चत्तारि अट्ठ' कर्मरिपुरहिताः ।
'दो अ' इति द्वाभ्यां भेदाभ्यां जन्मतो विहरमानाद् वा ॥ १३ ॥ ]

भरहेरवएसु दस जहन्नओ जिणवरा नमिज्जंति ।
उव्वी–पुहवी तस्स य ईसा–पहुणो भुवणबंधू ॥ १४ ॥

[ भरतैरावतेषु दश जघन्यतो जिनवरा नम्यन्ते ।
उर्वी-पृथ्वी तस्य च ईशाः-प्रभवो भुवनबन्धवः ॥ १४ ॥ ]

अष्टमी परिपाटी–१६०जिनवन्दनम्—

अरिचत्ता अड दसगुण असीइ गुणिया य दोहि सट्ठिसयं ।
सव्वेसुं विजएसुं वंदामि जिणे विहरमाणा ॥ १५ ॥

[ अरित्यक्ता अष्ट दशगुणाः अशीतिः गुणिता च द्वाभ्यां षष्टिशतम् ।
सर्वेषु विजयेषु वन्दे जिनान् विहरमाणान् ॥ १५ ॥ ]

नवमी परिपाटी–१७०जिनवन्दनम्—

अट्ठ त्ति एगसेसे अट्ठहि गुणिआ य अट्ठ चउसट्ठी ।
दस दसगुणिआ य सयं चत्तारि अ दो अ मेलविआ ॥ १६ ॥

[ अष्टेति एकशेषे अष्टभिर्गुणिताः च अष्ट चतुःषष्टिः ।
दश दशगुणिताः च शतं चत्वारः च द्वौ च मिश्रिताः ॥ १६ ॥ ]

सित्तरिसयं जिणिंदा एए पन्नरससु कम्मभूमीसु ।
वंदामि विहरमाणा जह समए अजिअसामिस्स ॥ १७ ॥

[ सप्ततिशतं जिनेन्द्रान् एतान् पञ्चदशसु कर्मभूमिषु ।
वन्दे विहरमाणान् यथा समये अजितस्वामिनः ॥ १७ ॥ ]

दशमी परपाटी–चतुर्विंशतित्रितयवन्दनम्–

अट्ठदस चउहि गुणिआ बावत्तरि हुंति भरहवासंमि ।
तिण्णि वि चउवीसीओ तित्थयराणं पणिवयामि ॥ १८ ॥

[ अष्टादश चतुर्भिर्गुणिता द्विसप्ततिर्भवन्ति भरतवर्षे ।
तिस्रो वा चतुर्विंशतीः तीर्थङ्कराणां प्रणिपतामि ॥ १८ ॥ ]

एकादशी परिपाटी–पञ्चचतुर्विंशतिवन्दनम्—

चत्तारि अट्ठ बारस ते दसगुणिआ सयं च वीसहियं ।
पंच वि चउवीसीओ पंचसु भरहेसु वंदामि ॥ १९ ॥

[ चत्वारः अष्ट द्वादश ते दशगुणिताः शतं च विंशत्यधिकम् ।
पञ्चापि चतुर्विंशतीः पञ्चसु भरतेषु वन्दे ॥ १९ ॥ ]

'च' 'उ'सद्दा पुण एत्थ अत्थविसेसप्पयासणे णेया ।
गाहाए चरिमद्धे सव्वेसु वि तुल्लमत्थेसु ॥ ७ ॥
[ 'च' 'उ'शब्दौ पुनः अत्र अर्थविशेषप्रकाशने ज्ञेयौ ।
गाथायाः चरमार्धे सर्वेषु अपि तुल्यमर्थेषु ॥ ७ ॥ ]

तृतीया परिपाटी–शत्रुञ्जयतीर्थवन्दनम्—

'चत्तारि'पय पुव्वं व अट्ठ दस चउविसचवीस त्ति ।
पंचगुणा सेवीसं सत्तुंजयसिहरए वंदे ॥ ८ ॥
[ 'चत्वारि'पदं पूर्ववत् अष्ट दश चतुर्विंशतिर्विंशतिः इति ।
पञ्चगुणां त्रयोविंशतिं शत्रुञ्जयशिखरे वन्दे ॥ ८ ॥ ]
दोय त्ति हुंति इंदा दो–सग्गा तस्स पालगा तेण ।
दोएहिं वंदिया दोयवंदिया हुंति जिणचंदा ॥ ९ ॥
[ 'दोय' इति भवन्ति इन्द्रा द्यौः–स्वर्गः तस्य पालकाः तेन ।
द्योयैर्वन्दिता 'दोयवन्दिया' भवन्ति जिनचन्द्राः ॥ ९ ॥ ]

चतुर्थी परिपाटी–नन्दीश्वरद्वीपचैत्यवन्दनम्—

चउ अट्ठगुण बत्तीसं दो दस वीस त्ति मिलिय बावन्ना ।
नंदीसरे चउसद्दा मयंतरे वीस चेइए वंदे ॥ १० ॥
[ चत्वारोऽष्टगुणा द्वात्रिंशद् द्वौ दश विंशतिरिति मिलिता द्विपञ्चाशत् ।
नन्दीश्वरे च-उशब्दौ मतान्तरे विंशतिं चैत्यान् वन्दे ॥ १० ॥ ]

पञ्चमी परिपाटी–विहरमानजिनवन्दनम्—

चत्तारि जंबुदीवे धायइसंडेऽट्ठ पुक्खरवरद्धे ।
दोरहिया दस अट्ठ उ वीसं वंदे विहरमाणे ॥ ११ ॥
[ चत्वारो जम्बूद्वीपे धातकीखण्डेऽष्ट पुष्करवरार्धे ।
द्विरहिता दश अष्ट तु विंशतिं वन्दे विहरमाणान् ॥ ११ ॥ ]

षष्ठी परिपाटी–विंशतिजन्मतस्तीर्थङ्करवन्दनम्—

जंबूदीवे चउरो दु दु अरिहा पुव्वपच्छिमविदेहे ।
अड अड धायइ पुक्खर उक्कोसं वीसं जम्मओ वंदे ॥ १२ ॥
[ जम्बूद्वीपे चत्वारः द्वौ द्वौ अर्हन्तौ पूर्वपश्चिमविदेहयोः ।
अष्ट अष्ट धातक्यां पुष्करे उत्कृष्टतो विंशतिं जन्मतो वन्दे ॥ १२ ॥ ]

सप्तमी परिपाटी–भरत-ऐरवततीर्थवन्दनम्—

अट्ठ त्ति अट्ठ कम्मा चत्तारिजइ कम्मरिउरहिया ।
दो अवि दोहिं भेएहिं जम्मओ विहरमाणा वा ॥ १३ ॥

[ चतुर्दश परिपाट्य एवं 'चत्तारि अट्ठ'गाथायाः ।
श्रीसङ्घदासगणिना भणिता वसुदेवहिण्ड्याम् ॥ २६ ॥ ]
सिरिहीरविजयसूरीसरसीसा कित्तिविजय उवज्झाया ।
तेसिं सीसेण थुआ जिणा इमे विनयविजएण ॥ २७ ॥
[ श्रीहीरविजयसूरीश्वरशिष्याः कीर्तिविजयोपाध्यायाः ।
तेषां शिष्येण स्तुता जिना इमे विनयविजयेन ॥ २७ ॥ ]

संवत् १९६८ वर्षे प्रथमभाद्रपद सुदि १४ गुरौ गणिजीवविजयेन लिखितं कच्छ-देशे, धमकडानगरे, श्रीमहावीरप्रसादात् । शुभं भवतु श्रीश्रमणसंघस्य ।

---

श्रीदेवेन्द्रसूरिकृतः

# ॥ 'चत्तारिअट्ठदस'विवरणसूचकः स्तवः ॥

श्रीरत्नमण्डनगुरुभ्यो नमः ।

'चत्तारि अट्ठ दस दोअ०' इह सम्प्रदायगतं किञ्चिल्लिख्यते—

चत्तारि अट्ठ दस दो अ अट्ठावयस्स सिहरम्मि ।
भरहविणम्मियपासायसंठिए जिणवरे वंदे ॥ १ ॥
चउवीसं परिमाणं अट्ठावयमेहलासु वंदामि ।
चत्तारि १ अट्ठ २ दस दो अ ३ उवरिममज्झिमेसु हिट्ठेसु ॥ २ ॥
दाहिणदारे चउरो पच्छिमए अट्ठ उत्तरे दस य ।
पुव्वे दो चउवीसं अट्ठावयपव्वए वंदे ॥ १ ॥
अण्णे भणंति—उवरिममेहलाए चत्तारि मज्झिमाए ।
अट्ठ हिट्ठिमाए दस दो अ मेलिआ चउव्वीसं ॥ २ ॥

---

२–४ छाया—

चतुरः अष्ट दश द्वौ च अष्टापदस्य शिखरे ।
भरतविनिर्मितप्रासादसंस्थितान् जिनवरान् वन्दे ॥
चतुर्विंशतिं परिमाणमष्टापदमेखलासु वन्दे ।
चतुरः अष्ट दश द्वौ च उपरि मध्यमे अधः ॥
दक्षिणद्वारे चतुरः पश्चिमेऽष्ट उत्तरे दश च ।
पूर्वे द्वौ चतुर्विंशतिमष्टापदपर्वते वन्दे ॥
अन्ये भणन्ति उपरितनमेखलायां चत्वारो मध्यमायाम् ।
अष्ट अधस्तन्यां दश द्वौ च मिलिताः चतुर्विंशतिः ॥

द्वादशी परिपाटी–पञ्चदशचतुर्विंशतिवन्दनम्—

अट्ठ दसगुणिअ असीइ दसजुत्ता नवइ चउगुणा ते अ ।
तिण्णि सय सट्ठि पनर चउवीसी पचभरहकालतिगे ॥ २० ॥

[ अष्ट दशगुणिता अशीतिः दशयुक्ता नवतिः चतुर्गुणास्ते च ।
त्रीणि शतानि षष्टिः पञ्चदश चतुर्विंशतयः पञ्चभरतकालत्रिके ॥ २० ॥ ]

त्रयोदशी परिपाटी–अनेकचतुर्विंशतिवन्दनम्—

बावत्तरि वीससय तिसया सट्ठी तिभेय पुव्वुत्ता ।
ते दुगुणा सजाया कमेण रासी इमे तिण्णि ॥ २१ ॥

[ द्वासप्ततिः विंशतिशत त्रिशतानि षष्टिस्त्रयो भेदाः पूर्वोक्ताः ।
ते द्विगुणाः सञ्जाताः क्रमेण राशय इमे त्रयः ॥ २१ ॥ ]

चउयालसय दुसया चत्ता सत्त सय वीस अहिआ य ।
एएसिं चउवीसी किज्जंति इमाउ ताओ कमा ॥ २२ ॥

[ चतुश्चत्वारिंशत् शत द्विशते चत्वारिंशत् सप्त शतानि विंशतिरधिका च ।
एतेषु चतुर्विंशतयः क्रियन्ते इमाः ताः क्रमेण ॥ २२ ॥ ]

छद्दस तीसं एया चउवीसी पुव्वभणिअअत्थेणं ।
भरहेरवएसु सया जुगवं भत्तीइ वदिआ ॥ २३ ॥

[ षड् दश त्रिंशत् एताः चतुर्विंशतयः पूर्वभणितार्थेन ।
भरतैरावतेषु सदा युगपद् भक्त्या वन्दितव्याः ॥ २३ ॥ ]

चतुर्दशी परिपाटी–त्रिलोकचैत्यवन्दनम्—

चत्तारि उड्ढलोएऽणुत्तरगेविज्जकप्पजोईसु ।
अहलोय अट्ठ वंतर दस भवणाहिवइभवणेसु ॥ २४ ॥

[ चत्वारः ऊर्ध्वलोकेऽनुत्तर-ग्रैवेयक-कल्प-ज्योतिःषु ।
अधोलोके अष्ट व्यन्तरे दश भवनाधिपतिभवनेषु ॥ २४ ॥ ]

दो तिरिअलोअ सासयमसासए चेइए पणिवयामि ।
एवं तिण्णि वि लोए सव्वे जिणचेइए वंदे ॥ २५ ॥

[ द्वे तिर्यग्लोके शाश्वताऽशाश्वतानि चैत्यानि प्रणिपतामि ।
एवं त्रिषु अपि लोकेषु सर्वाणि जिनचैत्यानि वन्दे ॥ २५ ॥ ]

उपसंहारः—

चउदस परिवाडीओ एव 'चत्तारि अट्ठ'गाहाए ।
सिरिसंघदासगणिणा भणिआ वसुदेवहिंडीए ॥ २६ ॥

चः पूरणे । उर्वीशाः–नृपाः । शेषं प्राग्वत् । [1]चत्तारि जम्बूद्दीवे, अट्ठ धायईसंडे, दस नवरं दोरहिआ पुक्खरद्धे, एवं २० जिणा संपइ जहन्नओ विहरमाणा वंदिज्जंति । जं संपइ उक्कोसओ वा । चउशब्दौ प्राग्वत् । 'परमट्ठनिट्ठिअट्ठा' भूतवद् भाविन्युपचारात् सिद्धाः–प्रख्याताः भव्यैरुपलब्धगुणसन्दोहत्वात् । गाथार्थस्तु स्पष्ट एव ॥ ५ ॥

[2]चत्तारि जहापुव्विं दस अट्ठगुणा असी हवइ एवं ।
पुण वि असी दोगुणिआ सट्ठिसयं नमह विजएसुं ॥ ६ ॥

[3]अट्ठ दसहिं गुणिआ ८०, सा दोहिं गुणिआ १६० सट्ठिसयं, सेसं पुव्वं व । एवं सव्वविजयविहरमाण जिणा वंदिज्जंति ॥ ६ ॥

[4]चउअट्ठ भवे बारस ते दसगुणिआ सयं भवे वीसं ।
ते दोहिं गुणिज्जंता दुन्नि सया हुंति चालीसा ॥ ७ ॥
भरहेरवएसु जिणा चउदसवीसी उ वट्टमाणा उ ।
मणवयकाएण तिहा तेसिं पणमामि भत्तीए ॥ ८ ॥

[5]चत्तारि अट्ठमेलिया १२, ते दसगुणिआ १२०, ते दोगुणिआ २४०, एआ दस चउवीसीओ दससु भरहेरवएसु ५–५–वंदिज्जंति ॥ ७–८ ॥

[6]चत्तारि जहापुव्विं अट्ठ दस (य) दो हवंति अट्ठार ।
वीसस्स य चउभागो तेवीसं विमलगिरि वंदे ॥ ९ ॥

त्यक्तारयः [7]अट्ठ दसमेलिताः १८, दोअत्ति घोपाः–इन्द्रास्तैर्वन्दिताः । चउहिं वीसं भइआ

---

१ छाया—
चत्वारो जम्बूद्वीपे अष्टौ धातकीखण्डे दश नवरं द्विरहिताः पुष्करार्धे । एवं विंशतिर्जिनाः सम्प्रति जघन्यतो विहरन्तो वन्द्यन्ते । यत् सम्प्रति उत्कृष्टतो वा ।

२ त्यक्तारयो यथापूर्वं दश अष्टगुणा अशीतिर्भवत्येवम् ।
पुनरपि अशीतिर्द्विगुणिता षष्टिशतं नमत विजयेषु ॥

३ अष्ट दशभिर्गुणिता अशीतिः सा द्वाभ्यां गुणिता षष्टिशतम्, शेषं पूर्वमिव । एवं सर्वविजयविहरज्जिना वन्द्यन्ते ।

४ चत्वार अष्ट भवेयुर्द्वादश ते दशगुणिताः शताधिका भवेद् विंशति. ।
सा द्वाभ्यां गुण्यमाना द्वे शते भवत. चत्वारिंशत् ॥
भरतैरावतेषु जिना' चतुर्दशविंशतय एव वर्तमानास्तु ।
मनोवच.कायै त्रिधा तान् प्रणमामि भक्त्या ॥

५ चत्वारोऽष्टमिलिताः १२, ते दशगुणिता. १२०, ते द्विगुणिताः २४०, एता दश चतुर्विंशतयो दशसु भरतैरावतेषु वन्द्यन्ते ।

६ त्यक्तारयो यथापूर्वं अष्ट दश यतो भवन्ति अष्टादश ।
विंशतेश्च चतुर्भागस्त्रयोविंशतिं विमलगिरौ वन्दे ॥

७ अष्ट दशमिलिताः १८, 'दो अ' इति... । चतुर्भिः विंशतिर्भक्ता लब्धाः पञ्च ।

चउ अट्ठगुणा बत्तीसणा य दस दुगुण हुंति वीसा य ।
एवं जिणायवण वंदे नंदीसरे दीवे ॥ ३ ॥

चउहिं अट्ठ गुणिआ ३२ दोहिं दस २० मेलिआ ५२ नंदीसरे जिणायवणा वंदिज्जंति । चसद्दान्मतान्तरेण वीसं । अहवा चउहिं रहिआ वीसं १६ एवं नंदीसरे, सोहम्मीसाणिंदग्ग महिसीरायहाणीसु संति । मयंतरेण पुण चउवीसं । परमट्ठेत्ति परमट्ठसहिआ २२, एवं नंदीसरे ५२,२० वा; रायहाणीसु १६,३२ वा । परमट्ठेण—न वर्णनमात्रेण निट्ठिआ—निष्ठां प्राप्ता आस्था—रचना येषां ते तथा । सिद्धा—नित्याः, अपर्यवसानस्थितिकत्वात् ॥ ३ ॥

चत्ता अरओ जेहिं 'चत्तारि'पयस्स होइ अत्थो अ ।
अट्ठ दस दो अ मिलिआ सम्मेअसिहरम्मि वंदामि ॥ ४ ॥

चत्ता अरओ जेहिं अट्ठ दस दो अ एवं वीसं । चसद्दो विशेषद्योतकः एए उ मेयपव्वए वंदिआ । परमट्ठेण, न उवयारेण 'निट्ठिअट्ठा'—समाप्तप्रयोजनाः सिद्धाः—शिवं गता' । 'षिधू गत्याम्' ( सिद्ध० धा० ) ॥ ४ ॥

चत्ता अरओ जेहिं 'चत्तारि'पयस्स होइ अत्थो अ ।
अट्ठ दस दो अ मिलिआ जहन्नपय वीस वंदामि ॥ ५ ॥

चत्ता अरओ जेहिं । "कज्जमाणे कडे" (भगवत्यां) इति वचनात् केऽरी? अट्ठ कम्माणि । कैः चत्तारी ? दसदोहिं भेएहिं हुंति । जहन्नपय ? भरहेरवयदसगविहरमाणएगेगजिणभेएहिं ।

---

१ छाया—

चत्वारोऽष्टगुणा द्वात्रिंशत् च दश द्विगुणा भवन्ति विंशतिश्च ।
एवं जिनद्विपञ्चाशतं वन्दे नन्दीश्वरे द्वीपे ॥

२ चतुर्भिरष्ट गुणिता द्वात्रिंशत् द्वाभ्यां दश २० मिलितानि ५२ नन्दीश्वरे जिनायतनानि वन्द्यन्ते । 'च'शब्दात् मतान्तरे विंशतिम् । अथवा चतुर्भिः रहिता विंशतिः १६ । एवं नन्दीश्वरे । सौधर्मेशानेन्द्राग्रमहिषीराजधानीषु सन्ति । मतान्तरेण पुनः चतुर्विंशतिम् । परमट्ठेति परमार्थसहिताः ३२ । एवं नन्दीश्वरे ५२, २० वा । राजधानीषु १६, ३२ वा । परमार्थेन

३ त्यक्ता अरयो यैः 'चत्तारि'पदस्य भवति अर्थश्च ।
अष्ट दश द्वौ च मिलिताम् (२०) सम्मेतशिखरे वन्दे ॥

४ त्यक्ता अरयो यैः अष्ट दश द्वौ च एवं विंशतिम् । 'च'शब्दो॰ एते सम्मेतपर्वते वन्दिताः । परमार्थेन—न उपचारेण । 'निष्ठितार्थाः' ।

५ त्यक्ता अरयो यैः 'चत्तारि'पदस्य भवति अर्थश्च ।
अष्ट दश द्वौ च मिलिताम् जघन्यपदे विंशतिं वन्दे ॥

६ त्यक्ता अरयो यैः 'क्रियमाणे कृते' इति वचनात् केऽरयः ? अष्ट कर्माणि । कैः 'त्यक्ताः' दशद्विभेदैर्भवन्ति । जघन्यजघन्यपदभरतैरावतदशकविहरमाणैकैकजिनभेदैः ।

चः पूरणे । उर्वीशाः–नृपाः । शेषं प्राग्वत् । [1]चत्तारि जम्बूद्दीवे, अट्ठ धायईसंडे, दस नवरं दोरहिआ पुक्खरद्धे, एवं २० जिणा संपइ जहन्नओ विहरमाणा वंदिज्जंति । जं संपइ उक्कोसओ वा । चउशब्दौ प्राग्वत् । 'परमट्ठनिट्ठिअट्ठा' भूतवद् भाविन्युपचारात् सिद्धाः–प्रख्याताः भव्यैरुपलब्धगुणसन्दोहत्वात् । गाथार्थस्तु स्पष्ट एव ॥ ५ ॥

[2]चत्तारि जहापुव्विं दस अट्ठगुणा असी हवइ एवं ।
पुण वि असी दोगुणिआ सट्ठिसयं नमह विजएसुं ॥ ६ ॥

[3]अट्ठ दसहिं गुणिआ ८०, सा दोहिं गुणिआ १६० सट्ठिसयं, सेसं पुव्वं व । एवं सव्वविजयविहरमाण जिणा वंदिज्जंति ॥ ६ ॥

[4]चउअट्ठ भवे बारस ते दसगुणिआ सयं भवे वीसं ।
ते दोहिं गुणिज्जंता दुन्नि सया हुंति चालीसा ॥ ७ ॥
भरहेरवएसु जिणा चउद्सवीसी उ वट्टमाणा उ ।
मणवयकाएण तिहा तेसिं पणमामि भत्तीए ॥ ८ ॥

[5]चत्तारि अट्ठमेलिया १२, ते दसगुणिआ १२०, ते दोगुणिआ २४०, एआ दस चउवीसीओ दससु भरहेरवएसु ५–५–वंदिज्जंति ॥ ७–८ ॥

[6]चत्तारि जहापुव्विं अट्ठ दस (य) दो हवंति अट्ठार ।
वीसस्स य चउभागो तेवीसं विमलगिरि वंदे ॥ ९ ॥

त्यक्तारयः [7]अट्ठ दसमेलिताः १८, दोअत्ति द्योपाः–इन्द्रास्तैर्वन्दिताः । चउहिं वीसं भइआ

---

१ छाया—
चत्वारो जम्बूद्वीपे अष्टौ धातकीखण्डे दश नवर द्विरहिताः पुष्करार्धे । एव विंशतिर्जिनाः सम्प्रति जघन्यतो विहरन्तो वन्द्यन्ते । यत् सम्प्रति उत्कृष्टतो वा ।

२ त्यक्तारयो यथापूर्वं दश अष्टगुणा अशीतिर्भवत्येवम् ।
पुनरपि अशीतिर्द्विगुणिता षष्टिशतं नमत विजयेषु ॥

३ अष्ट दशभिर्गुणिता अशीति· सा द्वाभ्यां गुणिता षष्टिशतम्, शेषं पूर्वमिव । एवं सर्वविजयविहरज्जिना वन्द्यन्ते ।

४ चत्वार अष्ट भवेयुर्द्वादश ते दशगुणिता· शताधिका भवेद् विंशति· ।
सा द्वाभ्यां गुण्यमाना द्वे शते भवत चत्वारिंशत् ॥
भरतैरावतेषु जिना चतुर्दशविंशतय एव वर्तमानास्तु ।
मनोवच·कायै त्रिधा तान् प्रणमामि भक्त्या ॥

५ चत्वारोऽष्टमिलिता· १२, ते दशगुणिता· १२०, ते द्विगुणिता· २४०, एता दश चतुर्विंशतयो दशसु भरतैरावतेषु वन्द्यन्ते ।

६ त्यक्तारयो यथापूर्वं अष्ट दश यतो भवन्ति अष्टादश ।
विंशतेश्च चतुर्भागस्त्रयोविंशतिं विमलगिरौ वन्दे ॥

७ अष्ट दशमिलिताः १८, 'दो अ' इति... । चतुर्भि· विंशतिर्भक्ता लब्धाः पञ्च ।

छट्ठा पण, ते १८ मेलिया २३, [1]'एए सेत्तुंजे वंदिज्जंति । परा–प्रकृष्टा मा–लक्ष्मीः समवसरणादिका यत्र स्थिताः समवसृता इत्यर्थः । निट्ठिअट्ठा–सम्पन्नफला, केवलाख्या, सिद्धा शास्तारोऽभूवन् मङ्गलभूताश्च । 'षिधौ शास्त्रमाङ्गल्ययोः' । 'तेवीसंति' [2]''सिरिनेमिनाहवज्जं जत्थ' इति ( शत्रुञ्जयकल्पे ) उक्तत्वात् ॥ ९ ॥

[3]चउ उड्ढलोअपडिमाऽणुत्तर १ गेविज्ज २ कप्प ३ जोइसए ।
अट्ठेव वंतरेसु ८ दस पडिमा भवणवासीसु १० ॥ १० ॥
धरणियलम्मि दुन्नि अ सासयरूवा असासया ते ऊ ।
इअ चउवीस पडिमा वंदे तिअलोअमज्झम्मि ॥ ११ ॥

[4]अणुत्तरेसु १ गेविज्जेसु २ कप्पेसु ३ जोइसिएसु ४ एव उड्ढं चत्तारि भेआ । अहो अ वंतरेसु अट्ठ भेआ ८ । दसभेएसु भवणवासीसु १० । महिअलि सासय-असासयभेदा दो २ । एवं तिहुयणजिणायणेसुं चउवीसं जिणा वंदिज्जंति ।

जहा पुण जंबूदीवे कुलगिरि ६, कुरु २, मेरु १६, चूला १, गजदन्त ४, वक्षस्कार १६, दिग्गज ८, ह्रद १६, काञ्चनगिरि २००, महानदी १७, वैताढ्य ३४, वृत्तवैताढ्य ४, कुण्ड १६, यमक ४, तरु २३४; सर्वमीलने ६३५ । धातक्यां ते द्विगुणाः इषुकार २ युताः १२७२ । पुष्करार्धे १२७६ मानुष्योत्तरस्य ४ क्षेपात् । [5]मणुअलोगबाहिं नन्दीश्वरे ५२, राजधानी ३२, कुण्डल ४, रुचक ४; एवं सर्वं ९२ । एवं तिर्यग्लोके ६३५,१२७२, १२७६, ९२; सर्वमीलने ३२७५ । यदि च राजधानीषु १६ विवक्ष्यन्ते तदा तिर्यग्लोके ३२५९ स्युः ।

'संसारदावानल०' इति स्तवने तु तिर्यग्लोके ४६३ एवोक्ताः सन्ति, तथाहि–नन्दीश्वरे ५२, कुण्डल ४, रुचक ४, मनुष्योत्तरे ४, इषुकार ४, मेरुषु ८५, गजदन्त २०, कुरुद्रह १०, वर्षधर ३०, वक्षस्कार ८०, वैताढ्य १७०; एवं ४६३ । तथा च अधः ७७२००००००, ऊर्ध्वं ८४९७०२३, तिर्यग् ३२५९; मीलने सङ्ख्या ८५७००२८२ स्यात् । यदि च ४६३ गण्यन्ते तदा ८५६९७४८५ । इय त्रैलोक्ये जिनभवनसङ्ख्या स्यात् । [6]अन्न च ठाइ सयमेव तहा तहा नियनिय संखाए आणिऊण वंदियव्वाइं । एवं अणेगहा इत्थ अहिगारे जिणा वंदिज्जंति ।

---

१ एते शत्रुञ्जये वन्द्यन्ते ।

२ श्रीनेमिनाथवर्जं यत्र ।

३ चतुर्धा ऊर्ध्वलोकप्रतिमा अनुत्तरग्रैवेयककल्पज्योतिष्केषु ।
अष्टैव व्यन्तरेषु दश प्रतिमा भवनवासिषु ॥
धरणीतले द्वे च शाश्वताऽशाश्वता ते तु ।
इति चतुर्विंशति प्रतिमा वन्दे त्रिलोकमध्ये ॥

४ अनुत्तरेषु ग्रैवेयकेषु कल्पेषु ज्योतिष्केषु एवमूर्ध्वं चत्वारो भेदाः । अधश्च व्यन्तरेषु अष्टौ भेदाः । दशभेदेषु भवनवासिषु । महीतले शाश्वताशाश्वती भेदौ द्वौ । एवं त्रिभुवनजिनायतनेषु चतुर्विंशतिर्जिना वन्द्यन्ते । यथा पुन जम्बूद्वीपे ... ।

५ मनुष्यलोकबहिः ।

६ अन्यानि स्थानमेव तथा तथा निजनिजसङ्ख्यया आनीय वन्दितव्यानि । एवमनेकप्रकारे अधिकारे जिना वन्द्यन्ते ।

[1]चत्तारि अट्ठगुणा ३२, ते दसगुणिया ३२०, ते दोहिं गुणिआ ६४०, वीस चउहिं भइआ लद्धा ५, तेहिं रहिआ ६३५, एए जम्बूदीवे। एवं अग्रतोऽपि ॥ १०-११ ॥

[2]अट्ठ दस दो वि अट्ठार १८ चउगुणा ते बहुत्तरी होइ।
भूअभविस्सा संपइ तिअ चउवीसीण वंदामि ॥ १२ ॥

[3]अट्ठ दसमेलिया १८, चउहिं गुणिया ७२, एएहिं तिण्णि चउवीसीओ भरहेऽतीणागयवट्ट-माणातिगरूवा वंदिज्जंति ॥ १२ ॥

[4]चत्तारि ४ य पढमपए अट्ठट्ठगुणा य हुंति चउसट्ठी ६४।
दस दसगुणिया य सयं १०० दो जुअ सव्वेवि सत्तरिसयं १७०॥१३
उक्किट्ठकालसमए भरहेरवयमहाविदेहेसुं।
पन्नरसकम्मभूमिसु समकालुप्पण्ण वंदामि ॥ १४ ॥

[5]अट्ठ अट्ठहिं गुणिया ६४, दस दसहिं गुणिआ १००, तओ चत्तारि ४ दो २ अ सवे मिलिया १७० सत्तरिसयं, एए पन्नरसकम्मभूमिसु उक्कोसओ विहरमाणा वंदिज्जंति ॥१३॥१४॥

जो एवं तिक्कालं वंदइ देविंदवंदिअजिणिंदे।
सो पावइ णिच्चसुहं निव्वाणं जगगुरू बिंति ॥ १५ ॥

[6]एवमिति पदेन अट्ठ दसगुणिआ ८०, ते चेव दसमेलिआ ९०, चउहिं गुणिआ ३६०, एएण पनरस चउवीसीओ पंचसु भरहेसु कालत्तयसंभवाओ वंदिज्जंति। तथा एए चेव तिन्नि (चेव) पगारा जहा एगंमि भरहे कालत्तएण चत्तारि अट्ठमेलिया १२, ते दसगुणिआ १२०, एए पंच चउवीसीओ ५ भरहेसु वट्टमाणा वंदिज्जंति।

---

१ चत्वारोऽष्टगुणिता. ३२। ते दशगुणिता. ३२०, ते द्वाभ्यां गुणिता. ६४०, विंशतिश्चतुर्भिर्भक्ता लब्धाः ५, तै रहिता ६३५। एते जम्बूद्वीपे।

२ अष्ट दश द्वयेऽपि अष्टादश चतुर्गुणास्ते द्वासप्ततिर्भवति। भूतभविष्यत्सम्प्रति(तीना) तिस्र चतुर्विंशतीनां वन्दे।

३ अष्टौ दशमिलिताः १८, चतुर्भिर्गुणिताः ७२, एतैस्तिस्रश्चतुर्विंशतयो भरतेऽतीतानागतवर्तमानास्त्रिकरूपा वन्द्यन्ते।

४
चत्वारि च प्रथमपदेऽष्टाष्टगुणाश्च भवन्ति चतुःषष्टिः।
दश दशगुणिताश्च शत द्वाभ्यां युत सर्वेऽपि सप्ततिशतम् ॥
उत्कृष्टकालसमये भरतैरावतमहाविदेहेषु।
पञ्चदशकर्मभूमिषु समकालोत्पन्नान् वन्दे ॥

५ अष्टावष्टभिर्गुणिता ६४, दश दशभिर्गुणिताः १००, ततश्चत्वारः ४ द्वौ २ च सर्वे मिलिताः १७० सप्ततिशतम्। एते पञ्चदशकर्मभूमिषूत्कृष्टतो विहरन्तो वन्द्यन्ते।

य एवं त्रिकालं वन्दते देवेन्द्रवन्दितजिनेन्द्रान्।
स प्राप्नोति नित्यसुखं निर्वाणं जगद्गुरवो ब्रुवन्ति ॥

६ अष्टौ दशगुणिताः ८०, त एव दशमिलिता. ९०, चतुर्भिर्गुणिताः ३६०। एतेन पञ्चदश चतुर्विंशतयः पञ्चसु भरतेषु कालत्रयसम्भवा वन्द्यन्ते। तथा एत एव त्रय· प्रकारा यथैकस्मिन् भरते कालत्रयेण चत्वारोऽष्ट-मिलिता. १२, ते दशगुणिता. १२०, एता. पञ्च चतुर्विंशतय. ५ भरतेषु वर्तमाना वन्द्यन्ते।

'पंचसु भरहेसु कालतिगेण पनरचउवीसीसु ३६०, ते सवे ७२,१२०,३६०; दोहिं गुणिआ १४४,२४०,७२० चउवीसी किज्जति।

आया ६,१०,२० चउवीसीओ। ताओ कमसो भणियत्थेण समग्गं भरहेरवएसु भदिज्जंति। इत्याद्यर्थाः सर्वेऽपि स्वस्वबुद्धिप्रकर्षलभ्याः समूहीताः ॥ १५ ॥

पूर्वविदेहोत्तरार्द्धे पूर्वलवणाब्धिसमीपे ८ पुष्कलावतीनामविजये श्रीसीमन्धरः १, अपर विदेहोत्तरार्द्धे पश्चिमसमुद्रसमीपे २५ वप्रविजये युगन्धरः २, एवं पूर्वापरविदेहदक्षिणार्धयोः ९ वत्स २४ नलिनवतीविजययोः बाहुस्वामि ३ सुबाहु ४ नामानौ ॥

धातकीखण्डे पूर्वदिग्विदेहे पूर्वानुक्रमेण सुजात १ स्वयम्प्रभ २ ऋषभानन ३ अनन्तवीर्याः ४ ॥ ८ ॥

पश्चिमदिक्स्थितविदेहे सूरप्रभ १ विशालस्वामि २ वज्रधर ३ चन्द्राननाः ४=१२ ॥

पुष्करार्धे चर्थेन बाहु १ भुजग २, ईश्वर ३, नेमिप्रभ ४ नामानः ४=१६। विश्वसेन १ महाभद्र २ देवयशो ३ ऽजितवीर्य ४ नामानश्च ४=२०। तत्र स्थितसकललोकानां प्रतिबोधं विदधाना विभ्रमन्ते। तेषां लाञ्छनानि, यथा—

"वसह १ गय २ हरिण ३ मक्कड ४ रवि ५ चंद ६ मियारि ७ हत्थि ८ तह चंदे ९।
सूरे १० संखे ११ वसहे १२ पउमे १३ पउमे १४ अ ससि १५ सूरा १६ ॥
वसहो १७ हत्थी १८ चंदे १९ सूरे २० (एए) कमसु लंछणया।
इय विहरमाणजिणवरवीसा सयमेव नायव्वा ॥"

इति विहरमाणसीमन्धरादि २० लाञ्छननामानि।

एवं चत्तारि अट्ठदसेतिगाथाविवरणभावना कार्येति ॥

भट्टारकपुरन्दर-पूज्याराध्य-श्रीरत्नमण्डनसूरिशिष्य विद्वत्समाजमण्डनपूज्यपं०आगममण्डन गणिशिष्याणुसत्यमण्डनेन लिखितम्। 'धा(सो)मी'ग्रामे। सोमवासरे। शुभं भवन्तु(तु) ॥



१ पञ्चसु भरतेषु कालत्रिकेण पञ्चदशचतुर्विंशतिषु ३६ ते सर्वे ७२ १२ ३६, द्वाभ्यां गुणिताः १४४, २४ , ७२ चतुर्विंशतयः क्रियन्ते।

आद्याः ६ १ २ चतुर्विंशतयः। ताः क्रमशो भणितार्थेन समग्रं भरतैरावतेषु भण्यन्ते।

२ वृषभो गजो हरिणो मर्कटो रविश्चन्द्रो मृगारिर्हस्ती तथा चन्द्रः।
सूर्यः शङ्खो वृषभः पद्मं पद्मं च शशी सूर्यः ॥
वृषभो हस्ती चन्द्रः सूर्यः क्रमशु लाञ्छनकाः।
इति विहरज्जिनवरविंशतिः स्वयमेव ज्ञातव्या ॥

# श्रीजैनधर्मवरस्तोत्रगतसाक्षिभूतसंस्कृतप्राकृतपाठानां वर्णानुक्रमेण सूची ।

अ



१ इदं पद्यं विद्यते उपदेशतरङ्गिण्यां (पृ० १६३)।

१ उपदेशतरङ्गिण्यां पृ ११७ ।

## वर्णानुक्रमेण सूची

१ प्रेक्ष्यतां ज्ञानसारस्य १०१तम-पत्राङ्कः।

१ सम्पुस्यतां भाद्ध०सूत्र०वृत्तिं( पृ० १५० )गतं पद्यम् ।

१ [illegible] (पृ० १११)। २ [illegible] (पृ० ११०)।

## वर्णानुक्रमेण सूची



१ श्राद्ध० वृत्तौ पृ० १८९। २ उपदेशतरङ्गिण्यां पृ० १३२। ३ उपदेशतरङ्गिण्यां पृ०

य

## वर्णानुक्रमेण सूची

१ चतुर्थचरणोऽयम्, न तु प्रथमः ।

ष



ह

# ग्रन्थनगरनरन्यायपर्वादिविशिष्टनामसूची